**Beginning.** श्रीहरिः शरणम् । परार्थानुमानप्रयोजकत्वेन क्लृप्तस्य न्यायादेरवयवानां तया प्रसङ्गसङ्गत्या तन्निरूपयितुमाह तत्रेति । परार्थं परप्रतिपिपादयिषाप्रयोज्यं परो ऽत्र विप्रतिपन्नः न तु मीमांसकमात्रं । तेनाप्तेन परप्रतिपिपादयिषयोद्दीरितेऽपि न्यायत्वमित्यवधेयं । न्यायसाध्यमिति न्यायजन्यज्ञानप्रयोज्यमित्यर्थः । अवयवान् विभजते प्रतिज्ञेति यद्यप्यवयवसामान्यं निरूप्यैव तद्विभागो युक्तस्तथापि इत्यादि प्रतिज्ञादिपञ्चावयवोपेतस्यैवाव लक्ष्यत्वं ।

**End.** ननु कण्ठकोद्धारवाक्ये वाक्यत्वसत्त्वात्तस्य न्यायत्वं स्यादतः कण्टकेति तथाच तेनापि न्यायत्वपर्य्याप्त्यधिकरणत्वस्य तद्व्यतिरेकेण सत्वान्न तस्य न्यायघटकत्वमिति भावः । अत्र प्रतिज्ञापक्षे हेतूदाहरणमात्रको न्याय इति मीमांसकाः । उदाहरणोपनयमात्रमिति बौद्धाः । प्रतिज्ञामात्रमिति नैयायिकैकदेशिनः । असाधकतानुमाने प्रतिज्ञाहेतुमात्रमिति केचित् । तद्देवोपनयसहितमित्याचार्य्याः ॥ ०

**Colophon.** इति कणादतर्कवागीशभट्टाचार्य्यकृतावयवटिप्पनी सम्पूर्णा ॥ * ॥

**विषय:** । अनुमानखण्डान्तर्गतावयवव्याख्या ।

---

**No. 15.** अशौचदीपिका । By श्यामसुन्दरः. Substance, country-made paper, $10 \times 2\frac{1}{2}$ inches. Folia, 17. Lines, 5 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur, Mayamansing Paṇḍita Candra kánta Tarkálaṇkára. Appearance, old Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ! अथ श्रीश्यामसुन्दरभट्टाचार्य्यकृताशौचदीपिका लिख्यते ।

অথ গর্ভস্রাবাশৌচসংক্ষেপঃ ।—

যে স্ত্রীর গর্ত্তস্রাব হয় তাহার প্রথম মাসেতে এক দিন দ্বিতীয় মাসে ২ দুই দিন তৃতীয় মাসে ৩ তিন দিন । ইত্যাদি।

**End.** ভিন্ন গোত্রপোষ্যপুত্রের জনক জননী এবং জনক সপিণ্ড মরণে অশৌচ নাই সপিণ্ড পোষ্যপুত্র হইলে পরস্পর সপিণ্ডের সহিত জনক মরণে সম্পূর্ণাশৌচ হয় ইতি ।*॥

**বিষয়:** । গর্ভস্রাবজননমরণাদ্যশৌচনিরূপণম্ ।

---

**No. 16.** अशौचप्रकाशः By चतुर्भुजः. Substance, country-made paper, 14 × 2½ inches. Folia, 17. Lines, 6 on a page. Extent, 525 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhálpárá, Rámatárana Ṭhákur. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय। यत्नाद्रावचनादिकं परिचिनो ज्ञात्येषु हली
भट्टाचार्य्य चतुर्भुजोऽच्युतपदद्वन्द्वारविन्दं मुदम्।
वन्दित्वा हनुमानसस्य सुहृदोऽशौचप्रकाशं करो-
त्युग्रग्रामकुलोद्भवो भवजनोद्भूतोद्भवाद्यचितं ॥ (?)
अग्निहोत्रादिविहितब्राह्मणादिचतुर्वर्णेषु जननमरणे चैव यथाक्रमं ज्ञातीनां
दशाहं पञ्चदशाहं मासमेकमशौचम्॥ इत्यादि।

**End.** अपितत्वात् शेषो नास्ति॥

विषयः। जननमरणाद्यशौचनिरूपणं। दाहादिनिरूपणम्। मृतमरणादिनिरूपणञ्च॥

---

**No. 17.** अष्टमङ्गला। By रामकिशोरचक्रवर्त्ती. Substance, country-made paper, 16 × 3 inches. Folia, 18. Lines, 10 on a page. Extent, 540 çlokas. Character, Bengali. Date, ? Place of deposit, Çáktá, District Dháká Paṇḍita Trilocana Tarkálaṇkár. Appearance, new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय।
शिवं रामकिशोरेण प्रणम्यार्थः प्रकाश्यते।
आख्यातात्ष्टमपादीयदौर्गसूत्रेर्यथामति॥
पदान्ते। पदान्ते वर्त्तमानानामिति। नन्वन्तशब्दोऽवयववचनः। तथाच
पदान्तानामवयवा एव धुटः। तत्कथं ते पदान्ते वर्त्तन्ते इति। सत्यमन्त-
शब्दोऽयं धर्म्मवृत्तित्वेन पदान्तत्वे वर्त्तमानानां धुटामित्यर्थः। तथाच
आदिमध्यान्तशब्दा धर्म्मिणि धर्म्मे च वर्त्तन्ते इति मतमिति गोपीनाथः।
इत्यादि।

**End.** प्रतिषेधस्तु स्थानिवद्भावादेव न पदान्त इत्यादिना परिभाषायायानित्यत्वं
मन्तव्यमिति तेनाभ्यासं प्रतिषेधार्थं न वक्तव्यमिति॥

**Colophon.** इति श्रीरामकिशोरचक्रवर्त्तिकृतायामष्टमङ्गलाटीकायामियत्तावच्छिन्नत्वेना-
ष्टमः पादः समाप्तः।

विषयः। कातन्त्राख्यातात्ष्टमपादीयदौर्गसिंहवृत्ते र्गूढार्थप्रकटनम्।

---

**No. 18.** आकाङ्क्षापूर्व्वपक्षरहस्यम् । By मथुरानाथः. Substance, country-made paper, 17 × 3½ inches. Folia, 7. Lines, 8 on a page. Extent, 294 çlokas. Character, Bengali. Date, ? Place of deposit, Dhánuká, Pálang Post office, District Faridpur, Paṇḍita Rajaní kánta Tarkaratna. Appearance old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । प्रसङ्गादाकाङ्क्षां निरूपयितुं प्रक्रमते अथ केयमिति आकाङ्क्षादिकं सहकारीति यदुक्तं तत्राकाङ्क्षा केत्यर्थः अविनाभाव इति । भावः सत्त्वं तद्भाव इत्यर्थः तथाच तत्पदार्थे तत्पदार्थाभाव-वद्वृत्तित्वाभाववत्तत्पदार्थे तत्पदार्थाकाङ्क्षेति भावः । अस्ति चायं घट इत्यादौ इदम्पदार्थे घटपदार्थाभाववद्वृत्तित्वाभावः इति इदम्पदार्थे घट-पदार्थाकाङ्क्षा । इत्थित्वं तादात्म्यसम्बन्धेन बोध्यं अन्यथा चैत्रः पचति रथो गच्छति इत्यादौ चैत्रपदार्थस्य पचति पदार्थसाकाङ्क्षता न स्यात् चैत्रादौ ... ... पदार्थाभाववद्वृत्तित्वाभावाभावात् । इत्यादि ।

**End.** अजनितेत्यादेरुक्तप्रयोजनं दूषयति नयाचामिति राजपुत्रपुरुषाचामित्यर्थः । तुल्यवत् एकदा प्रथमं अजनितान्वयबोधदशायां यतः तात्पर्य्यधीविरचितः अर्थेऽपि जनितान्वयबोधदशायामपि पुरुषेण ... ... ... ... ... अर्थमिति नोक्तप्रयोजकमित्यर्थः यथाश्रुतमनु सङ्गच्छते घटमानयेत्यादौ धारावाहिकशाब्दबोधवारणायाजनितान्वयबोधकत्व ... ... स्यावश्यक-तया वैयर्थ्याभावात् । ... ... ... ... ... ... ... ... ... ... अथास्तु धारावाहिकप्रत्यक्षस्येव धारावाहिकशाब्दबोधस्याभ्युपगमात् वैयर्थ्य-मिति भावः अत एव सिद्धान्तलक्षणे जनितान्वयबोधेऽतिव्याप्तिवारणाय विशेषणं कल्पतो ग्रन्थकृता नोक्तमित्याहुः ।

**Colophon.** इत्याकाङ्क्षापूर्व्वपक्षरहस्यम् ॥

**विषयः ।** शाब्दबोधे शब्दज्ञानं यदि निरपेक्षकारणं भवति तदा घटः कर्म्मत्वमानयनं कृतिरिति शब्दात् घटकर्म्मताकबोधं कथं न जायते अतः आकाङ्क्षाज्ञानस्य शब्दज्ञानसह-कारित्वमवश्यमेव वाच्यमित्यादिविचारः ॥

---

**No. 19.** आख्यातटीका । Substance, country-made paper, 12 × 2½ inches. Folia, 72 Lines, 7 on a page. Extent, 2,520 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur, Mayamansing Paṇḍita Candra kánta Tarkálaṇkára. Appearance, old. Prose. Correct.

**Beginning.** श्रीमत्परमात्मने नमः ॥ अथ परस्मै । इह यद्यपि प्रमाणमर्थ्येनशब्दा-
षिकारेष्वय शब्दो वर्त्तते तथापि आत्मनर्थांर्थे एव प्रयुज्यते ।

ननु श्रीमपूर्व्वज इति माघस्य स्वलितमिति । केचित्तु (अर्पयमाना)
श्रीमादि ( ) संप्रयुक्ता इत्येवार्थो विवक्षित इत्याहुः ॥ * ॥ इत्यादि ।

**Colophon.** इति तृतीयपादः समाप्तः ॥

**विषयः** । कलापोक्तधातुरूपादिनिरूपणम् ।

---

**No. 20.** आख्यातपञ्जिकाव्याख्या। By नरहरिः । Substance, country-made paper, 17 × 4 inches. Folia, 83. Lines, 7 on a page. Extent, 1,162 çlokas. Character, Bengali. Date, ? Place of deposit, Vidyákúṭa. District Tippera, Paṇḍita Çaraccandra Vidyálaṇkár. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा गौरीपदद्वन्द्वं श्रीमन्नरहरिः सुधीः ।

आख्यातपञ्जिकाव्याख्यां तनोति भ्रान्तिशान्तये ॥

टी अथ । ननु अथेत्यादि इत्यिग्रन्थः कथं संगच्छते तथापि । इत्यादि ।

**End.** पुराद्दिसेत्यत्र प्रपञ्चितमिति ।

खण्डितशेषत्वात् समाप्तिसूचकं वाक्यं नास्ति ।

**विषयः** । कातन्त्रव्याकरणस्य त्रिलोचनदासकृतपञ्जिकाया व्याख्यानम्

---

**No. 21.** आख्यातवादटिप्पनी By मथुरानाथतर्कवागीशः. Substance, country-made paper, 16 × 3 inches. Folia, 32. Lines, 8 on a page. Extent, 2,304 çlokas. Character, Bengali. Date, ? Place of deposit, Vajrayoginí, District Dháká, Paṇḍita Çaçibhúṣaṇa Smṛitiratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ शिवो जयति ।

कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपंक्तिः ।

मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥

श्रीमता मथुरानाथतर्कवागीशधीमता ।

आख्यातशक्तिवादस्य क्रियते विवृतिः शुभा ॥

आख्यातमर्थं निरूपयति आख्यातस्येति । आख्यातं यत्नावच्छिन्नशक्ति-
तारूमित्यर्थः । तेन वक्ष्यमाणचैत्रोऽयं वैयधिकरण्यं । आख्यातत्व

षट्कैतविशेषणसम्बन्धेनाख्यातपदवत्त्वं न तु जातिः । त्विाद्विना साङ्कर्य्यात् मानाभावाच । एकतावच्छेदकन्तु न तत् किन्तु प्रत्येकं त्विाद्विकमेव । अन्यथा आख्यातत्वप्रकारेणाख्यातपदज्ञानं ज्ञायां कञ्चाप्याकरणानभिज्ञानां त्विाद्विनाज्ञानात् शाब्दबोधमानस्य प्रतिबन्धकान्यत्वप्रसङ्गात् । इत्यादि ।

**End.** कर्म्माख्यातस्य फलमेवार्थः । नाद्यमेति । वर्त्तमानत्वादिविशिष्टस्येत्यर्थः । अनुभवत्वारसिकत्वेन विशेषणीयः । तेन चषचया नबानुभव इति निरस्तं । इदमुपलक्षणं । यत्नत्वमपेक्ष्याश्रयत्वाद्गेर्गुणत्वादित्यपि द्रष्टव्यमिति संक्षेपः ॥

**Colophon.** इति श्रीमथुरानाथतर्कवागीशविरचिताख्यातवादटिप्पनी समाप्ता ।

विषयः । आख्यातशक्तिवादाख्यग्रन्थस्य विवृतिः ।

---

**No. 22.** आगमतत्त्वविलासः By रघुनाथतर्कवागीशः Substance, country-made paper, 19 x 4 inches. Folia, 427 (the first page is wanting). Lines, 8 on a page. Extent, 13,237 çlokas. Character, Bengali. Date, ? Place of deposit Májpárá, District Dháká, Babu Rásavihári Ráya. Appearance, fresh. Prose and verse. Correct.

**Beginning.** ॐ गुरुभ्यो नमः ।

ॐ नमः श्रीमते तस्मै गुरुदेवाय योगिने ।
अशेषासारसंसारसाराय शिवरूपिणे ॥
स्वगुरोश्चरणसरोजं
शिरसि सरसिजे स्मरन्मुहुः श्रीमान् ।
आगमतत्त्वविलासं
रचयति रघुनाथतर्कवागीशः ॥
तत्र यतिक्रमनिबन्धभुवोऽपराधा
ये तान् क्षमध्वमखिलान् मम देवतानि ।
यद्वृ यदिह दर्शनिच संविचितं ममास्ते
तत्तद्विशोधयत धीरतमा नमो वः ॥
स्वतन्त्रतन्त्रं फेत्कारीतन्त्रमुत्तरतन्त्रकम् ।
नीलतन्त्रं वीरतन्त्रं कुमारीतन्त्रमुत्तमम् ॥
कालीनारायणीतन्त्रे तारिणीतन्त्रमुत्तमम् ।
कलातन्त्रञ्च समयातन्त्रं भैरवतन्त्रकम् ॥
भैरवीत्रिपुरातन्त्रे वामकेश्वरतन्त्रकम् ।

कुक्कुटेश्वरतन्त्रञ्च मातृकातन्त्रमेव च ।
सनत्कुमारतन्त्रञ्च विशुद्धेश्वरतन्त्रकम् ।
सम्मोहनाख्यतन्त्रञ्च गौतमीयञ्च तन्त्रकम् ॥
बृहद्गौतमीयतन्त्रं भूतभैरवतन्त्रकम् ।
चामुण्डापिङ्गले तन्त्रे वाराहीतन्त्रकं तथा ॥
मुण्डमालाख्यतन्त्रञ्च योगिनीतन्त्रमुत्तमम् ।
मालिनीविजयं तन्त्रं तन्त्रं स्वच्छन्दभैरवम् ॥
महातन्त्रं शक्तितन्त्रं तन्त्रं चिन्तामणिं परम् ।
उन्मत्तभैरवं तन्त्रं त्रैलोक्यसारतन्त्रकम् ॥
विश्वसाराख्यं तन्त्रं तथा तन्त्रामृताभिधम् ।
महाफेत्कारीतन्त्रञ्च वायवीयञ्च तोडलम् ॥
मालिनीललितातन्त्रे त्रिशक्तितन्त्रकं तथा ।
राजराजेश्वरीतन्त्रं महामोहस्वरोत्तरम् ॥
गवाक्षतन्त्रं गान्धर्वं तन्त्रं त्रैलोक्यमोहनम् ।
हंसमाहेश्वरं हंसपरमेश्वरतन्त्रकम् ॥
कामधेन्वाख्यतन्त्रञ्च तन्त्रं वर्णविलासकम् ।
मायातन्त्रं तन्त्रराजं कुब्जिकातन्त्रमुत्तमम् ॥
विज्ञानलतिकां लिङ्गागमं कालोत्तरं तथा ।
ब्रह्मयामलसंहितां तद्वत् श्रीविनायकसंहिताम् ॥
अगस्त्यसंहितां पुण्यां नन्दिकेश्वरसंहिताम् ।
वशिष्ठसंहितां दक्षसंहितां मनुसंहिताम् ॥
ब्रह्मणः संहितां दिव्यां सनत्कुमारसंहिताम् ।
कुलानन्दसंहिताञ्च वैशम्पायनसंहिताम् ॥
नृसिंहतापनीयञ्च दक्षिणामूर्त्तिसंहिताम् ।
ब्रह्मयामलकञ्चादियामलं वक्रयामलम् ॥
बृहद्यामलकं सिद्धयामलं कल्पसूत्रकम् ।
मत्स्यसूक्तं कल्पसूक्तं कामराजं शिवागमम् ॥
उड्डीशञ्च कुलोड्डीशमुड्डीशवीरभद्रकम् ।
भूतडामरकं तद्वत् डामरं यक्षडामरम् ॥
कालिकाकुलसर्व्वस्वं कुलसर्व्वस्वमेव च ।
कुलचूडामणिं दिव्यं कुलसारं कुलार्णवम् ॥

कुलप्रकाशं वाशिष्ठं शिवसारस्वतं तथा ।
योगिनीहृदयं कालीहृदयं मातृकार्णवम् ॥
योगिनीजालकुलकं तथा लक्ष्मीकुलार्णवम् ।
तारार्णवं चन्द्रपीठं मेरुयन्त्रं चतुःशतीम् ॥
तत्त्वबोधं महोग्रञ्च स्वच्छन्दसारसङ्ग्रहम् ।
ताराप्रदीपं सङ्केतचन्द्रोदयमतिस्फुटम् ॥
षट्त्रिंशत्तत्त्वकं लक्षनिर्णयं त्रिपुरार्णवम् ।
विष्णुधर्मोत्तरं मन्त्रदर्पणं वैष्णवामृतम् ॥
मानसोल्लासकं पूजाप्रदीपं भक्तिमञ्जरीम् ।
भुवनेश्वरीपारिजातं प्रयोगसारमुत्तमम् ॥
कामरत्नं क्रियासारं तथैवागमदीपिकाम् ।
बृहच्छ्रीक्रमसंग्रहञ्च तथा श्रीक्रमसंग्रहकम् ॥
नवरत्नेश्वरं सोमभुजगावलिसंज्ञकम् ।
शिवदाम्नायेश्वरं चन्द्रं तां सर्वेशविमर्षिणीम् ॥
मन्त्रमुक्तावलीं तन्त्रकौमुदीं मन्त्रकौमुदीम् ।
मन्त्रतन्त्रप्रकाशाख्यं श्रीरामार्चनचन्द्रिकाम् ॥
शारदातिलकं ज्ञानार्णवं सारसमुच्चयम् ।
कल्पद्रुमं ज्ञानमालां पुरश्चरणचन्द्रिकाम् ॥
श्यामोत्तरकं तत्त्वसागरं सारसङ्ग्रहम् ।
देवप्रकाशिनीं तन्त्रार्णवञ्च क्रमदीपिकाम् ॥
तारारहस्यं श्यामाया रहस्यं तन्त्ररत्नकम् ।
तन्त्रप्रदीपं ताराया विलासं विश्वमातृकाम्
प्रपञ्चसारं तं तन्त्रसारं रत्नावलीं तथा ।
एवं बहुतरमतं मन्त्राणां स्फुटमागमे ॥
कल्पान् कुमारीकल्पादीन् श्रुतीश्चोपनिषद्गणम् ।
ज्योतिःस्मृतिपुराणानि पाणिनीयादिकोषकम् ॥
गुरूपदेशयुक्तिभ्यां विविच्यात्मकस्य च ।
गुरुवाक्य मतं ज्ञात्वा साधकानां मतं तथा ॥
गुरुं नत्वा गुरुं नत्वा गुरुं नत्वा यथाविधि ।
संक्षिप्य सर्वतन्त्राणां सारमादाय निर्मितः ॥
सोमानन्दविलासोऽयं वरीवर्त्तु गृहे गृहे ।

कृष्णिशोऽथ दीक्षाया लक्षणं दक्षिणाविधिः ॥

दीक्षाया नित्यकाम्यत्वे दीक्षार्थी योगरूढ़िनः । इत्यादि ।

**End.** एतेन शिवप्रणीततया आगमशास्त्रस्य निःसन्देहफलकत्वेन सर्व्वदर्शनापेक्षया समुत्कर्षः ॥

— — — — — — — ।

शिवप्रणीतेऽथ दुरूहशास्त्रे गुरूपदेशान्निजबुद्धितोऽपि ।

मया समालोच्य यदत्र बद्धं तस्मिन् सुधीरा मुदमावहन्तु ॥

अस्मिन्नशास्त्रिनिर्म्मिते ग्रन्थरत्ने यत्नेना + नैपुणं सम्प्रणीयम् । (?)

भूयस्तत्र भ्रान्तिसन्तानशान्तेरन्तः सन्तः सन्तु सन्तोषवन्तः ॥

**Colophon.** इति नपाड़ीयश्रीरघुनाथतर्कवागीशभट्टाचार्य्यविरचिते आगमतत्त्वविलासे पञ्चमः परिच्छेदः । ॐ तत् सत् ।

**विषयः ।** अत्र प्रमाणतया उल्लिखितानां तन्त्रादीनां नामकथनम् । अथ गुरूपदेशादिविधिः । मन्त्रविचारविधिः । दीक्षाविधिः । तत्र कालाशुद्ध्यादिनिरूपणम् । चक्रभेदकथनम् । शुद्धमन्त्रविचारः । मन्त्रस्य दशसंस्कारविधिः । अक्षरनिर्णयः । मन्त्राभिधानकथनम् । लक्ष्मीबीजाभिधानकथनम् । स्त्रीबीजाभिधानकथनम् । वर्णाभिधानकथनम् । वर्गाभिधानकथनम् । बीजनिर्णयव्यवस्था । सृष्टिप्रकरणम् । प्रलयवर्णनम् । बीजार्थाभिधानम् । नाड़ीनिरूपणम् । शरीरस्थवायुनिरूपणम् । दीक्षापदार्थनिरूपणम् । अथ गुरुलक्षणकथनम् । स्वप्नलब्धमन्त्रनिरूपणम् । दिव्यलक्षणादिकथनम् । स्त्रीशूद्रयोर्दीक्षायां मन्त्रव्यवस्था । पञ्चायतन-दीक्षानिरूपणम् । देवपर्व्वकथनम् । राशिचक्रनक्षत्रचक्रादिव्यवस्था । अरिमन्त्रत्यागव्यवस्था । महाविद्यानिर्णयः । मन्त्रोपासनाविवेकः । उपासनाफलकथनम् । मन्त्रदशसंस्कारप्रकरणम् । मातृकामन्त्रक्रमकथनम् । दीक्षाप्रयोगकथनम् । मन्त्रचैतन्यप्रकरणम् । दीक्षान्तरप्रयोगकथनम् । संक्षेपदीक्षाप्रकरणम् । सर्व्वतोभद्रमण्डलविधिः । गुरुशिष्ययोः कृत्यनिरूपणम् । अथ करमालानिरूपणम् । मालाभेदक्रमः । मालासूत्रनियमादिकथनम् । मालाधारणे अङ्गुलिनियमकथनम् । मालासंस्कारादिकथनम् । विशेषतोरुद्राक्षमालाविधिः । महाशङ्खमालासंस्कारादिकथनम् । कपालपात्रशुद्धिनिरूपणम् । अथ यन्त्रसंस्कारविधिः । त्रिलोचीमुद्राक्रमकथनम् । बलिदानक्रमकथनम् । तत्र छागादिरुधिरदानव्यवस्थादिः । पूजास्थाननिरूपणम् । अष्टम्यादौ वर्ज्यावर्ज्यव्यवस्था । लताशौचव्यवस्थादिः । क्षौरादिकर्म्मविशेषव्यवस्था । देवताभेदेन वामदक्षिणाचारव्यवस्थादिः । अथ प्रातःकृत्यनिर्णयः । तत्र कालनिर्णयः । स्नानविधिः । सन्ध्याविधिः । तत्र सन्ध्याविधिविवेचनम् । विष्ण्वादिदेवतागायत्रीकथनम् । शक्त्यादिदेवतागायत्रीकथनम् । गायत्रीध्यानप्रकरणम् । अथ वस्त्रादिपरिधानविधिकथनम् । त्रिपुण्ड्रव्यवस्था । पादप्रक्षालनविधिः । कुशविधिः । आचमनविधिः । पुनराचमनविधिः । अथ आसनादि-

विधिः । सलिले आसननियमः । पूजादौ मुखनियमः । भूतशुद्धिनियमः । मातृकान्या-
सादिविधिः । प्राणायामविधिः । अर्घ्यादिस्थापनविधिः । प्राणप्रतिष्ठाविधिः । अष्टादशोप-
चारनियमः । षोडशोपचारनियमः । दशोपचारनियमः । पञ्चोपचारनियमः । द्रव्यादि-
निवेदनकालविवेचनम् । आसननियमः । पाद्यादिपात्रक्रमकथनम् । धूपनियमः । दीपप्रमाण-
कथनम् । नैवेद्यनियमः । उपचारपरिभाषा । पूजाकाले गन्धादिद्रव्यदाननियमः । प्रदक्षिण-
विधिः । नमस्कारविधिः । अथ मुद्रादिक्रमकथनम् । वाद्यनियमादिः । अथ योगाङ्गासनादि-
विधिः । यन्त्रधारणविधिः । यन्त्रलेखनद्रव्यनियमः । संक्षेपतः सर्व्वदेवनित्यपूजाविधिः ।
पञ्चायतनीयपूजाविधिः । नैमित्तिकपूजाविधिः । काम्यहोमद्रव्यनिर्णयः । अथ तर्पणविधिः ।
अथ मारणविधिः । आकर्षणविधिः । वशीकरणविधिः । विद्वेषणविधिः । उच्चाटनविधिः ।
स्तम्भनविधिः । अभिचारविधिः । षट्कर्मलक्षणकथनम् । अथ भूतोदयविधिकथनम् । भूत-
मण्डलविधिकथनम् । जपनिरूपणम् । कुल्लुकादिक्रमकथनम् । अथ दशमहाविद्यामन्त्रादि-
कथनम् । जिह्वादिशोधनविधिः । योनिमुद्रादिमन्त्रार्थनिरूपणं । मन्त्रचैतन्यनिरूपणम् ।
भूतलिपिविधिः । युगभेदेन जपादिनियमकथनम् । पुरश्चरणविधिः । कूर्मचक्रनिरूपणम् ।
पञ्चपुरश्चरणविधिः । पुरश्चरणप्रयोगकथनम् । रहस्यपुरश्चरणविधिः । वीरसाधनविधिः ।
चितादिसाधनविधिः । शवसाधनविधिः । योगिनीसाधनविधिः । मनोहरायोगिनीसाधन-
विधिः । कनकावतीयोगिनीसाधनविधिः । कामेश्वरीयोगिनीसाधनविधिः । रतिसुन्दरी-
योगिनीसाधनविधिः । पद्मिन्यादियोगिनीसाधनविधिः । योगिन्याकर्षणमुद्राक्रमकथनम् । सङ्कटा-
किन्नरीसाधनविधिः । यक्षकन्यासाधनविधिः । पिशाचादिसाधनविधिः । योगिन्यादिसाधन
कालनिरूपणम् । इष्टसिद्धिनिरूपणम् । मन्त्रसिद्धिलक्षणादिनिरूपणम् । मन्त्रदोषादोषकथनम् ।
मन्त्रदोषशान्तिविधिकथनम् । बालकमन्त्रसंस्कारविधिः । शिवाबलिविधिः । अथ आचारनिरू-
पणम् । तत्र कुलाकुलाचारादिकथनम् । पीठस्थानादिनियमः । स्वयम्भूकुसुमादिविवेचनम् ।
तत्तत्कुसुमरक्षणविधिः । यन्त्रनियमादिकथनम् । भावरहस्यकथनम् । अन्तर्यागकथनम् ।
अथ कुमारीपूजादिविधिः । अथ दूतीयागविधिः । कुलपूजाक्रमः । तत्र मदिरादिशोधन-
विधिः । शक्तिशोधनविधिः । वीरपुरश्चरणविधिः । तत्र पानाधिकारिनिरूपणम् । मांसादि-
व्यवस्था । अथ वामाचारानुकल्पकथनम् । यन्त्रपानादिनिर्णयः चक्रपादोदकमाहात्म्यादि-
कथनम् । यन्त्रादिनाशप्रायश्चित्तकथनम् । तत्तत्पूजाधारनिरूपणम् । शिवहृदयादिपूजानिषेध-
कथनम् । पञ्चशुद्धिनिरूपणम् । कुण्डनिरूपणम् । स्थण्डिलविधिकथनम् । होमविधिकथनम् ।
तत्र स्रुक्स्रुवादिलक्षणकथनम् । होमद्रव्यनिरूपणम् । वह्निस्थापनादिविधिः । संक्षेपादिहोम-
प्रयोगकथनम् । अग्नेर्नामकरणादिविधिः । अथ शान्तिविधिः । अथ शान्ताभिषेकविधिः ।
अथ गणेशपूजाविधिः । सूर्य्यपूजादिविधिः । मार्त्तण्डभैरवपूजाविधिः । इन्द्रादिपूजाविधिः ।
विष्णुपूजाविधिः । तत्र श्रीरामपूजाविधिः । श्रीकृष्णपूजाविधिः । तत्र रमाभिषेकविधिः ।

बालगोपालपूजाविधिः। वासुदेवपूजाविधिः। दधिवामनपूजाविधिः। वराहपूजाविधिः। शिवपूजाविधिः। हरगौरीपूजाविधिः। मृत्युञ्जयपूजाविधिः। अर्द्धनारीश्वरपूजाविधिः। नीलकण्ठपूजाविधिः। चण्डेश्वरपूजाविधिः। अथ क्षेत्रपालादिपूजाविधिः। मञ्जुघोषपूजाविधिः। अथ आचारनिरूपणम्। आचारस्तवकथनम्। यक्षकपूजाविधिः। मतसञ्जीवनी-विद्याकथनम्। क्षेत्रपालपूजाविधिः। वटुकपूजाविधिः। लक्ष्मीपूजाविधिः। महालक्ष्मी-पूजाविधिः। धनदापूजाविधिः। वागीश्वरीपूजाविधिः। भुवनेश्वरीपूजाविधिः। अन्नपूर्णा-पूजाविधिः। त्रिपुटापूजाविधिः। त्वरितापूजाविधिः। नित्यापूजाविधिः। वज्रप्रस्तारिणी-पूजाविधिः। शूलिनीपूजाविधिः। दुर्गापूजाविधिः। जयदुर्गापूजाविधिः। महिषमर्द्दिनी-पूजाविधिः। कालीपूजाविधिः। तत्र नाममन्त्रभेदकथनम्। गुह्यकालीपूजाक्रमकथनम्। भद्रकालीपूजाक्रमकथनम्। महाकालीपूजाक्रमकथनम्। श्मशानकालीपूजाक्रमकथनम्। तारा-पूजाक्रमकथनम्। अष्टतारामन्त्रभेदकथनम्। अथ प्रचण्डचण्डिकापूजाक्रमकथनम्। छिन्नमस्ता-पूजाविधिः। भैरवीपूजाक्रमकथनम्। त्रिपुरसुन्दरीपूजाक्रमकथनम्। श्रीविद्यापूजाक्रमकथ-नम्। शङ्कटादिपूजाक्रमकथनम्। वगलापूजाक्रमकथनम्। मातङ्गीपूजाक्रमकथनम्। उच्छिष्ट-चाण्डालिनीपूजाक्रमकथनम्। धूमावतीपूजाक्रमकथनम्। कर्णपिशाचीपूजाक्रमकथनम्। अथ कात्यायनीपूजाक्रमकथनम्। अथ गरुड़मन्त्रादिकथनम्। गरुड़स्तवकथनम्। विषहराग्निमन्त्र-कथनम्। अथ हनुमत्कल्पः। अथ आर्द्रपटीविधिः। गणेशस्तवः। हरिद्रागणेशस्तवः। सूर्य्य-कवचम्। सूर्य्यस्तवः। श्रीरामस्तवः। रामकवचम्। श्रीकृष्णस्तोत्रम्। गोपालस्तवः। श्रीकृष्ण-कवचम्। नृसिंहकवचम्। विष्णुनामाष्टकस्तोत्रम्। नारायणोपनिषत्। अपामार्जनस्तोत्रम्। विष्णुस्तवः। सरस्वतीस्तोत्रम्। प्रचण्डचण्डिकास्तोत्रम्। वगलामुखीस्तोत्रम्। अन्नपूर्णास्तोत्रम्। भुवनेश्वरीस्तवः। त्रिपुटास्तवः। दुर्गाशतनामस्तोत्रम्। श्रीविद्यास्तोत्रम्। छिन्नमस्तादिस्तोत्रम्। लक्ष्मीस्तोत्रम्। तारास्तोत्रम्। षोढ़ाकवचम्। महिषमर्द्दिनीस्तोत्रम्। भैरवीस्तवः। शिवस्तोत्रम्। वटुकस्तोत्रम्। मुद्रानिरूपणम्। विशेषतो योगलक्षणादिकथनम्। षट्चक्रनिरूपणञ्च। इति शम्।

---

**No. 23.** आचारसारतन्त्रम्, वा समयाचारतन्त्रम्। Substance, country-made paper, 19 × 5 inches. Folia, 6. Lines, 10 on a page. Extent, 202 çlokas. Character, Bengali. Date, ? Place of deposit, Májpárá Vikrampur, District Dháká, Babu Rásavihári Ráya. Appearance, fresh. Mostly verse. Incorrect.

**Beginning.** ॐ नमो जगन्मात्रे।

नमामि कालिकां देवीं भक्तानां भक्तवत्सलाम्।

बालक + + + + + गोपनञ्च क्षतं मुदा॥

अथ संवित्स्वीकारविधिः । श्रीदेव्युवाच ।
देवदेव महादेव सर्व कामिक प्रभो ।
कुलाचारस्य माहात्म्यं वद मे करुणानिधे ॥
कुलाचारान्महादेव महामोक्षः प्रजायते ।
तत्कथं गोपितं देव मम प्राणेश्वर प्रभो ॥
योगिनां किं सदा सेव्यं किमाचारो महेश्वर ।
भवपाशक्षयकरं किं समाधिफलप्रदम् ॥

श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि रहस्यमतिगोपनम् ।
यज्ज्ञानं ते तु जानंति देवासुरनरेष्वपि ॥
कथयामि तव प्रीत्या गुह्याद्गुह्यतरं महत् ।
श्रुत्वा तथापि गोप्यं यत्नेन पद्मसकण्ठे ॥
संविदा पानमात्रेण कालकूटस्य भूषणम् ।
त्रिलोचनमहेशेन तरिता तारिता तथा ॥
संविदा सर्वसिद्धीनां कारणं परमं पदम् ।
त्रैलोक्यविजयाख्यानमेतत् त्रैलोक्यदुर्लभम् ॥ इत्यादि ।

**End.** इत्यनर्घ्यजपं कृत्वा साक्षात्प्रत्यक्षमयो भवेत् ।
सप्तजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥

योनिस्थभगलिङ्गाख्यं रचयित्वा पात्रे संस्थाप्य मूलमन्त्रमष्टोत्तरशतं जप्त्वा मूलेनेदं भगलिङ्गाख्यममुष्मै नमः । ततः श्रीकण्ठे भक्तिं कृत्वा जपेत् ।

**Colophon.** इति यजनविधिः ॥

**विषयः** । कौलिकानामाचारनिरूपणम् । तत्रादौ संविदास्वीकारविधिकथनम् । तच्छो-धनमन्त्रादिकथनम् । दुग्धादिसंयुक्तसंविदापाने फलविशेषकथनम् । पिष्टादिचूर्णमिश्रितसुरा-भक्षितविजयापानफलमाहात्म्यकथनम् । पञ्चतत्त्वविधिकथनम् । मद्यादिशोधनविधिकथनम् । सुराख्यानादिकथनम् । मत्स्यभूङ्कुलद्रव्यशोधनविधिः । पूजाविधिकथनपूर्वकं गुरुस्तोत्रकथनम् । पात्रसंस्थानिरूपणम् । पूजाकाले विना पाननिषेधकथनम् । पात्रवन्दनादिविधिः । पात्रे सर्वसंशोधनकथनम् । शक्तिं विना पाननिषेधकथनम् । पापपरिमाणादिकथनम् । कौलिककर्तव्य-कथनम् । शक्तिशोधनविधिः । रहस्यपुरश्चरणविधिश्च । इति ।

---

**No. 24.** आत्मप्रकाशव्याख्या । By काशीरामवाचस्पतिः. Substance, country-made paper, 14×3 inches. Folia, 25. Lines, 9 on a page. Extent, 900 çlokas. Character, Bengali. Date, S'áka 1770. Place of deposit, Viṣṇupur, District Bắkura, Paṇḍita Raghuráma Tarkaratna. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीहरिः शरणम् ॥

श्रीगोपवधूरमणं राधिकाकेलिलालसम् ।
नमामि शिरसा श्रीमन्नन्दनन्दनमद्वयम् ॥
भट्टाचार्य्यशिरोधार्य्यन्यायालङ्कारसूनुना ।
आत्मप्रकाशव्याख्या काशीरामेण तन्यते ॥

सत्यज्ञानानन्दात्मकमद्वितीयं ब्रह्मैव शुद्धसत्त्वप्रधानमायोपाधिकं ईश्वर-भावं मलिनसत्त्वप्रधानाविद्योपाधिकं जीवभावञ्च जगाम । तथाहि मायाभासेन जीवेशौ करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिः ।

**End.** पितेत्यादि तथाचोक्तम् । पिताहमस्य जगतो माता धाता पितामहः त्वमस्य पूज्यश्च गुरुर्गरीयान् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । सनातनस्त्वं पुरुषो मतो मे इत्यादि । हृद्यमिति । एतत् हृद्यं प्रियं प्रकथितं यत एतज्ज्ञात्वा सङ्कटात् संसारात् दुःखाद्वा मुच्येत इत्यर्थः । तथाचोक्तं य आत्मानं विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय संसारमनुसंसरेदित्यादि दुःखेनात्यन्तं विमुक्तश्चरतीत्यादि च । किमिच्छन्नित्यनेन स्वेच्छया कस्य कामाय इत्यनेन च परकीयेच्छया संसारानुसरणं परिहृतमिति भावः ॥ इत्यास्तां विस्तरः ॥

ताम्बूलानां चतुर्ण्णां मधुदधिभिरतरं चन्दनञ्च द्विजानां
श्रीराघवपतेर्यो नरपतितिलकात् श्रीलगोपालसिंहात् ।
लेभे मल्लावनीशात् बुधवररचितग्रन्थटीकां यथार्थां
भट्टाचार्य्यपूर्वामलसमखिमुकुटस्यात्मजः स व्यतानीत् ।
श्रीश्रीजाने दयाधाने चरणाम्बुजयोस्तव ।
श्रीकाशीरामकृतिना कृतिरेषा समर्पिता ॥

**Colophon.** इत्यात्मप्रकाशकव्याख्या समाप्ता ॥०

लिखिता श्रीरामरामेण शकाब्दा १७७० ।

**विषय ।** आत्मप्रकाशकनामकवेदान्तग्रन्थस्य व्याख्यानम् ।

---

**No. 25.** आत्ममनोयोगविचारः By मथुरानाथः. Substance, country-made paper, 18×3 inches. Folia, 2. Lines, 9 on a page. Extent, 82 çlokas. Character, Bengali. Date, ? Place of deposit, Brámhaṇa-maṇḍalí, Paṇḍita Ráma-náráyáṇa Bhaṭṭácárrya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो विघ्नविरिञ्च्यायै । आत्मात्ममनोयोगशरीरमनःसंयोगाः ज्ञान-सामान्ये हेतवः । तथात्मा समवायिकारणम् । आत्ममनोयोगश्चासमवायि-कारणम् । इत्यादि ।

**End.** तथापि संयोगसम्बन्धेनैवात्मत्वेन प्रतिबन्धकत्वकल्पनया सुषुप्तेरभावप्रस-ङ्गादित्यलं पल्लवितेन ॥

**Colophon.** इत्यात्ममनोयोगविचारः ॥

विषयः । आत्मना सह मनसो योग एव ज्ञानमुत्पद्यते नान्यथेत्यादीनां विचारः ।

---

**No. 26.** आनन्दलहरीटीका By गोपीरमणतर्कपञ्चाननः । Substance, country-made paper, 14×3 inches. Folia, 29. Lines, 6 on a page. Extent, 661 çlokas. Character, Bengali. Date, ? Place of deposit, Çubhaḍhyá, Dhaká, Paṇḍita Kálí-candra Vidyálaṇkára. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

यत् पादपद्मयुगलं विधिविष्णुभर्गैः

सेव्यं सदा पुलकिताखिलभक्तमानैः ।

सृष्टिस्थितिप्रलयकारण + + प्रयत्न-

शालिन् मनः प्रविश चाखिलकार्य्यहीनम् ॥

श्रीमदानन्दलहरीटीका सा प्रवितन्यते ।

मन्त्रादिपदो यथाशक्ति गोपीरमणशर्म्मणा ॥

शिव इत्यादि । हे शिवे मां स्तोतुं प्रभवन्तु वा कथमकृतपुण्यः प्रभवति । चर्य्यादिभिरप्याराध्यां कथमित्याह शिव ईश्वरः शक्त्या युक्तो यदि भवति तदा प्रभवितुं शक्तो नैवं देवदेवोऽपि शिवः स्पन्दितुमपि न कुशलः ॥ इत्यादि ।

**End.** येन दीप्तं प्रकाशितं मञ्जीरेव शोभितं चरणं यथायथा । इति ।

यत्पुण्यं पञ्चविंशत्यां टीकयैतेनार्ज्जितं मया ।

तेनार्पितेन पादयोः प्रीयतां परमेश्वरो ॥

**Colophon.** इति महामहोपाध्यायश्रीश्रीपीताम्बरचक्रवर्त्तिभट्टाचार्यकृतानन्दलहरी-टीका समाप्ता ।

विषयः । शङ्कराचार्य्यकृतानन्दलहरीनामकस्तोत्रस्य व्याख्यानम् ।

---

No. 27. आनन्दलहरीटीका, समूला । By जगन्नाथचक्रवर्त्ती. Substance, country-made paper, 14½ × 3 inches. Folia, 51. Lines, 5 on a page. Extent, 1,131 çlokas. Character, Bengali. Date, ? Place of deposit, Práṇimaṇḍal, Post office Májpárá, Thání Çrínagar, District Dháká, Bábu Kṛiṣṇa-kumár Caṭṭopádhyáya. Appearance, new. Prose and verse. Generally correct.

**Beginning.** शिवः परमात्मस्वरूपः शक्त्या प्रकृत्या युक्तो भवति यदि तदा प्रभवितुं जगदुत्पादने प्रभुर्भवितुं शक्तो भवति । तदुक्तं वामकेश्वरतन्त्रे ।

परोऽपि शक्तिरहितः शक्तः कर्त्तुं न किञ्चन ।
शक्तस्तु परमेशानि शक्त्या युक्तो भवेद् यदि ॥

न चेदिति । शक्त्या युक्तो न चेदेवं शिवः स्पन्दितुं किञ्चिच्चालयितुमपि न कुशलः न समर्थः । जगदुत्पादने वा का कथा । अतः कारणात् हरिहरविरिञ्च्यादिभिरप्याराध्यां त्वां स्तोतुं प्रणन्तुं वा कथमकृतपुण्यो जनः प्रभवति । अकृतपुण्यानामदीक्षितानामनधिकारिता नास्तीति भावः । तदुक्तं यामले । अन्नं विष्ठासमं तेषां जलं मूत्रसमं यतः । इदानीमनेन मन्त्रोऽपि केनचिद्व्याख्यायते । यथा शिवः हकारः शक्तिः सकारो विसर्गबिन्दुरप्यत्र बोध्यः तेन युक्तो यदि भवति तदा प्रभवितुं सर्व्वमन्त्राणामाद्यो भवितुं शक्तः एवं न चेत् अनुस्वारविसर्गयोर्मिलनं न चेत् तदा स्पन्दितुमपि न कुशलः तदुक्तं गोरक्षसंहितायां ।

सङ्कोचपरमा शक्तिर्विकाशपरमः शिवः ।
सङ्कोचश्च विकाशश्च द्वयमेतच्चराचरम् ॥

यद्वा शिवः ककारादिक्षकारान्तवर्णः शक्तिः षोडशस्वराः तया युक्तो यदि भवति तदा प्रभवितुं वेदादिविद्यादिरूपेण शब्दार्थसृष्टिं स्वीकर्त्तुं शक्तो भवति एवं न चेत् स्पन्दितुमपि उच्चारणविषयीभवितुमपि न कुशलः । इत्यादि ।

**End.** हिमगिरीश्वरस्य हिमालयस्य कन्यकात्वेनाख्या संज्ञा यस्य तादृशं पार्व्वती-संज्ञकं इदं ज्योतिर्भक्तानीत्यर्थात् चौहस सङ्कीरेव शोभमानं चरणं यत्र

वल्लिभिः शोभमानं मध्यं यत्र चारेवाभिरामौ मनोज्ञौ कुचौ यत्र चम्पुक- चानि पद्मानीवायतानि दीर्घाक्षीणि यत्र लीलाविलासविशिष्टा अलकावूर्धकुन्तला यत्र ज्ञानस्य प्रदीपं प्रकाशकं ईश्वरः शिव एव दीपत्वेन दीप्तं प्रकाशितं कल्पितमिति यावत्। या मनसीऽस्मयस्य ज्योतीरूपस्य पर- मस्यः पार्वतीसंज्ञात्वेन साकारतया प्रकाशः शिवेन ध्यानार्थं कल्पितः। तथाच निर्गुणस्याशरीरिणः साधकानां हितार्थाय ब्रह्मणो रूपकल्पनेति॥

**Colophon.** इति श्रीशामनशास्त्रिकृतयजमन्त्रायप्रवर्णितानन्दलहरीटीका समाप्ता॥

**विषयः।** शङ्कराचार्य्यकृतानन्दलहर्य्या व्याख्यानम्। अत्र च ग्रन्थकारेण प्रसङ्गात् वामके- श्वर-वीर-सिद्धेश्वरतन्त्र-वशिष्ठसंहिता-गोरक्षसंहिता-कालिकापुराण तन्त्राभ्ये- मालिका यामल-शारदादिभ्यः प्रामाणिकग्रन्थेभ्यः समुद्धृतानि कतिचित् प्रमाणवचनानि।

---

**No. 28.** आनन्दलहरीटीका, तत्त्वदीपिका। By गङ्गाहरिशर्म्मा. Substance, country-made paper, 14 × 2 inches. Folia, 38. Lines, 8 on a page. Extent, 1,216 çlokas. Character, Bengali. Date, ? Place of deposit, Dhákâ, Vikramapura, Vajrayogini, Paṇḍita Dváraká-nátha Tarkabhúṣhaṇa. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय।

नत्वा गुरुं गणपतिं देवीं त्रिपुरसुन्दरीम्।
तन्त्राण्यथ समालोक्य ज्ञात्वा गुरुमतं ततः॥
युक्त्या च स्वयमारोप्य श्रीगङ्गाहरिधीमता।
आनन्दलहरी-तत्त्वदीपिका क्रियते मुदा॥

इह खलु शक्तिखण्डनं विकुर्व्वतः श्रीशङ्कराचार्य्यस्य सर्व्वाणीन्द्रियाणि विकु- ण्ठितान्यासन् पुनरपि कारुण्यवारांनिधेर्जगदम्बिकायाः कृपया दृष्टतद्रूपा- नेकलब्धस्वभावः सर्व्वं शक्त्यधीनमेवेति निश्चित्य तां स्तौति शिव इति। अत्र युष्मच्छब्दीयद्वितीयान्तषष्ठ्यन्तपदयोरादौ सम्बोधनान्तपदं विना स्थिते- रभावात् सम्बोधनान्तपदमाक्षिप्यते। हे शिवे इति। इत्यादि।

**End.** ईश्वरदीपदीप्तं ईश्वर एव दीपः प्रकाशकः तेन दीप्तं प्रकाशितं शिवं विना तन्माहात्म्यं न कोऽपि जानातीत्यर्थः॥

एवं कृता मया श्रीर दीपिकेव प्रकाशिका।
दृष्ट्वा सम्यग् यथाम्नायमध्यापय यथासुखम्॥

**Colophon.** इति श्रीजगन्नाथचक्रवर्तिविरचिता तत्त्वदीपिका समाप्ता ।

**विषय:** । शङ्कराचार्य्यकृतानन्दलहरीनामकदेवीस्तोत्रस्य व्याख्यानम् ।

---

**No. 29.** आनन्दलहरीरहस्यप्रकाशः By जगदीशपञ्चाननः । Substance, country-made paper, 20 × 4 inches. Folia, 41. Lines, 6 on a page. Extent, 1,845 çlokas. Character, Bengali. Date, Saka 1570. Place of deposit, Naiháṭi, Paṇḍita Haraprasáda Çástrí. Appearance, old. Generally correct.

**Beginning.** ॐ नमो गणेशाय । शङ्करचरणसरोजं श्रीजगदीशद्विजो नत्वा ।
शङ्करकविवरकृतौ लहरहस्यं प्रकाशयति ॥
श्रीशङ्कराचार्य्यः शक्तिप्राधान्यं ख्यापयन् श्रीत्रिपुरसुन्दरीं स्तवनारभते
शिवः शक्त्येत्यादिना ।

**End.** चरणमारभ्यैव देवशरीरं वर्णनीयमित्याशङ्कारिकाः लीलारूपा चरणारस
तन्त्रीनामकं ईश्वरदीपदीप्तं ईश्वररूपो यो दीपः स एव दीपः प्रकाशो
यस्याः ईश्वरोऽपि तया प्रकाश्यते इति वाक्यार्थ इति शिवम् ॥

**Colophon.** इति श्रीजगदीशपञ्चाननभट्टाचार्य्यविरचित आनन्दलहरीरहस्यप्रकाशः
सम्पूर्णः ॥
शुभमस्तु शकाब्दा १५७० तारिख ११ पौष ॥ ॥ श्रीगोपालशर्मणः स्वाक्षर-
मिदं । हरये नमः ।

**विषय:** । शङ्कराचार्य्यकृतानन्दलहरीनामकदेवीस्तोत्रस्य टीका ।

---

**No. 30.** आनन्दवृन्दावनचम्पूः By कविकर्णपूरः । Substance, country-made paper, $10\frac{1}{2} \times 7\frac{1}{2}$ inches. Folia, 371. Lines, 10 on a page. Extent, 10,202 çlokas. Character, Bengali. Date, ? Place of deposit, Tippera, Maháraja's Library. Appearance, new. Verse. Generally correct.

**Beginning.** वन्दे कृष्णपदारविन्दयुगलं यस्मिन् कुरङ्गीदृशां
वक्षोजप्रणयीकृते विलसति स्निग्धोऽङ्गरागः सतः ।
काश्मीरं नखरोचिसोमपरितनं कस्तूरिकाश्रीस्त्विषा
श्रीखण्डं नखचन्द्रकान्तिलहरी निर्व्याजमातन्वते ॥ इत्यादि ।

**End.** स्निग्धो वृन्दारण्ये सततमपि ताभिर्मधुपुरीं
गतश्चासौ तद्विरहजमथारचितवान् ।
यतोऽनर्वैश्चर्य्यं सुखमधिमति श्रीभगवति
तजेश्वर्य्याः स्फूर्तौ न किमपि विचित्रं विलसति ॥

चैतन्यचन्द्रचरणोदितवाग्विभूति

सम्प्राप्तजीवनधनस्य जनस्य पुत्रः ।

श्रीनाथपादकमलस्मृतिशुद्धबुद्धि

श्चम्पूमिमां रचितवान् कविकर्णपूरः ॥

**Colophon.** इत्यानन्दवृन्दावने कैशोरलीलाललितविलासे दोलोत्सवो नाम द्वाविंशतिः स्तवकः । समाप्तश्चायमानन्दवृन्दावनाभिधो ग्रन्थः ।

**विषयः ।** वृन्दावनादिवर्णनं श्रीकृष्णस्य बाल्यलीलावर्णनं, श्रीकृष्णस्य कैशोरलीलादि-वर्णनञ्च ।

---

**No. 31.** आयुर्व्वेदसारावली By धन्वन्तरिकारः । Substance, country-made paper, 16×3 inches. Folia, 619. Lines, 4 on a page. Extent, 8,975 çlokas. Character, Bengali. Date, ? Place of deposit, Kelomál Tamluk, Babu Sáradá-prasanna Ghosa. Appearance, fresh. Verse. Generally correct.

**Beginning.** नमः शिवाय । गुरोश्चरणपङ्कजं हृदि निधाय बद्धाञ्जलि-

र्नमामि गणनायकं तदनु देवचक्रद्विषं ।

मुरारिचरणाम्बुजं वरदमष्टमूर्त्तिं शिवं

शिवापदसरोरुहं दुरितहारि भक्त्या नतः ॥

आयुर्व्वेदविदांशिभिर्विरचितानादाय वैद्यर्षिके-

र्ग्रन्थान् बहुशास्त्रतो वरधिया शास्त्राणि सद्भिः पुरा ।

तान्यालोक्य निबध्यते परचितोपादानकौतूहलैः

श्रीधन्वन्तरिणा कृतेव भिषजामायुर्व्वेदसारावली ॥

ज्ञेयौषधादिपरिमाणविनिर्णयाद्या

पौष्यादिकालकलनालक्षणेयं ।

शारीरपथ्यगनिदाननिदानवन्ध-

सारावली मृदुलमञ्जुलवाचसिद्धा ॥

नाडीज्ञानं समावेक्ष्य रोगसाधनकारणं ।

ततोऽन्यलक्षणं दृष्ट्वा चिकित्सामाचरेत् भिषक् ॥

**End.** देवदारुकषायञ्च पिबेन्मूत्रेण मानवः ।

विश्वायमानवे चापि शेषपञ्चिक्रमो हितः ॥

कुलत्थीयवपिण्याकपिष्टेक्ष्वोपनाहनम् ।
भोजनं कटु तीक्ष्णोष्णं स्वेदस्विन्नमुपाचरेत् ॥

**Colophon.** अतःपरं खण्डितत्वात् समाप्तिवाक्यं नोपलभ्यते ।

**विषयः ।** शरीरोत्पत्तिनिरूपणम् । नाडीलक्षणादिनिरूपणम् । सप्तधातुक्रमनिरूपणम् । ज्वरगजकेसरिनिरूपणम् । कफज्वरादिलक्षणम् । पाठाक्वाथादिपाचननिरूपणम् । महाज्वराङ्कुशादिनिरूपणम् । वातश्लेष्मलक्षणादिनिरूपणम् । मेघनादरसादिनिरूपणम् । दाहज्वर-पाचनादिनिरूपणम् । राजयक्ष्मेश्वररसादिनिरूपणम् । सन्निपातचिकित्सादिः । जीर्णज्वरलक्षणादिः । विषमज्वरान्तकलौहादिनिरूपणम् । असाध्यलक्षणादिकथनम् । पथ्यापथ्यादिनिरूपणम् । शुद्धियोगादिनिरूपणम् । [?]रोक्तादिनिरूपणम् । विष्टम्भलक्षणादिनिरूपणम् । [?]रसादिनिरूपणम् । लौहामृतादिनिरूपणम् । पुनर्नवादितैलनिरूपणम् । [?]घृतादिनिरूपणम् । चन्द्रामृतरसादिनिरूपणम् । कनकसुन्दररसादिनिरूपणम् । चन्द्रशेखर-रसादिनिरूपणम् । त्रिदोषच्छर्दिलक्षणादिकथनम् । तृष्णारोगचिकित्सादिः । अजीर्णपानविभ्रमादिमदात्ययचिकित्सादिनिरूपणम् । [?]घृतादिनिरूपणम् । [?]घृतादिनिरूपणम् । कूष्माण्डघृतादिनिरूपणम् । बृहच्छागलाद्यघृतादिनिरूपणम् । पयोदव्याघ्रगुग्गुल्वादिनिरूपणम् । बृहद्विष्णुतैलादिनिरूपणम् । [?]तैलादिनिरूपणम् । वातामयचिकित्सादिनिरूपणम् । वातरक्तचिकित्सादिनिरूपणम् । अमृताद्यतैलादिनिरूपणम् । नारायणतैलादिनिरूपणम् । महद्गुडूचीतैलादिनिरूपणम् । ऊरुस्तम्भचिकित्सानिरूपणम् । आमवातचिकित्सादिनिरूपणम् । शूलरोगचिकित्सादिनिरूपणम् । उदावर्तचिकित्सादिनिर्णयः । रक्तोद्भवगुल्मचिकित्सादिनिरूपणम् । च्यवनप्राशघृतादिनिरूपणम् । श्लेष्मोदरलक्षणचिकित्साविधिः । [?]घृतादिनिरूपणम् । वातिकशोथलक्षणादिः । शुष्कमूलाद्यतैलादिनिरूपणम् । इत्यग्निदग्धविसर्पचिकित्सादिरेवेति ।

---

**No. 32.** उज्ज्वलनीलमणिः, सटीका । By जीवगोस्वामी. Substance, country-made paper, 16 × 8 inches. Folia, 152. Lines, 20 on a page. Extent, 6,080 çlokas. Character, Nágara. Date, ? Place of deposit, Benares city, Khálispurá Paṇḍita Priyanátha Tattvaratna. Appearance, new. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ॥ नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दं ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥
मुख्यरसेषु पुरा यः संक्षेपेणोदितो रहस्यत्वात् ।
पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः ॥

टीकाया । श्रीराधागोविन्ददेवो जयतां । विधन् हगञ्चलपराङ्मुखबोजितोऽपि
क्षुभन् सदाभिनवरामरसाश्रितोऽपि ।
बधन् मुहुः क्षितसुधापरिपायितोऽपि
श्रीराधया प्रथमयन् प्रमदं चरित्रैः ॥

**End.** अयं उज्ज्वलनीलमणिमिवममरायोपसागरप्रभव भजन नवमकरकुण्डल-
परिसरमेवोचितं देव ।

**Colophon.** इति श्रीसप्तोमभेदः सम्पूर्णोऽयं उज्ज्वलनीलमणिग्रन्थः ।

**विषयः ।** अलङ्कारग्रन्थोऽयं । अत्र च भगवद्भक्तिविषयकमेवोदाहरणं प्रदर्शितं ।

---

**No. 33.** उज्ज्वलनीलमणिविवृतिः, By वल्लभः. Substance, country-made paper, 12×4½ inches. Folia, 24. Lines, 8 on a page. Extent, 432 çlokas. Character, Bengali. Date. ? Place of deposit, Kānṭhálpárá, *via* Naiháṭi, Rámatárana Thákur. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीराधाकृष्णौ जयेतां । सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः ।
श्रीवल्लभोऽनुजः सोऽयं श्रीरूपो जीवसद्गतिः ॥
श्रीभक्तिरसामृतसिन्धोर्जाते प्रवाह इव लोके ।
उज्ज्वलनीलमणौ मम लोचनरोचन्यसौ विवृतिः ॥
तथापि स एव रसामृतसिन्धुप्रकाशकः । पूर्वं पूर्वस्मादप्यपूर्वमुज्ज्वलाख्यं
रसं किञ्चिदेव विवृत्य कृतकृत्यतां मन्यमानः सम्प्रति पिबत भागवतं रस-
मिति न्यायेन धर्मधर्मकयोरभेदं सम्प्रत्युज्ज्वलनीलमणिनामानं ग्रन्थं
विधाय तं रसमतीव विवृण्वन् श्रीमन्निजइष्टदैवतमपि श्रीमन्तं निजगुरुमपि
तन्मेव स्तुवन् प्रार्थयते । नामाकृष्टेति । तत्र निजइष्टदैवतपक्षे नाम्ना नाम-
मात्रेणाकृष्टाखण्डवतारावतारिभक्तिरसिका येन सः । तथा श्रीलेन
सुखभावेन सदा नित्यमेव श्रीमन्नन्दनामानं स्वपितरमुद्दीपयन् उद्दीप्तभावं
कुर्वन् तथा निजेन रूपेण सौन्दर्येण सर्वेभ्य एव उत्सवदायी तथा सना-
तनो नित्यः आत्मा श्रीविग्रहो यस्य सः । प्रादुर्भावमात्रेण जन्मजन्मादि-
व्यवहार इति भावः । इत्यादि ।

**End.** वर्णितत्वात् शेषो नास्ति ।

**विषयः ।** उज्ज्वलनीलमणिनामकालङ्कारग्रन्थस्य टीका ।

---

**No. 34.** उणादिवृत्तिः By दुर्गसिंहः Substance, country-made paper, 15 × 2 inches. Folia, 31. Lines, 5 on a page. Extent, 562 çlokas. Character, Bengali. Date, ? Place of deposit, District Dháká, Váḍḍánagar, Post Office Pilkháná, Paṇḍita Kailása-candra Tarkaratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमः शिवाय ।

नमस्कृत्य शिवं भूरिशब्दसन्तानकारणम् ।

उणादयो विधास्यन्ते बालव्युत्पत्तिहेतवे ॥

कृ-वा-पा-जि-मि स्वदि-साध्य-शू-दू-सनि जनि-चरिभ्य उण् ॥

एभ्य उण् परो भवति । डु कृञ्करणे करोतीति कारुः शिल्पी । वा गति-गन्धयोः वायुः समीरणः । इत्यादि ।

**End.** चमोभोऽन्तश्च । चमादसुन् परो भवति । भश्चान्तमम्भः सलिलं । चाभुवः । चमादसुन् परो भवति । उरादेशश्च । उरो वक्षः ॥

**Colophon.** इति दौर्गसिंह्यां वृत्तौ उणादौ चतुर्थः पादः समाप्तः ।

**विषयः ।** कामन्तानुक्तानामुणादिप्रत्ययानां विधानकथनं । प्रयोगादिश्च ।

---

**No. 35.** उत्तरतन्त्रम् । Substance, country-made paper, 18 × 4½ inches. Folia, 22. Lines, 7 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, Váḍari Mayamansiñha, Ráma-kamala Bhaṭṭ-ácáryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । ॐ नमः परमदेवतायै ॥ देव्युवाच ।

कैलासशिखरासीना देवी पप्रच्छ शङ्करम् ।

भगवन् साधकानाञ्च कथयस्व क्रियाविधिम् ॥

श्रुतानि सर्वतन्त्राणि यामलादीनि वै प्रभो ।

क्वापि न श्रुता नाथ क्रियाया विधिमुत्तमम् ॥

**End.** पश्चीयकालसम्भूते समये वापि सुन्दरि ।

पातयेच्छोणितं देवि बीजमन्त्रैर्निवेदयेत् ॥

बलिप्रकार उद्दिष्टो वाराहीसंहिताक्रमात् ।

एतत्ते कथितं देवि बलिदानं सुशोभनम् ।

तव स्नेहाम्महादेवि किमन्यत् कथयामि ते ॥

**Colophon.** इत्युत्तरतन्त्रे देवीश्वरसम्वादे बलिदानप्रकरणे षोडशः पटलः ॥

विषयः। प्रयोगविध्यादिनिरूपणम् । शास्त्रनिन्दादिदोषकथनम् । महाविद्यादीनां पूजनादिनिरूपणम् । भगवन्नाममाहात्म्यकथनम् । स्नानादिकर्म्मनिरूपणम् । मन्त्राचारादिनिरूपणम् कर्म्मकालादिनिरूपणम् । प्रश्नोत्तरपदनिरूपणम् । भावनिरूपणम् । पुरश्चरणादिनिरूपणम् । दक्षिणादानादिनिरूपणञ्च ।

---

**No. 36.** उद्धवसन्देशकाव्यम्, By रूपगोस्वामी । Substance, country-made paper, 12×4 inches. Folia, 12. Lines, 11 on a page. Extent, 395 çlokas, Character, Bengali. Date, ? Place of deposit, Visnupura, District Bâkurá, Pandita Candranáráyana Bhattácaryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णः ॥
सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानैः
संवीताङ्गीं दधति मथुरापत्तने दक्षिणेन ।
कृष्णः क्रीडाभवनवडभीमूर्ध्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीम् ॥

**End** गोपेन्द्रस्य व्रजभुवि सखे केवलं याचया ते
नाथः सिध्येन्मम बहुमतः किन्तु वाढं तथैव ।
प्रेमोल्लासं परिकलयता गोपसीमन्तिनीनां
प्रार्थ्या मे सपदि भवता भारतीभारतेयं ॥
गोष्ठक्रीडोत्कलितमनसो न व्यलीकानुरागात्
कुर्व्वाणस्य प्रथितमथुरामण्डले ताण्डवानि ।
भूयो रूपाश्रयपदसरोजन्मनः स्वामिनोऽयं
तस्योद्गारं वहतु हृदयानन्दपूरं पुरस्तः ॥

**Colophon.** इति श्रीमद्रूपगोस्वामिना विरचितं उद्धवसन्देशं नाम काव्यं समाप्तं ॥

विषयः। गोकुलविरहविधुरेण कृष्णेन दौत्यकर्म्मकरणाय गोकुले प्रेरितस्योद्धवस्य गोपिकानां समीपे कृष्णोक्तसन्देशकथनम् ।

---

**No. 37.** एकादशीविवेकः, By शूलपाणिः । Substance, country-made paper, 13×3 inches. Folia, 3. Lines, 6 on a page. Extent, 76 çlokas. Character, Bengali. Date, Sk., 1763. Place of deposit, Brámhana Mandali *via* Bárásat, Pandita Rámanáráyana Bhattácaryya. Appearance, old. Prose. Generally correct.

Beginning. ॐ कृष्णाय नमः । अथैकादशीविवेकः ।
नोपोष्या द्वादशीविद्धा सदैवैकादशी नरैः ।
तामुपोष्य नरो जह्यात् पुण्यं वर्षसमुद्भवम् ।

End. अये पूर्व्वा तु कर्त्तव्या इति कार्य्या तिथिः परा ।
अवमुहूर्त्तापि सम्पन्ना या तिथिः क्षयगामिनी ।
त्रिमुहूर्त्तापि कर्त्तव्या या तिथि र्वृद्धिगामिनी ॥ ० ॥

Colophon. इति शूलपाणिविरचित एकादशीविवेकः समाप्तः । शाके वह्निरसाम्बुधि शुभ्रमाने । १७६३ ।

विषयः । एकादशीव्रतव्यवस्थादिकथनम् ।

---

**No. 38.** कपिलादानम् । Substance, country-made paper, 13 × 1½, inches. Folia, 2. Lines, 3 on a page. Extent, 14 çlokas. Character, Bengali. Date, ? Place of deposit, Vidyákúṭa, District Tripurá, Bábu Kedáranátha Bhaṭṭácáryya. Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमो गणेशाय । अथ कपिलादानम् । कपिलां धेनुं प्राङ्मुखीमवस्थाप्य पठेत् ॐ या लक्ष्मीः सर्व्वभूतानामित्यादि ।

End. इमां साच्छादनां कपिलां धेनुं विष्णुदैवताकां अमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । परार्थञ्चेत् ददानीति विशेषः ।

Colophon. इति धेनूत्सर्गः समाप्तः ।

विषयः । धेनूत्सर्गविधानकथनम् ।

---

**No. 39.** कर्पूरादिस्तवटीका, By नन्द रामः । Substance, country-made paper, 13½ × 3 inches. Folia, 7. Lines, 7 on a page, Extent, 201 çlokas. Character, Bengali. Date, Sk., 1766. Place of deposit, Háḍiyá, Post Vaidyerbázár, District Dháká, Paṇḍita Rámanáráyaṇa Bhaṭṭácáryya. Appearance, new. Prose. Generally correct.

Beginning. ॐ नमः परमदेवतायै ।
श्यामा कर्पूरादिभूता विषमा कालिकास्तुतिः ।
श्रीनन्दरामसुकृती तस्या वि ... ... ... इतीः ।
तत्र प्रथमं कालीबीजोद्धारमाह कर्पूरमिति चन्द्रसाराख्यं नाम मत् कीदृश

मध्यमान्तस्वरपररहितं मध्यमौ च चकारौकारौ चन्द्रश्च चकारः ते च ते स्वराश्चेति पञ्च एव परौ ततः ते च परौ च ताभ्यां रहितं तेन कं पुनः खेन्दु इन्दुना नादेन सहितं वामाक्षियुक्तं ईकारसहितं एतेन कालीबीज-मायोद्धारः सर्व्वसम्मतः एतद्बीजस्य ...... अन्यत् सुगमं । ननु स्वरापेक्षया स्वरस्यादिमध्यान्तता न व्यञ्जनापेक्षया तथात्वे मध्यमः स्वरः अकारः अन्त्य-स्वरश्च रेफादयितिरकारः अनयो राहित्ये कथमकारान्तस्य ककारस्य परवर्णेन युक्तता सम्भवति व्यञ्जनवर्णस्यैव परयुक्तत्वात् इत्याह मध्यमान्त्येति एतन्म-ध्ये च तद्रहितं तेन मध्यपदेनाद्यवर्णद्वयं विना यावत् स्वरपरित्यागः । मान्त्य इति बिन्दुरूपो मकारः । तदन्ते इति तेषां सुधाकुरादाय एव गद्य-पद्यानि च उल्लसन्ति वाङ्मायाश्चैव गद्यपद्यमयानि भूत्वा निःसरन्ति ननु देवी वाम देवतानामेव इत्याह सर्व्वसिद्धिं मतानां सर्व्वा अणिमाद्या अष्टौ सिद्धयो यस्य स सर्व्वसिद्धिर्मन्त्रेमस्तं प्राप्तानां । इत्यादि ॥

End.

हे मातर्वशी जितेन्द्रियः सन् हविष्यभोजनरतः स्तवं मन्त्रं दिवा प्रजपति कौलः युष्मच्चरणयुगलध्याननिपुणः भवच्चरणार्पितमानसः चिन्तितमे सुर-वरसमानः स्यात् । पुनः प्रकारमाह परं नक्तमिति नक्तं चाष्टमीचतुर्द-श्यादिषुभरात्रौ नग्नो दिगम्बरः त्रिभुवनविमोहेन शृङ्गारावेशेन मनुं स्तवं जपन् ... ... वरसमानः ॥ हे मातरिदं तव स्तोत्रं मनुसमुद्धारजनु मनूनां समुद्धारस्य जनुर्जन्म यत्र तत् पुनः स्वरूपाख्यं स्वरूपाख्यानचिह्नं न तु त्वद्गुणोत्कर्षेण तावत्त्वं गुणोत्कर्षाभावादेव स्वरूपाख्यं स्वरूपा ... ... ... घटयन्नाह पदाम्बुजयुगलपूजाविधियुतं नाम्न्यधिकमिदं स्तोत्रं निशार्धे वा पूजासमयमथवा यस्तु पठति तस्य प्रलापि मिथ्या ... ... ... ... ... काव्यामृतधारा प्रभवति प्रकर्षेण निःसरति ॥ सम्प्रति स्तवपा-ठस्य फलमाह कुरङ्गाक्षीवृन्दमिति । द्वियाङ्गनावृन्दं तत्साधकं अनुगच्छति प्रेमतरलं तव प्रेम्णा तरलं चपलं उत्कण्ठायमानं वा ... ... तस्य क्षोणी-पतेः कुवेरप्रतिनिधि ... ... ... । यद्वा स कुवेरप्रतिनिधिर्भवति । तत्केलिकलया केलीनां चोकमभागैकभागेन रिपुः कारागारं कलयति ज्ञापयति स भक्त इव चिरं जीवन् चाप्रलयं विचरन् तदन्ते अनुं प्रति पुनर्जन्मपदं प्रति मुक्तः वर्जितः प्रभवति प्रभुर्भवति ॥

Colophon.

इति श्रीमहाकालविरचित कर्पूरादिस्तोत्रस्य टीका समाप्ता ॥ श्रीगुरुः । श्रीहरिः । श्रीनाथः ।

अयनते प्रभाकरे अपाकराशिगे परा-
भिधातिवारकाह्निते ग्रहादिपार्थिवे मते ।
गुरोर्द्दिने शिवेऽशिवद्भवप्रदाम्बुजे श्रिया-
भिधानदे गुरुर्द्विजो विमत्य लभ्यचन्द्रकः ॥ १५११ । १ । ११ ॥

विषयः । कर्पूरादि-कालिकान्तस्य व्याख्यानम् ॥

---

**No. 40.** कर्म्मोपदेशः, By शिवरामतर्कपञ्चाननः । Substance, country-made paper, 11×2 inches. Folia, 37. Lines, 6-8 on a page. Extent, 874 çlokas. Character, Bengali. Date, Sk., 1728. Place of deposit, Vivandigráma, District Dháká, Bhaṭṭácáryya's House. Appearance, old. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।
प्रणम्य सूर्य्यं जगदेकनाथम्
ज्योतिर्व्विदामिष्टफलं ददानम् ।
संक्षेपतः श्रीशिवरामशर्म्मा
कर्म्मोपदेशं तनुते निबन्धम् ॥
सद्विद्या विगतोपमा भगवती चीणप्रभा भारती
भूपालाः खलु नीचकर्म्मरसिकाः कालो बलीयान् कलिः ।
इत्याद्यन्तु गुणार्ज्जने विमनसः पाण्डित्यविद्वेषिणो
ये बाला अपि ते भवन्तु कृतिनस्तेषां कृते मत्कृतिः ॥
नास्ति व्याकरणादरो न च पुनः सत्काव्यबन्धे रसो
नालङ्कारकुतूहलं श्रुतिकथा प्रक्षीणभावं गता ।
तर्कादावपि नैव सा रसिकता पौराणिकी सत्कथा
नो कौर्त्तिं कलौ समादरकरी विद्या भवेज्ज्यौतिषी ॥
निष्फलान्यन्यशास्त्राणि विवादस्तेषु केवलम् ।
सफलं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥
शास्त्रप्रशंसा ।
गुरुर्गतितिथिनक्षत्रनवद्वायनानि च । इत्यादि ।

**End.** तृतीयवेलायाम् ।
चौरात्तयं बन्धनं कलहं सुघोरम्
शनेः कथां प्रवदन्ति वारवचन्न ++ ।

नानाप्रकारपिशितं शुचदर्शनञ्च
काको भयं कथयतीह किमत्र चित्रम् ॥
चतुर्थवेलायाम् ।
प्रश्नेऽभयं किमपि कार्यमतीव कष्टम्
निर्याणमात्मगमनं विविधाश्च वार्त्ताम् ।
यानं स्ववेश्मगमनं प्रविशं तथैव
भाग्यं वरं दिशति वायस + + + + ॥

Colophon. इति शिवरामतर्कपञ्चाननभट्टाचार्यविरचिते कर्मोपदेशे चतुर्थोऽध्यायः ॥
समाप्तोऽयं ग्रन्थः । शकाब्दाः १७१८ ।

**विषयः** । ज्योतिषशास्त्रप्रशंसाकथनम् । दैवज्ञप्रशंसाकथनम् । राशिस्वरूपनियमादिकथनम् । राशिवाचकनामकथनम् । मेषादीनां वर्णकथनम् । राशीनां द्विपदादिकथनम् । राशीनां ग्राम्यारण्यादिविभागकथनम् । तेषां विप्रादिसंज्ञाकथनम् । अभिजिन्निरूपणम् । नक्षत्रनिरूपणम् । नक्षत्रदैवतनिरूपणम् । नक्षत्रगणस्य ध्रुवादिगणकथनम् । नक्षत्राणां देवनरराक्षसादिगणकथनम् । नित्ययोगकथनम् । विष्कुम्भादियोगसंज्ञाकथनम् । करणविवरणम् । तिथिनिरूपणम् । कालवेलाकथनम् । वारवेलाकथनम् । यामार्द्धाधिपकथनम् । दण्डाधिपकथनम् । योगिन्युदयकथनम् । नवग्रहाणां नामान्तरकथनम् । ग्रहाणां वर्णकथनम् । वेदाधिपकथनम् । दिक्पतिग्रहकथनम् । दिग्बलिग्रहकथनम् । ग्रहाणां स्थानबलकथनम् । ग्रहाणां नैसर्गिकभोगकथनम् । ग्रहाणां नैसर्गिकमित्रामित्रकथनम् । समग्रहकथनम् । पापग्रहकथनम् । शुभग्रहकथनम् । ग्रहाणां दृष्टिकथनम् । ग्रहाणां केन्द्रकथनम् । त्रिकोणसंज्ञाकथनम् उपचयादिहोराकथनम् । लग्नादिद्वादशस्थानकथनम् । नाडीनक्षत्रनिरूपणम् । नक्षत्रामृतयोगकथनम् । सिद्धियोगकथनम् । दिनदग्धाकथनम् । मासदग्धाकथनम् । पापयोगकथनम् । अमृताख्ययोगकथनम् । अधमताख्ययोगकथनम् । उत्पातादियोगकथनम् । ककचादियोगकथनम् । चन्द्रशुद्धिनिरूपणम् । अधमदिननिरूपणम् । चन्द्रस्पर्शकथनम् । संक्रान्तिनिरूपणम् । रविसंक्रमणगणनविधिकथनम् । अयनांशजसंक्रान्तिनिरूपणम् । समरात्रिन्दिवकालकथनम् । दिवसमानकथनम् । रात्रिमानकथनम् । अङ्गुलिमानेन दिवारात्रिदण्डज्ञानोपायकथनम् । पुष्पनामादिना दण्डज्ञानोपायकथनम् । लग्नमानकथनम् । क्षेत्रकथनम् । होराकथनम् । नवांशद्वादशांशत्रिंशांशकथनम् । रविशुद्धिकथनम् । चन्द्रशुद्धिकथनम् । चन्द्रस्य वर्णादिकथनम् । चन्द्रशुद्धिविवेचनम् । ताराशुद्धिकथनम् । सर्वग्रहाणां शुद्धिकथनम् । षड्वर्गप्रशंसाकथनम् । ग्रहाणां वैगुण्ये औषधादिधारणविधिकथनम् । तारावैगुण्यदोषोपशमनविधिकथनम् । नाडीनक्षत्रशान्तिकथनम् । ग्रहदर्शनफलकथनम् । योगकरणदोषोपशमनविधिकथनम् । संक्रान्तिसंज्ञादिनिरूपणम् । महाविषुवादिफलकथनम् । उत्त

रायचक्रकथनम् । दृषिवायनचक्रकथनम् । शनिहसंक्रान्तिफलकथनम् । नाडीनक्षत्रे पापग्र-हसंक्रमणफलकथनम् । भौमचक्रकथनम् । गुरुचक्रकथनम् । शनिचक्रकथनम् । राहुचक्रकथनम् । जन्मतिथिविधिकथनम् । नक्षत्रविशेषे रोगोत्पत्तिफलकथनम् । मरणयोगकथनम् । विवाह-कथनम् । द्विरागमनकथनम् । गर्भाधानकथनम् । पुंसवनकथनम् । पञ्चामृतकथनम् । सीम-न्तोन्नयनकथनम् । नामकरणकथनम् । निष्क्रामणकथनम् । अन्नप्राशनकथनम् । चूडाकरण-कथनम् । सामान्यतः क्षौरविधिकथनम् । कर्णवेधकथनम् । विद्यारम्भकथनम् । उपनयनकथनम् । समावर्त्तनकथनम् । अग्निस्थापनकथनम् । सन्न्यासग्रहणकथनम् । धनुर्विद्यारम्भकथनम् । राज्या-भिषेककथनम् । रत्नादिधारणकथनम् । खड्गादिधारणकथनम् । नवशय्याद्युपयोगकथनम् । नवयानाद्यारोहणकथनम् । राजदर्शनकथनम् । सेवाचक्रकथनम् । देवताघटनकथनम् । देव-विग्रहनिर्म्माणकथनम् । सामान्यतः देवप्रतिष्ठाकथनम् । नौकागठनकथनम् । नौकाचालनक-थनम् । परीक्षाकथनम् । औषधकरणादिकथनम् । आरोग्यस्नानकथनम् । वास्तुभूमिनिरूपणम् । नागमयनकथनम् । गृहारम्भकथनम् । गृहप्रवेशकथनम् । जलाशयविधिकथनम् । हलप्रवाह-कथनम् । बीजवपनकथनम् । मोचारणकथनम् । धान्यादिच्छेदनकथनम् । नवान्नकथनम् । धान्यादिहदिदानकथनम् । क्रयविक्रयादिषु नक्षत्रादिकथनम् । यात्राविधिकथनम् । कलियुगा-दिसंख्याकथनम् । राजादिफलकथनम् । मेघाधिपादिकथनम् । आढकपरिमाणादिकथनम् । भूमिकम्पज्ञानकथनम् । तत्र समयविशेषे फलभेदकथनम् । काकचरित्रकथनञ्च । इति ।

---

**No. 41.** कलापतत्त्वबोधिनी (प्रथमखण्डः), By रामचन्द्रः । Substance, country-made paper, 18 × 1½ inches. Folia, 79. Lines, 4 on a page. Extent, 1,382 çlokas. Character, Bengali. Date, ? Place of deposit, Púḍápáḍá, District Dháká, Paṇḍita Jagadbandhu Tarkavágíça. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

श्रीनाथचरणाम्भोजं नत्वा भूयो दिनन्दिनम् ।

क्रियते रामचन्द्रेण कलापतत्त्वबोधिनी ॥

तत्रादौ समाप्तिकामो मङ्गलमाचरेदिति प्राचीनमतं । समाप्तिप्रतिबन्धकी-भूतविघ्नध्वंसकामो मङ्गलमाचरेदिति नवीनमतं । समाप्तिस्तु शास्त्रस्य चरम-वर्णोत्पत्तिरूपा कर्तृत्वादिकरणैरेव जायते । तत्र शिष्टोक्तः प्राचीनानु-यायी वक्ष्यति धर्म्माभावपक्षस्य शास्त्रान्तरप्रसिद्धेरिति तत्र शिष्टशिष्टाचारं नमस्कारो धर्म्मजनकोऽपि शिष्टक्रियमाणत्वादित्यनुमानमूलशिष्टाचारपरि प्राप्तेष्टदेवतानमस्कारप्रवृत्तेः सम्बन्धप्रयोजनज्ञानाधीनत्वात् सम्बन्धप्रयोजन-

चाद्यौ निबध्नाति प्रबध्नेति । सर्व्वं मयाद्येव पञ्चाद्यौ प्रबध्य दुर्गसिंहीय-
कातन्त्रवृत्तिदुर्गपदानि चवं विवृणोमि इति भविष्यत्सामीप्ये वर्त्तमानता
विवरिष्यामीत्यर्थः ॥ इत्यादि ।

**End.** तथाद्यष्टनवचन्द्रमितवत्सरे निषेधापनिवारणार्थमिति कविराजतात्पर्य्यम् ।
पूर्व्वसूरिकृतं दृष्ट्वा यदत्र लिखितं मया ।
कविराजविवरं तद्विचार्य्यं सुमनीषिभिः ॥

**Colophon.** इति शिवपुरतपाकीय उजारचाद्रग्रामनिवासिकाञ्जीकुलसमुद्भवचरित्ररात्म-
जश्रीरामचन्द्रशर्म्मकृतायां कलापतत्त्वबोधिन्यां सन्धौ द्वितीयः पादः समाप्तः ।

**विषयः ।** कातन्त्रसन्धिप्रकरणे त्रिलोचनकृतपञ्जिकाया व्याख्यानम् ।

---

**No. 42.** कलापतत्त्वबोधिनी, (द्वितीयखण्डः) By रामचन्द्रः । Substance, country-made paper, 18 × 1½ inches. Folia, 81. Lines, 5 on a page. Extent, 3,000 çlokas. Character, Bengali. Date, ? Place of deposit, Puḍápáḍá, Dháká, Paṇḍita Jagadbandhu Tarkavágíça. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा गुरुपदाम्भोजं श्रीरामचन्द्रशर्म्मणा ।
कलापतत्त्वबोधिन्यां कारकार्थो निबध्यते ॥
तत्र क्रियानिमित्तं कारकमिति लोकोपचारादेव कारकव्यवहारः । परि-
शेषसूत्रे कृतेऽपि सम्बन्धे परम्परया क्रियानिमित्तत्वमस्ते अतिव्याप्तिवार-
णाय लोकोपचाराश्रयणस्यावश्यकत्वात् । तत्र पञ्चविधं जातिद्रव्यगुणक्रिया-
स्वरूपभेदात् । तद्यथा, वृक्षः, कृष्णं, ग्लुक्षः, पाकः, देवदत्तः । पुनश्च षोढा
अपादानादिभेदात् । इत्यादि ।

**End.** न प्राकाश्ये । धातुयोगे उपसर्गप्राप्तौ निषेधः स्यात् । कथमित्याह इवेति
अनुमतिविषयो धात्वर्थसद्योतकोऽपि पुनरिवेति । अपिना क्रियायाम-
नुक्तमपि ॥

**Colophon.** इति शिवपुरतपाकीय उजारचाद्रग्रामनिवासि काञ्जीकुलसमुद्भवचरित्ररा-
त्मजश्रीरामचन्द्रशर्म्मकृतौ कलापतत्त्वबोधिन्यां कारकव्याख्या सम्पूर्णा ।

**विषयः ।** कातन्त्रकारकप्रकरणीयपरिशिष्टस्य गोपीनाथतर्काचार्य्यकृताया व्याख्याया व्या-
ख्यानम् ।

**No. 43.** कलापतत्त्वबोधिनी (तृतीयखण्डः) By रामचन्द्रः । Substance, country-made paper, 18 × 1¼ inches. Folia, 125. Lines, 6 on a page. Extent, 4,125 çlokas. Character, Bengali. Date, ? Place of deposit, Purápáḍá, Ḍháká, Paṇḍita Jagadbandhu Tarkavágíça. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य श्रीनाथपादारविन्द-

मज्ञानसन्दोहतमोभिदापहम् ।

कलापग्रन्थस्य च तत्त्वबोधिनीं

कुर्म्मो कृती श्रीद्विजरामचन्द्रः ॥

उपायाः सन्ति यद्यपि गोपीनाथादिनिर्म्मिताः ।

शिशुविबोधनार्थाय तथाप्येष ममोद्यमः ॥

तत्रादौ शिष्टाचारतयानुमानतः समाप्तिकामो मङ्गलमाचरेदिति प्राचीनाः । तन्नेति नवीनाः । तथाहि समाप्तिर्ग्रन्थस्य चरमवर्णोत्पत्तिः । सा च कण्ठे वायुसंयोगादेव उत्पद्यते । तस्मान्न समाप्तौ मङ्गलस्य कारणता । अतः समाप्तिप्रतिबन्धकीभूतविघ्नध्वंसकामो मङ्गलमाचरेदिति नवीनमतं । विघ्नाभावे समाप्तिस्तु वायुसंयोगादेव जायते इति मतमवलम्ब्य उच्यते । इह खलु सकलविद्वज्जनमनश्चकुश्चरणास्पतिपरित्राणविविधविघ्नध्वंसकारणकारणप्रारब्ध-कर्म्मोपकारकचरितमङ्गलाचरणपुरःसरं प्रवृत्तेः सम्बन्धप्रयोजनाज्ञतया च सम्बन्ध-प्रयोजनाभिधानपुरःसरं ग्रन्थमारभमाणः शिष्टप्रतिपादनीयश्लोकमादौ निबध्नाति संसारेति ॥

**End.** तत्रादेवमहत्ता संयोगस्य लोप इति विदधाति । तदधिकारार्थोऽयमित्याह अधिकार्य्यमिति । अनन्तरावयवसम्बन्धे षष्ठी वक्ष्यमाणैरन्वयार्थं । अन्ये तु संयोगो लोप्य इत्यभेदान्वयादधिकारोऽयं वक्ष्यमाणैरन्वयार्थमवयवसम्बन्धे षष्ठीत्याहुः ॥

**Colophon.** इति शिवपुरतपोवनीय-उत्तरपाड़ग्रामनिवासि-काश्मीरकुलसमुद्भव-हरिच रात्मज श्रीरामचन्द्रशर्म्मकृतायां कलापतत्त्वबोधिन्यां परिशिष्टं समाप्तं ॥

**विषयः ।** गोपीनाथतर्काचार्य्यकृतकातन्त्रपरिशिष्टव्याख्याया व्याख्यानम् ॥

---

**No. 44.** कलापसारः By रामकुमारन्यायभूषणः । Substance, Foolscap paper, 6½ × 8 inches. Folia, 101. Lines, 12 on a page. Extent,

सुधीर-श्रीरामगति-वाचस्पति-सुतो मतः ।
ग्रन्थेऽस्मिन् नाधिकारोऽस्ति न गुर्व्वादिविचारणं ।
सुपसन्देहभङ्गश्च प्रयोगैरेव जायते ॥
सर्व्वैर्विकल्पता सूत्रे विभक्तैरेव लुक् क्वचित् ।
अनेकलेखपत्रं सुपद्मावित्वता क्वचित् ॥
प्रयोगैरनुमानञ्च यतो ह्येष विरच्यते ।
निपातनादन्यसिद्धिरिति शास्त्रस्य निर्णयः ॥
क्षमाप्रार्थितरं याचे विबुधा ये कृपामयाः ।
अशुद्धं ग्रन्थसन्दर्भे शोधितव्यं महद्गुणैः ॥

विषयः । सुपद्मबोधसारस्वतकलापादिव्याकरणेभ्यः सारमादाय सङ्कलितं कलापसारांशं संक्षिप्तं व्याकरणम् । अस्ति चात्र संज्ञा-सन्धि-सुबन्त-कारक-समास-तद्धित-तिङन्त-धातु-कृदन्त-प्रकरणानि यथाक्रमं सन्निवेशितानि ॥

---

**No. 45.** कविरत्नाकरः । Substance, country-made paper, 12 × 4 inches. Folia, 5. Lines, 12 on a page. Extent, 135 çlokas. Character, Bengali. Date, ? Place of deposit, Brámhaṇamaṇḍalígrám, Rámanáráyaṇa Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । वाग्देवीचरणे नत्वा वाग्देवीचरणौ हृदि ।
स्मरन्ति साधवः सर्व्वे सर्व्वकार्य्येषु साधनम् ।

**End.** स एव तातः स एव पुत्रः स एव योगः स एव बोधः ।
सदेव चेत सदेव कर्म्म स एव लोकः स एव धर्म्मः ॥ ० ॥

**Colophon.** इति समाप्तोऽयं ग्रन्थः ।

विषयः । नीत्युपदेशमूलककतिपयश्लोकाः .

---

**No. 46.** कात्यायनाग्निश्राद्धप्रयोगः । Substance, country-made paper. 13 × 2½ inches. Folia, 21. Lines, 5 on a page. Extent, 252 çlokas. Character, Bengali. Date, ? Place of deposit, Rájpur, Post Office Śonárpur, Rájendranáráyaṇa Bhaṭṭácáryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । यथाप्येकविधविधितः । अनन्तरं श्राद्धं पुत्रादिः कर्त्ता कारयेत् । ततो अन्नप्राशनं कार्पासिका यज्ञस्य सर्व्वोत्तरीयाच्छादन-
वीरंकुमारी सूत्रो दक्षिणाभिरतं कारयेत् ।

**End.** ततः पिण्डं गोऽजाविप्रेभ्यो दद्यात् । अग्नौ वा क्षिपेत् । तत अद्येत्यादि अमुकगोत्रस्य अमुकदेवशर्म्मणः कृतैतदाद्यैकोद्दिष्टश्राद्धकर्म्मच्छिद्रमस्तु अच्छिद्रमिति प्रतिवचनं । ततो वैश्वदेवबलिकर्म्मणी कुर्य्यात् ॥

**Colophon.** इति यजुर्वेदिकाण्वशाखिनामाद्यैकोद्दिष्टश्राद्धप्रयोगः समाप्तः ॥

**विषयः ।** काण्वशाखिनामन्त्येष्टिपद्धतिः । तथा काण्वशाखिनामाद्यैकोद्दिष्टश्राद्धादिप्रयोगः ।

---

**No. 47.** कातन्त्रकौमुदी, By गङ्गेशशर्म्मा । Substance, country-made paper, 13½ × 3 inches. Folia, 7. Lines, 4 on a page. Extent, 85 çlokas. Character, Bengali Date, ? Place of deposit, Kṛṣṇapura, Post Office Vaidyerbázár, District Dháká, Paṇḍita Kálikṛṣṇa Vidyávinoda. Appearance, new. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

शिवं प्रणम्य सर्व्वेशं सर्व्वज्ञानप्रदायकम् ।

कातन्त्रकौमुदी चेषा कृता गङ्गेशशर्म्मणा ॥

जयति पुरन्दरःस्तु कुसुमतन्वाङ्गजोऽपरेतुः

श्रुतिपरिमितकीर्त्तिः कथन गौरिजन्मा ।

प्रथितचतुरास्यो ... ... ... ... ...

यथाकृतिः सर्व्ववर्म्मणा ... ... ... ... ॥

न चन्द्रगोमी न च दुर्गसिंहः कात्यायन ... ... न वेद ।

यथाक्रमाह्वोकितसर्व्वशास्त्रः कातन्त्रतन्त्रार्थविनिश्चयाय ॥

सर्व्वहतशून्यानुसन्देहे विपरीतपदस्य लिविर्ज्ञातव्या । सिद्धो वर्णसमाम्नाय इत्यत्र सिद्धपदपाठात् चतुर्दशादावितिसंज्ञावाचकशब्दस्य माङ्गल्यार्थेऽपि विवचनं ।

कृत्वा च सङ्कुलं युद्धं प्रविश्य शिविरं पुनः ।

कुरवोऽऽत्मचितं मन्त्रं सभायाञ्चक्रिरे मिथः ॥

अस्यार्थः कुरवो सङ्कुलं युद्धं कृत्वा पुनः शिविरं प्रविश्य मिथो निर्ज्जने सभायां आत्मचितं मन्त्रं चक्रिरे । "उमकारयोर्मध्ये" इत्यत्र मध्यपदपाठात् आकारयोरपि मध्ये विसर्गस्योकारः । ... ... ... ... ... ... ... ...

पुत्रोऽस्य मङ्गलं मन्ये पतर्भागीरथीतटे ।

न पुत्रमङ्गलं मन्ये रामचन्द्रस्य कापथ ॥

रप्रकृतिरत्नाविपरोपीत्यत्र अपि अत्रत्यात् पुनोऽस्तेति परे रेफं वाधिका
विसर्गलोपाकारः । इत्यादि ॥

**End.** वारिसभे स्थितं पद्मं कम्पयेत् केन हेतुना ।
हेतुनेत्यत्र "षष्ठी हेतुप्रयोगे" इति षष्ठ्यत्र प्राप्नोति । अत्यनुसरण नित्य-
मवचादनित्यमपि प्रकरणेऽस्मिन्निति तृतीया ।
अध्यायाच गुरोर्वन्दि शिष्यं वन्दि चतुर्दशी । इत्यत्रापि ।
अत्यानुरक्ता नरकस्य जिष्णवः गुणैर्नृपाः स्वाशिषमभ्ययाचिषुः ।
नृपाः ... गुणैः स्वाशिषं तथ्यां अनुमतवन्तः, नृपाः विभूताः नरकस्य
जिष्णवः "न निष्ठादिषु" इत्यत्र नञोऽनित्यत्वात् नरकस्येति षष्ठी ॥

**Colophon.** इति महेशचन्द्रकृता कातन्त्रकौमुदी समाप्ता ॥

**विषयः** । ग्रन्थेऽस्मिन् तत्रभवता महेशचन्द्रेण "स्वेन दाशरथी रामः स्वेन राजा
युधिष्ठिर" इत्याद्यसंलग्नपदानां कातन्त्रसूत्राण्युद्धृत्य उद्धृतपदविशेषवतिशमनिर्देशादिभिः
समाधानानि कृतानि ॥

---

**No. 48.** कातन्त्रचन्द्रिका, वा कातन्त्रपरिशिष्टचन्द्रिका By रामदास-
चक्रवर्ती । Substance, country-made paper, 18 × 1½ inches. Folia, 97
Lines, 11 on a page. Extent, 5,643 çlokas. Character, Bengali. Date,
? Place of deposit, Pancasáragrama, District Dháká, Paṇḍita
Mahendranatha Kávyatírtha. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
नानाटीकां समालोच्य गोपीनाथकथकथा ।
निर्मिता यत्नतः पुत्री मन्दधीभिः स्फुटत्वनाम् ॥
अपादानं । अथ मध्यमायं सम्प्रदानमपादानसंज्ञं भवति इति कथं न
भवतो वदुं । इत्याच संज्ञान्तरमिति । युक्तिः पुनरियम् ॥ अपादानत्वा-
नन्तरं सम्प्रदानमित्यकरण + + संज्ञान्तरमिति मध्याहारापादानवीभावः ॥
इत्यादि ।

**End.** सुखदुःखं सुखदुःखे चक्रवानां विरोधिनाच इति समाहारः । इतरेतरच
टीकाकृता दर्शितः । अन्यच विनिवक्ता रचानभिधानप्रयत्नता । भावेऽप्य-
क्तनिमयोऽप्यनित्युक्तं ।
दुर्गटीकां समालोच्य कुलचन्द्रादिसंमतान् ।
रचितन्यायकारावां ज्ञयादित्यस्य संमतिम् ॥

जिनेन्द्रचन्द्रदासानां शास्त्रस्य च समयात् ।
चाद्राय धीमता सम्यक् श्रीरामदासशर्म्मणा ।
कातन्त्रपरिशिष्टस्य शिष्यबोधोऽयं कृतो मया ॥
ज्ञातुं सुखेन ये धीराः कातन्त्रार्थविनिश्चयम् ।
तेषां पाठं मत्प्रणीतशिष्यबोधाचरच्छिता(?) ॥

**Colophon.** इति श्रीरामदासचक्रवर्त्तिकृतौ कातन्त्रपरिशिष्टपञ्जिकायां समासप्रकरणं समाप्तम् ॥

**विषयः ।** कातन्त्रपरिशिष्टीयकारकसमासप्रकरणयोर्व्याख्यानम् ॥

---

**No. 49.** कातन्त्रपरिशिष्टप्रबोधप्रकाशिका, By शङ्करशर्म्मा Substance, country-made paper, 20 x 5 inches. Folia, 24. Lines, 10 on a page. Extent, 1,395 çlokas. Character, Bengali. Date, ? Place of deposit, Sáhávázpur, District Tripurá, Pandita Kálinátha Tarkaratna. Appearance, new. Prose. Generally Correct.

**Beginning.** ॐ नमो गणपतये ।
प्रणम्य मातापितरौ श्रिया शङ्करशर्म्मणा ।
श्रीपीताम्बरस्य क्रियते वाक्प्रबोधैः प्रकाशते ॥
यद्यं गतवति गुरुतरयो पञ्चार्थोपदेशभागुना रचिते ।
सकलस्वप्रबोधपञ्जिकेयं जनयतु तमः काशापचारायाम् ॥
केचिद्विदुषमं ज्ञातं ज्ञातं व्याकरणादिकम् ।
तर्कं पञ्चसमं ज्ञेयं तैरयमं रसार्थिभिः ॥
यथा यत्नं विनेच्छूनां न रसः प्रस्तुतो भवेत् ।
तथा तर्कं विनाप्येषां नार्थः स्फुरितो भवेत् ॥
ग्रन्थारम्भे विघ्नविनाशाय कृतमिष्टदेवतानमस्काररूपमङ्गलमादौ शिष्य-शिक्षार्थं नावधार्यः शिष्यावबोधाय प्रतिजानीते यो जात इति । इत्यादि ।

**End.** ( खण्डितम् ) ।

**विषयः ।** श्रीपीताम्बरकृतकातन्त्रपरिशिष्टटीकायाः शङ्करकृतव्याख्यानम् ।

---

**No. 50.** कातन्त्रप्रदीपः By विद्यासागरः । Substance, country-made paper, 12 × 3 inches. Folia, 115. Lines, 6 on a page. Extent, 2,253 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamansiñha Serpur, Paṇḍita Candrakánta Tarkálaṇkár. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो नारायणाय ।

विकसतु नवकुसुमाली

मम हृदि हरिपादपारिजातस्य ।

राजभयादिव विधुना

कापथगो निर्निमित्तो वियति ॥

नमयति हृदिघनतिमिरं

तिमिरविधुरोद्भवः कोऽपि ।

कलयति यत्र कलभो

मधुकरनिकुराम्बिते कमले ॥

धातुः स्वं रूपमिति न्यायाद्वाच भूप्रभृतय इति ॥ इत्यादि ।

**End.** सामान्यातिदेशे विशेषस्यानतिदेश इति श्रीपतिनोक्तं । व्यासस्य च विशेषाभावात् । स्यादावित्युक्तमादित्याद्यः ॥

**Colophon.** इति महामहोपाध्यायश्रीकान्तपण्डितात्मजविद्यासागरभट्टाचार्य्यपुण्डरीकाक्षकृते कातन्त्रप्रदीपे चतुष्टयस्य तृतीयपादः समाप्तः ॥

विषयः । कातन्त्रव्याकरणस्य व्याख्यानम् ।

---

**No. 51.** कातन्त्रवृत्तिः By वररुचिः । Substance, Palm leaf, 13 × 3 inches. Folia, 85. Lines, 9 on a page. Extent, 2,151 çlokas. Character, Bengali. Date, S. K. 1553 ? Place of deposit, District Faridpura, Post Office Pálang, Village Dhánuká, Paṇḍita Jagadbandhu Vidyábhúṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम् ।

कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम् ॥

कुमारमाराध्य महेश्वरात्मजम्

कलापतन्त्राब्धिनिदधार यः ।

अनेकशाखाप्रतिबद्धबुद्धये
नमोऽस्तु तस्मै भुवि सर्व्ववर्ण्णवे ॥
येन व्याकरणार्णवं ... ... ... गोपालगोष्ठ्यांकृतं
धातुपाद-समास तन्त्रकुटिलं सर्व्वंच ... ... मयत् ।
आलोच्य जगतो हिताय लघुतः गौवर्ण्णवर्णा कविः
सिद्धो वर्ण इतीह सूत्रमकरोत् ज्ञानाय तस्मै नमः ॥
अल्पाक्षरमसन्दिग्धं सारवद्गूढनिर्णयम् ।
निर्दोषं हेतुमत्......सूत्रमित्युच्यते बुधैः ॥
संज्ञा च परिभाषा च विधिर्निर्णय एव च ।
प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥
संज्ञानिमित्तं कर्त्तारं परिमाणं प्रयोजनम् ।
प्रागुक्ता सर्व्वतन्त्राणां पश्चाच्छास्त्रानुवर्त्तयेत् ॥
इदं पुनर्विधिसूत्रं । सिद्धो वर्णसमाम्नायः सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः के पुनस्ते वर्णा अक्षराणि तेषां समाम्नायः ... ... ... सूत्र-सिद्धवचनमन्यथानुपदेशार्थं अक्षरसमाम्नायस्य सर्व्वविशिष्टविदिता ...... अक्षरानुक्रमेणैवचिरकाल ...... । सिद्धो वर्णसमाम्नायवचनं गुणादिसंज्ञावि-धानार्थं कः पुनरसौ वर्णसमाम्नाय ... ... ... सिद्धकल्पादकारादि हकारपर्य्यन्तं इत्यादि ॥

**End.** न य्वोः पदाद्योर्द्धिरागमः । यकार वकारयोः पदाद्योः समीपस्थस्य द्विर्न भवति तयोश्चादौ द्विरागमो भवति स न तद्धिते परतः । व्याकरणं वेत्ति अधीते वा वैयाकरणः ... ... ... ... ... ... ... ... ... द्वारादीनाञ्चेति वक्तव्यं द्वारे नियुक्तः दौवारिकः द्वारपालस्येदं दौवारपालं ... ... ... ... ... ... ... ... स्वरंगमनमाह सौवरंगमनिकः श्वन इदं शौवनं ... ... ... ... स्वागतेन चरति स्वागतिकः सुद्वारेण चरति सुद्वारिकः व्यल्कस्यापत्यं व्याल्किः व्यवहारेण चरति व्यावहारिकः एवमादयोऽन्ये च द्रष्टव्याः ॥

**Colophon.** इति वरवचिकृतायां ... सच ... कायां यशोमाधवबोधितायां हृत्तौ चतु-ष्टयप्रकरणं समाप्तम् ॥ नाम्नि चतुष्टये षष्ठः पादः समाप्तः । यथादृष्टत्यादि नमो भगवते वासुदेवाय ॐ नमो गोपालाय ।

विषयः । पञ्चसन्धिं चतुर्वर्णाध्यायञ्च कृत्वा कातन्त्रव्याकरणे वररुचिसंयोजितायां कृतौ नाम-कारक-समास-तद्धितप्रकरणात्मकस्य चतुष्टयस्य वृत्तिरस्ति ॥

---

**No. 52.** कातन्त्रवृत्तिचन्द्रिका By हरिरामः । Substance, country-made paper, 13 × 3 inches. Folia, 47. Lines, 6 on a page. Extent, 1,022 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala, Mayamansinha, Kálícandra Bhaṭṭácáryya. Appearance new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
शिवनामपदद्वन्द्वं नत्वा गुरुपदं तथा ।
क्रियते हरिरामेण व्याख्यासारं समासतः ॥
ग्रन्थारम्भे शिष्टाचारपरिपालनार्थं निखिलविघ्नविघातार्थञ्च शिवनमस्कारं निबध्नाति देवदेवमित्यादि ।

**End.** अतएव संयुक्तजातीयनामकस्यानेकस्योच्चारणं प्रति भेदो नास्ति इत्यतो योगविभागेन वक्तव्यः ।

**Colophon.** इति कातन्त्रवृत्तिचन्द्रिकायां सन्धौ पञ्चमः पादः समाप्तः ॥

विषयः । कातन्त्रवृत्तेर्व्याख्यानम् । अत्र च सन्धिपादपर्य्यन्तमस्ति ।

---

**No. 53.** कातन्त्रोत्तरपरिशिष्टं, By त्रिलोचनदासः । Substance, country-made paper, 13½ × 5 inches. Folia, 178 (without 1st to 28th). Lines, 6 on a page. Extent, 2025 çlokas. Character, Bengali. Date, ? Place of deposit, Vásáil, Post Office Rasuniá, District Dháká Paṇḍita Abhaya caraṇa Vidyáratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ( खण्डित ) हैमन्ताद्वा तलुक् च । अस्मात् ठेयण् स्यात् तलुक् च वा । हैमनं हैमन्तं पक्षे हैमन्तिकं ॥ प्रावृष एण्यः । अस्मात् एण्यः स्यात् प्रावृषेण्यो मेघः । प्रावृषेण्यं पयोवाहमिति रघुः ॥ सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यस्तनट् । सायादेः कृतनिपातनात्...... एभ्यः कालेभ्यः शेषे तनट् स्यात् । सायन्तनं । सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीमिति भट्टिः । चिरन्तनं प्राह्णेतनं प्रगेतनं अव्ययाद्दिवातनं इदं नक्तन्तनं । पौष्पमेतद्दिवातनमिति भट्टिः । पूर्वाह्णापराह्णाभ्यां वा । आभ्यां शेषे तनट् स्याद्वा । पूर्वाह्णेतनं पौर्वाह्णं अपराह्णेतनं आपराह्णिकं । चिरपरुत्परारिभ्यस्त्नः । एभ्यः शेषे त्नो वा

स्यात् । चिरत्नं चिरन्तनं चरत्नं । तस्य च् चेति कश्चित् । चत्वरं चत्वा-
रिंशं । केचित्तु परलोपविभाषां नेच्छन्ति । पुरो नः । पुराख्ये च स्यात् ।
पुराणः पुरातनः । तनं च स्यात् । पूर्वाः शेषविषयः । इत्यादि ॥

**End.** वो पदान्ते वा ह्रस्वो दीर्घः । असन्ध्यां वो पदान्ते ह्रस्वो दीर्घः स्यात् ।
अभिमन्युं अरघट्टं अभिमन्यं अरघट्टं अमावास्यं अमावास्यं । अत्र नः ।
असन्ध्यां वो पदान्ते धातोः उत्तो वा स्यात् । अभ्यासं अभ्यासं ।
चवरयकारेभ्यः षेड्गरौरकलगोवरोषाद्य वो ङः । एत एषु वो ङो वा
स्यात् । षदोषोह्यं षदोषोध्यं । द्विदोषिध्ये द्विदोषिढ्वे । ददशिध्वं दद-
शिढ्वं । वेद्विति धिं तोर्षीध्वं । मुक्तपूर्वेनाद्यनाथयात् धिलं । मर्वौ
आर्शिरन्तुवेश्वरे । अशिन् मर्वौ आर्शिः स्यात् । परिवार्षोन्ति परिवन्ति ।
हे इत्लोपो न चतः । अशिन् न चतो दीर्घः स्यात् । हय हयः नय नयः ॥
यः सूरसुविरिव वक्ति यथा यथेष्टा
यो वान्यथा लिखति भिन्नमुदारवेदा ।
व्याचार्य्यपाणिनिमुनिप्रभृतेस्तु नस्य
आज्ञे पतेत् सपदि तस्य कठोरशापः ॥

**Colophon.** इति सद्वैद्यमाधवदासकवीन्द्रतनयगोपीनाथदासकवीन्द्रविरचितायां का-
तन्त्रवृत्त्युत्तरपरिशिष्टं समाप्तम् ॥

विषयः । गोपीनाथेन कृतं कातन्त्रव्याकरणस्य परिशिष्टमसम्पूर्णमिलिकृत्तरपरिशिष्टे
समास-तद्धित-धातुप्रकरणानि सम्पूर्णानि गोपीनाथदासेन लिखितानि ।

---

**No. 54.** कामाख्यातन्त्रं, By शिवः । Subtance country-made paper, 14×4 inches. Folia, 36. Lines, 6 on a page. Extent, 480 çlokas. Character, Bengali. Date, ? Place of deposit, Májpádá District Dháká, Bábu Rása vihárí Ráya. Appearance, tolerable. Verse. Incorrect.

**Begininng.** ॐ नमः परदेवतायै ।
गौर्य्युवाच ।
भगवन् सर्व्वधर्म्मज्ञ सर्व्वविद्याप्रिय प्रभो ।
सर्व्वेदागमहृदय सर्व्वागमप्रकाशक ॥
त्वानि सर्व्वतन्त्राणि साधनानि च भूरिशः ।
विद्यायाः सकला देव कथितानि प्रसादतः ॥

कामाख्यातन्त्रं तन्त्रं किं जानासि वद प्रभो ।
यतीदं रहस्यानां तेनाथं नवबोधिता ॥

श्रीशङ्कर उवाच ।

शृणु देवि तुदा भद्रे मदीयप्राणवल्लभे ।
योनिरूपा महाविद्या कामाख्या वरवर्णिनि ॥
परदानन्ददा नित्या महाविभववर्द्धिनी ।
सर्व्वेषां जननी सापि सर्व्वेषां तारिणी मता ॥
रमणी चैव सर्व्वेषां कूलकूलतमा प्रभा ।
तस्याख्यानं प्रवक्ष्यामि सावधानावधारय ॥
विधातु सकला देवा ये ये सिध्यन्ति साधकाः ।
यत्र कुत्रापि केनापि कामाख्या फलदायिनी ।
कामाख्याविमुखा लोका निन्दिता भुवनत्रये ।
विना कामात्मिकां कापि न दात्री सिद्धिसम्पदाम् ॥ इत्यादि

**End.** कामाख्याख्यमहापूजा त्रिषु लोकेषु दुर्लभा ।
सत्यं सत्यं महादेवि सत्यमेतद्ब्रवीमि ते ॥
भैरवेण पुरा प्रोक्ता कामाख्या पु+ +खिता ।
पीतपुष्पेण होमेन राज्यं भवति निश्चितम् ॥
रक्तप्रफुल्लहोमेन वश्येदखिलं जगत् ।
सद्यः प्रत्ययमायाति सद्यः खेचरतां व्रजेत् ॥

**Colophon.** इति श्रीकामाख्यातन्त्रे हरपार्व्वतीसंवादे पञ्चदशः पटलः समाप्तः ॥

**विषयः।** कामाख्याया उपासनेनैव सारूप्यरूपमोक्षप्राप्तिः । तस्या मन्त्रोद्धारादिविधिः । तन्त्रमन्त्रमाहात्म्यादिः । तस्याः पूजाक्रमः । तस्यै जवादिकुसुमदानमाहात्म्यादिकथनम् । पञ्च-तत्त्वविधिः । स्वयम्भूकुसुमादिविधिः । भक्तिं विना कलौ चक्रानुष्ठानदोषकथनम् । योनि-पूजादिविधिः । लतासाधनादिविधिः । गुरुतत्त्वादिकथनम् । दिव्यवीरपश्वाचारनिरूपणम् वेदाचाराचारादिकथनम् । कालिकादिमन्त्रदीक्षितानां वीराचारस्यावश्यकत्वकथनम् । तत्र मनुविद्याप्रकारकथनम् । पूर्णाभिषेकविधिः । अभिषेकाधिकारिनिरूपणम् । तत्र मुक्ति-तत्त्वनिरूपणम् । तत्र सालोक्य-सारूप्य-सायुज्य-निर्वाणरूपचतुर्विधमुक्तिकथनम् । तत्र शिवजन्मसाधनविधिः । कामाख्यारहस्य पूजनविधिः । कामाख्यातीर्थमाहात्म्यादिकीर्त्तनम् । कालीदुर्गयोरभेदनिरूपणम् । तयोः ध्यानादीनां तुल्यत्वकथनम् । इति शम् ।

---

**No. 55.** कारकचक्रतत्त्वम् । Substance, country-made paper, 17 × 2½ inches. Folia, 8. Lines, 7 on a page. Extent, 343 çlokas. Character, Bengali. Date ? Place of deposit, Viṣṇupura, Kádákuli, District Bánkurá, Rámaprasanna Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमोगणेशाय ।

प्रणम्य कमलाकान्तं वागीशं वाक्पतिं गुरुम् ।

कारकचक्रस्य तत्त्वं तन्यते येन केनचित् ॥

क्रिया निमित्तेत्यादि षष्ठ्याः कार्य्येत्यर्थः । तथाच क्रियाजनिकार्य्येतानिरूपित कारकताश्रयत्वं । देवदत्तस्तण्डुलं पचतीत्यादौ तन्निरूपितत्वाश्रयत्वसम्बन्धेन तण्डुलनिष्ठक्रियाजनिः । (इत्यादि)

**End.** कश्चित्तत्त्वान्वेषी नास्ति ।

**विषयः ।** कारकचक्रस्य व्याख्यानम् ।

---

**No. 56.** कारकपादटीका, By सर्व्वविद्यालङ्कारः । Substance, country-made paper, 12 × 3 inches. Folia, 82. Lines, 10 on a page. Extent, 3,382 çlokas. Character, Bengali. Date ? Place of deposit, Telivino Post Gadvetá Paṇḍita Candranátha Cúḍámaṇi. Appearance, tolerable. Prose. Generally. Correct.

**Beginning.** श्रीरामः । विचित्रतद्धितापि नाम्नः कर्त्रादिसंज्ञाविधानपूर्व्वकं प्रथमादिवि-भक्तिविधानार्थं तद्धितपादानन्तरं कारकपादमारभमाणः कारकेषु मुख्यत्वात् कर्तृसंज्ञं प्रथममभिदधाति । क्रियाप्रकृतिप्रत्ययविभागपरिकल्पनया शब्द-साधुत्वप्रतिपादकशास्त्रस्य व्याकरणत्वे कथं संज्ञासूत्रस्य व्याकरणत्वं । कर्त्रादि-संज्ञाविधानेन सुप्प्रत्ययान्तस्य प्रकृतिप्रत्ययविभागोऽत्र क्रियते इत्यदोषः ।

**End.** षष्ठी । एतत्तु प्रयोगप्राचुर्य्यादुक्तं पर्य्यायान्तरेऽपि सूत्रे विभक्तिदर्शनात् पाठे वार्त्तिकद्वैधे वार्त्तिकानामोपचारः । षष्ठ्यन्तपाठस्तु सम्यगेव भावकर्म्मणोरिति । एवञ्च इतो क्वचित् भावकर्म्मणोरात्मनेपदमिति पाठो लिपिकरप्रमादादेव । भावकर्म्मणोरिति पाणिनिसूत्रे चात्मन इत्यस्याभावात् अनुदात्तङित आत्मने पदमित्यादि ।

**Colophon.** इति श्रीयदुकुलोद्भवसर्व्वविद्यालङ्कारभट्टाचार्य्यविरचितायां [illegible]-पादः समाप्तः ।

**विषयः ।** कातन्त्रव्याकरणस्य कारकपादस्य व्याख्यानम् ।

---

**No. 57.** कारकरत्नं, By दुर्गसिंहः। Substance, country-made paper, $19 \times 6\frac{1}{2}$ inches. Folia, 7. Lines, 10 on a page. Extent, 350 çlokas. Character, Bengali. Date ? Place of deposit, Alágán Mayamansinha Govindadása Kṛtiratna. Appearance, new. Prose. Correct.

**Beginning.** नमो गणेशाय। वर्जंशब्दोऽत्यन्ताभाववचनं ततो धातुविभक्त्यत्यन्ताभाववदर्थवज्जितमिति कविराजः।

**End.** एतदाय परिहृतवाच तदर्थेनैव सिद्धाति चासतीति क्रियायोगे (एतेन) कारकं उच्यते।

**Colophon.** इति दुर्गसिंहविरचितं कारकरत्नं सम्पूर्णम्॥

**विषयः।** षट्कारकाणां विचारः।

---

**No. 58.** कारकरहस्यं, By रूपरामन्यायपञ्चाननः। Substance, country-made paper, $17 \times 3$ inches. Folia, 14. Lines, 8 on a page. Extent, 616 çlokas. Character, Bengali. Date, S.K. 1709? Place of deposit, Brámhaṇa maṇḍali Rámanáráyaṇa Bhṭṭácáryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय। ॐ नमः सरस्वत्यै।

कृष्णं प्रणम्य संसारसृष्टिस्थित्यन्तकारकम्।
कृतं श्रीरूपरामेण रहस्यं कारकस्य हि॥
पैतृकं पदमासाद्य भक्तियुक्तेन चेतसा।
शिशूनामवधानार्थं सुपद्मस्यानुसारतः॥
अथ कारकनिर्णयः। तथाहि।
कर्त्ता कर्म्म च करणं सम्प्रदानमतःपरम्।
अपादानञ्चाधिकरणं कारकाः षट् प्रकीर्त्तिताः॥
एतेन षट्कारकनिरूपकेण क्रमनिरूपणं सिद्धम्।

**End.** यथोच्यते द्विविकवादिमते उक्ते कारकेऽव्यतिरिक्त प्रातिपदिकार्थस्य कल्पितत्वात्। अतएव पञ्चकवादी यत् स्वीकरोति तदेतदभिप्रायेण अनुक्ते तु कैरपि न स्वीकृतः। अतएव समासाभावे अव्यतिरिक्तप्रातिपदिकार्थमात्रनिमित्तं बाधका भवन्तीति व्याख्यानं सङ्गच्छते।
तथाचोक्तं यस्मिन् वाच्ये विधीयन्ते त्यादि तथादि तद्धिताः॥

प्रमाणो वा भवेयत्र च यत्नः प्रबला ततः । त्वादिरिति तथादिः स्मृ ।
शेषा विभक्तिस्तु तत्कृताकारेऽनुसन्धेया ॥

**Colophon.** इति श्रीरूपरामन्यायपञ्चाननभट्टाचार्यविरचितं कारकरत्नं समाप्तम् ॥ ० ॥
नयनाब्धिविधुप्रमिताब्दगते प्रतिपच्चपरदिनाम्बरतिरणौ ।
शिवराम इदं सहितित् पठितुं प्रतिपत्य रचंततयातनकम् ॥

विषय: । विचारमुखेन कारकादिनिर्णयः ।

---

**No. 59.** कालीध्यानटीका । Substance, country-made paper, 18 × 5 inches. Folia, 3. Lines, 9 on a page. Extent, 101 çlokas. Character, Bengali. Date, ? Place of deposit, Varasikurá Mayamansinha Ánanda-mohana Cakravarttí. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः काल्यै । करालवदनां घोरां इत्यादि । इत्थिषां कालिकां ध्यायेत् साधकोत्तमः इत्यन्वयः ।

**End.** पुनः घोरमीषत् विकसितमाननसरोरुहमाननपद्मं यस्या तां धावनं सरो-रुहमिवेति लुप्तोपमा । ॥ ० ॥

विषय: । करालवदनामित्यादिकस्य तन्त्रोक्तस्य कालीध्यानस्य व्याख्यानम् ।

---

**No. 60.** कालीसर्व्वस्वसम्पुटः, By श्रीकृष्णविद्यालङ्कारः । Substance, country-made paper, 19 × 5 inches. Folia, 134 (without one leaf). Lines, 8 on a page. Extent, 4,256 çlokas. Character, Bengali. Date, ? Place of deposit, Májpará District Dháká, Bábu Rása Bihári Ráya. Appearance, new. Prose and verse. Incorrect.

**Beginning.** ॐ नमः कालिकायै ।
वामाद्यां परात्परतरां स्थौः सदा श्रीदिव्यीं
ब्रह्माद्यैर्विबुधैः सदार्चितपदां सिद्धैः सदा सेविताम् ।
प्राज्ञ प्राज + + + चतुरस्र + तां चिद्रूपालिकां
वन्दे दक्षिणकालिकां भवभयात्रिणकारां शिवां ॥
नमामि कालीं दक्षिणरूपां
ब्रह्मादिभिः सेवितपादपद्मां ।
भक्तप्रसादप्रतिपादयित्रीं
देवे सदानन्दविधायकत्रीं ॥

आसने शयने वापि न तिष्ठेदग्रतो गुरो ।
अनुज्ञां प्राप्य तिष्ठेच नैवं शापं समाप्नुयात् ॥
वामे वा दक्षिणे वापि तिष्ठत्येव न चान्यतः ।
अनुज्ञां ग्टहीत्वा गच्छेत्तु न च स्वेच्छामयं तथा (?) ॥

**Colophon.** इति न्यायवागीशभट्टाचार्य्यात्मज श्रीश्रीकृष्णविद्यालङ्कारविरचितः काली-सर्व्वस्वसम्पुटो ग्रन्थः समाप्तः ॥

**विषयः** । अथ दीक्षाप्रसङ्गकथनम् । बहुविधकालीभेदकथनम् । तत्र कालिकामन्त्र-निर्णयनम् । तन्मन्त्रोद्धारः । प्रातःकृत्यविधिः । गुरुस्तोत्रादिः । कुलवृक्षनमस्कारादिकथनम् । शौचादिविधिः । स्नानविधिः । सन्ध्याविधिः । सूर्य्योपस्थानविधिः । पूजाविधिः । जप-पूजनयोस्तुल्यत्वकथनम् । पवित्रशुद्धिकथनम् । आचमने मुद्रानियमः । कुलचन्दनविधिः । आसनविधिः । प्राणायामविधिः । भूतशुद्धिविधिः । प्राणप्रतिष्ठाविधिः । ऋष्यादिन्यासविधिः । अङ्गन्यासकरन्यासयोः विधिः । मातृकान्यासविधिः । वर्णन्यासविधिः । श्रीकण्ठन्यासविधिः । तत्त्वन्यासविधिः । बीजन्यासविधिः । गुरुपीठन्यासविधिः । शिवशक्तिन्यासविधिः । नव-पीठन्यासकथनम् । अन्तर्यागविधिः । बहिर्यागविधिः । तत्र अर्घ्यादिविधिः । ध्यानादिप्रयोगः । प्राणायामादिविधिः । महाकालपूजाविधिः । आवरणपूजाविधिः । पादोदकमाहात्म्यकथनम् । महाविद्यापूजनादौ सूतकादेरप्रतिबन्धकताकथनम् । रश्मिचन्द्रपूजाविधिः । कालाष्टकस्तोत्र । कर्पूरादिस्तोत्र । दक्षिणकालिकास्तोत्र । परापरगुरोरामस्तोत्र । शवमायाकथनम् । कालिको-पनिषत् । कालिकाया जगन्मङ्गलकवचम् । कालिकायाः सर्व्वार्थसारकवचम् । कालीकवच-कथनम् । कालीकुलुकाकवचकथनम् । त्रैलोक्यमङ्गलकवचकथनम् । सर्व्वार्थसाधनकवचम् । अष्टशक्तिस्तवः । त्रैलोक्यमोहनकवचम् । कालीसहस्रनामस्तवः । महाशङ्खादिमालाविधिः । मालासंस्कारविधिः । स्फाटिकमालादिशोधनविधिः । मन्त्रसंस्कारादिविधिः । मन्त्रसिद्धिलक्षणम् । कुल्लुकादिज्ञानोपायकथनम् । शिवाबलिविधिः । छागादिबलिविधिः । पुरश्चरणविधिः । वीरपुरश्चरणविधिः । नित्यहोमविधिः । विशेषहोमपद्धति । होमद्रव्यपरिमाणादिकथनम् । कामनाभेदेन होमद्रव्यविशेषविधिः । कुम्भचक्रविधिः । ग्रहणपुरश्चरणप्रयोगः सूर्य्योदयपुरश्च-रणप्रयोगः । शरत्कालीनपुरश्चरणप्रयोगः । रहस्यपुरश्चरणप्रयोगः । मन्त्रसिद्धिप्रमाणकथनम् । भूतलिपिविधिः । त्रिलोकीमुद्राजपादिकथनम् । कुलाचारमाहात्म्यादिकथनम् । कुमारी-पूजाविधिः । कुलीयाननिरूपणम् । योनिपूजादिविधिः । पञ्चमकारविधिः । विजयाकल्पः कथनम् । मांसशोधनविधिः । मत्स्यशोधनविधिः । मुद्राशोधनविधिः । मैथुनशोधनविधिः । शक्तिभेदेषु पीठनिरूपणम् । स्वयम्भूकुसुमादिशोधनविधिः । शोणितशुद्धिकथनम् । स्वयम्भू-कुसुमादेरनुकल्पकथनम् । वीरसाधनविधिः । तत्र शवलक्षणादिकथनम् । विविधेन प्रकारेण

अथमाश्रमविधिः । योगिनां नित्यकृत्यकथनम् । अथ षट्कर्म्मकथनम् । तत्र उच्चाटनविधिः । विद्वेषणविधिः । स्तम्भनविधिः । षड्दर्शनक्रमकथनम् । आकर्षणविधिः । वशीकरणविधिः । मुद्राधारणविज्ञानप्रकारकथनञ्च ॥

---

**No. 61.** **कालीसहस्रनामस्तुतिरत्नटीका**, By **पूर्णानन्दः ।** Substance, country-made paper, 18×4½ inches. Folia, 40. Lines, 6 on a page. Extent, 990 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur Mayamansiñha, Mahámahopádhyáya Candrakánta Tarkálaŋkára. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः काल्यै ॥

प्रणम्य कालीचरणारविन्दं ब्रह्मादिभिर्ध्येयमनन्तपुण्यं ।
सहस्रनामस्तुतिरत्नटीकां तनोति तन्त्रादृतलैकचित्तः ॥
कैलासशिखरे देवी शङ्करं पप्रच्छ कैलासे किम्भूते रम्ये नानारत्नविभूषिते नानावृक्षलताकीर्णे आदि नानापक्षिरवैर्युते चतुर्मण्डपसंयुक्ते चतुर्मण्डलेति क्वचित् पाठः ।

**End.** यद्वा पाठयेत् पठेद्वेति दिवस वन्ध्यं न चरेत् अवन्ध्यं दिवसं कुर्य्यात् इत्यर्थः ।

इति गदितमशेषं कालिकावर्णरूपं
प्रपठति यदि भक्त्या सर्व्वसिद्धीश्वरः स्यात् ।
अभिनवसुखकामः सर्व्वविद्याभिरामो
भवति सकलसिद्धिः सर्व्ववीरा समृद्धिः ॥
सर्व्ववीरा सर्व्वश्रेष्ठा सर्व्वाधिका वा समृद्धिर्भवेदिति ॥ ० ॥
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ।

**Colophon.** इति पूर्णानन्दपरमहंसविरचिता सुन्दरीवरदानाख्यमेधासाम्राज्यनामकाली-सहस्रनामस्तुतिरत्नटीका समाप्ता ।

**विषयः ।** कालीसहस्रनामस्तुतिरत्नाख्यस्य कालीस्तोत्रस्य व्याख्यानम् ।

---

**No. 62.** **कालीसहस्रनामस्तोत्रटीका ।** Substance, country-made paper, 10×5 inches. Folia, 48. Lines, 8 on a page. Extent, 608 çlokas. Character, Bengali. Date, Sk. 1744. Place of deposit, Kánṭhálpárá, post office Naiháṭi, Paṇḍita Rámatáraṇa Thákura. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमः परमदेवतायै । अथ कालीसपर्य्यानामटीका ।

कालीं कलापवर्णीं करकलितवरां कञ्चुकीं करालीं ।

(.......) अथ परमकारुणिकः परमशिवो दुःखातिदुःखतरां परविद्यां कलिकलुषहरां श्रीमद्दक्षिणकालिकां श्रीविद्याप्रकाशनः सपर्य्याख्यां टीकां प्रकाशयति भैरवाय इत्यादिना ॥

End. महाकालसंहिता कालीकालसम्वादे सुन्दरीशिवाविशेषकमिति व्याख्याय तथा पठन्ति तदपि भावनीयमिति ।

Colophon. इति श्रीमदाद्याशिवाचार्य्यः - श्रीमहाकालसंहितायां कालीकालसम्वादे सुन्दरीशक्तिदानाख्यकालिकाकल्पकवाराणसीकसपर्य्यानामश्लोकटीका समाप्ता ॥ शकाब्दा १०४४ ॥

विषयः । महाकालसंहितान्तर्गतकालीसपर्य्यानामश्लोकस्य व्याख्यानम् ।

---

No. 63. कालोत्तरम् । Substance, country-made paper, 11 × 2 inches. Folia, 9. Lines, 4 on a page. Extent, 81 çlokas. Character, Bengali. Date, ? Place of deposit, Usṭhi Mayamansiñha Kálícandra Nyáyálaŋkára. Appearance, old. Verse. Correct.

Beginning. ॐ नमो गणेशाय ।

कालोत्तरं प्रवक्ष्यामि राशिमाश्रित्य केवलम् ।
येन विज्ञानमात्रेण सर्व्वज्ञत्वमवाप्नुयात् ॥
स्वभावो रूपषट्केन चापमृत्युस्तथैव च ।
कालमृत्युश्च सर्व्वेषां कालोत्तरः प्रकाशकः ॥
भावचिह्नापमृत्युश्च महामृत्युस्तथैव च ।
राशिक्रमेण विज्ञेया यत्र कालोत्तरो हि यः ॥

End. परे चापायने मासि नवम्यां सितपक्षके ।
गुरोऽङ्गिरा वेदरक्षे सुखरीत्येव नश्यति ॥

Colophon. इति कालोत्तरं समाप्तम् ॥

विषयः । राशिलग्नादियोगक्रमेण अकालमरणादिनिरूपणम् ॥

---

**No. 64.** काव्यप्रकाशविस्तारिका, By परमानन्दचक्रवर्त्ती। Substance, country-made paper, 12×3 inches. Folia, 43. Lines, 7 on a page. Extent, 1429 çlokás. Character, Bengali. Date, ? Place of deposit, Naiháṭí, Paṇḍita Haraprasáda Çástrí. Appearance, old. Prose. Generally correct.

**Beginning.** (अस्य ग्रन्थस्यादपत्रत्रयं नास्ति तेन प्रारम्भवाक्याभावात् बहाद्ग्रपत्रस्थित द्वितीयोल्लासस्य प्रारम्भवाक्यं लिख्यते)
अयुक्तनाद्दिग्निरूपणोद्देश्यत्वशब्दात्मकविभागपरं द्वितीयोल्लासं यावत् मनु- ल्लासेत्यादि प्रथमं शब्दस्य ततोऽन्यस्येत्याद्यर्थः क्रमश।

**End.** (अस्य शेषांशस्थितत्वात् अतएवारिंशत्पत्रस्थद्वितीयोल्लासस्य समाप्तिवाक्यं लिख्यते)
इति सवकारियोक्लृप्तशक्तिमत्तेन ताद्दशशब्दस्यैवान्वयव्यतिरेकान्वयविधानात् अतएव शब्दमूलत्वव्यपदेश इति भावः॥

**Colophon.** इति श्रीपरमानन्दचक्रवर्त्तिकृतौ काव्यप्रकाशविस्तारिकायां द्वितीयोल्लासः॥*

**विषयः।** काव्यप्रकाशनामकालङ्कारग्रन्थस्य व्याख्या।

---

**No. 65.** काशीतत्त्वप्रकाशिका, By रघुनाथेन्द्रश्रिवयोगी। Substance, country-made paper, 14×4 inches. Folia, 41. Lines, 6 on a page. Extent, 645 çlokás. Character, Bengali. Date, ? Place of deposit, Çrinagara, District Dhaká, Babu Rajaníkánta Guha. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणपतये। मत्स्यपुराणे।
यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः।
यथेश्वराणां गिरिशः स्थानानामेतदुत्तमम्॥
वायुपुराणे।
मत्समः पुरुषो नास्ति त्वत्समा नास्ति चाङ्गना।
अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति॥
ब्रह्मपुराणे। मार्कण्डेय उवाच।
एकमेव जगन्नाथ पृच्छेयं त्वत्प्रसादतः।
लोकानाञ्च हितार्थाय नानाभारप्रशान्तये॥

शैवभागवतानाञ्च वेदार्थप्रतिबोधकम् ।
यस्मिन् क्षेत्रवरे पुण्ये निर्मले पुरुषोत्तमे ॥
शिवस्यायतनं देव करोमीति परं महत् ।
प्रतिष्ठेयं यथा तत्र तत्र स्थाने च शङ्करम् ॥
ततो ब्राह्मणि लोकेऽस्मिन् एकमूर्त्तौ परौ हरौ ।
प्रत्युवाच जगन्नाथः स पुनस्तं महामुनिम् ॥
यदेतत् परमं देवं कारणं भुवनेश्वरम् ।
लिङ्गमाराधनार्थाय यस्य ते मतिरीदृशी ॥
मम हृष्टेन विप्रेन्द्र कुरु शीघ्रं शिवालयम् ।
तत्प्रसादात् शिवलोके तिष्ठते त्वं तथाक्षयम् ॥
शिवे संस्थापिते विप्र समस्तस्थापनं भवेत् ।
आवयोरन्तरं किञ्चिदेकभावो द्विधाकृतौ ॥
यो रुद्रः स स्वयं विष्णुर्यो विष्णुः स महेश्वरः ।
उभयोरन्तरं नास्ति पवनाकाशयोरिव ॥
मोहितो नाभिजानाति स एव गरुडध्वजः ।
वृषध्वजः स एवेति त्रिपुरघ्नस्त्रिविक्रमः ॥

**End.** पराशरोपपुराणे ।

सर्वेषोत्क्रमणमाख्य जन्तुमात्रस्य केवलम् ।
वेदवेदान्तसारस्य प्रणवाख्यस्य पार्वति ॥
ब्रह्मप्रत्यर्थभूतोऽहं संसाराद्भावकात्तिरात् ।
कृपया मामकं रूपं परिपूर्णं परात्परम् ॥
आनन्दं सत्यचिद्रूपं तावकं तमसः परम् ।
स्वयं भूतं निराधारं दास्यामि ...... ॥
अत्रैव मरणं सम्यक् यस्य सिध्यति देहिनः ।
विज्ञानसाधनं तेन सर्वं पूर्वमनुष्ठितम् ॥
सेवया ... विनश्यन्ति पापानि सकलानि तु ।
सेवयास्य समं नास्ति प्रायश्चित्तं न संशयः ॥
तस्मात् सर्वं परित्यज्य क्षेत्रमेतत् समाश्रयेत् ।
त्वया मया च देवेशि सेवितञ्च महर्षिभिः ॥
क्षेत्रस्यैवास्य माहात्म्यं मया वक्तुं न शक्यते ।

जाबालोपनिषत् माहात्म्यं स्वयं जानाति वा न वा ।
ग्रन्थसंख्या पुराणानि सादरं तस्य पान्तु ते ।
वदन्ति लोकरक्षार्थं महात्मानस्य भैरवम् ॥

**Colophon.** इति शिवयोगिरघुनाथेन्द्रविरचिता काशीतत्त्वप्रकाशिका समाप्ता ॥

**विषयः।** मत्स्यपुराण-वायुपुराण-ब्रह्मपुराण-पराशरोपपुराण-कूर्म्मपुराण-काशीपुराण-पद्म-पुराण-स्कन्दपुराण-महाभारतीयवनपर्व्व-हरिवंश-हठयोगजाबालश्रुति-लघुजाबाल-श्वेताश्वतरोपनि-षत्त्रैवत्तन्त्र-काशीखण्डप्रभृतिभ्यः प्रामाणिकग्रन्थेभ्यः काशीक्षेत्रस्य माहात्म्यसूचकानां वचनानां संग्रहः प्रसङ्गतश्च कपर्दीश्वर-धर्म्मेश्वर-केदारेश्वर-त्रिविष्टपेश्वर-वीरेश्वर-वीरेश्वर-दुर्गा-मणिक-र्णिकादीनां माहात्म्यकीर्त्तनञ्च ॥

---

**No. 66.** काशीभाष्यामृतं, By रामरत्नवन्द्योपाध्यायः। Substance, country-made paper, 12×5 inches. Folia, 355. Lines, 8 on a page. Extent, 8520 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala Mayamansiñha, Paṇḍita Harinátha Tarkabhúṣaṇa. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । ॐ नमः काश्यै ।
काशीविश्वेशनारायणगणपमुखान् सर्व्वदेवान् प्रणम्य
नत्वा गोस्वामिनं श्रीगुरुमतिविनतैः श्रीधरानन्दसंज्ञं ।
काशी ब्रह्मैव साक्षादिति हृदयसुखं तत्पदाज्ञानुसारात्
काशीभाष्यामृतं संविरचयति मुदा रामरत्नाख्यवन्द्यः ॥
चातराग्रामवास्यादौ काशीवासी ततः परम् ।
श्रीरामरत्नवन्द्यः स कालचन्द्रद्विजार्थदः ॥
श्रीश्यामाचरणाख्यवन्द्यनृपतेः काश्यां सभा सत्प्रभा
तस्यां काशीकथा सदा समुचिता तत् काशीभाष्यामृतं ।
स्वीकृत्य तदाज्ञया प्रमुदितः श्रीरामरत्नो द्विजो
वाक्यानां रचनाहृदय च मुदा श्रीकालचन्द्रो द्विजः ॥
विश्वेशं माधवं दुण्ढिं दण्डपाणिञ्च भैरवं ।
वन्दे काशीं गुहं गङ्गां भवानीं मणिकर्णिकाम् ॥
इति उक्तवन्दना। श्रुतिस्मृतिपुराणेतिहासप्रसिद्धा काशीमुक्तिरनुसमा-दृति ।

**End.** मुक्तिक्षेत्राणि सर्वाणि यत् संसेव्योदितं फलम्
फलदानानन्तराणि मिमेव अविमर्दिनाम् ।
प्रयागस्नानपुण्येन यत् पुण्यं माघिमप्रदम् ।
काशीदर्शनमात्रेण तत् पुण्यं भवत्यपि ॥
यत् पुण्यमश्वमेधेन यत् पुण्यं राजसूयतः ।
काश्यां तत् पुण्यमाप्नोति चिरायस्वयमाकृयसी ॥
तुलापुरुषदानेन यत् पुण्यं समश्नायते ।
काशीदर्शनमात्रेण तत् पुण्यं भवत्यपि ॥
इति विष्णोर्वचः श्रुत्वा देवदेवो जगत्पतिः ।
उवाच च प्रसन्नात्मा तथास्तु मधुसूदन ॥

**Colophon.** इति काशीभाष्यवेऽष्टाशीतितमः परिच्छेदः ः

**विषयः।** काशीभाष्यकरणप्रयोजनकथनम् । ज्ञानाद्यभिमानभङ्गनावकथनकथनम् । भव-भयादिनिरूपणम् । दिवोदासोच्चाटनवर्णनम् । वाराणसीमाहात्म्यादिकथनम् । विमानस्थपार्श्व-स्थितसौम्यकाशीमाहात्म्यम् । पार्वत्या रक्षावचनगमनादिवर्णनम् । हरिहराभेदनिरूपणम् । पद्मपुराणोक्तकाशीमाहात्म्यादिकथनम् । सर्वक्षमतकाशीमुक्तिनिरूपणम् । पुण्यधर्मनिरूपणम् । काशीभिक्षाचारणादिकथनम् । काशीवर्णाश्रमादिनिरूपणम् । काशीप्रादुर्भावादिकथनम् । कपालमोचनतीर्थमाहात्म्यादिकथनम् । ब्रह्महत्यादिपापनिष्कृतिनिरूपणम् । ज्ञानोपदेशादि-निरूपणम् । काश्याश्रयनिरूपणम् । निर्वाणपरोक्षादिनिरूपणम् । काशीकृतपापप्रायश्चित्ता-दिनिरूपणम् । विपुण्डोर्ध्वपुण्ड्रधारणादिनिरूपणम् । शिवापराधभञ्जनादिप्रकारकथनम् । मन्त्र-माहात्म्यादिनिरूपणम् । रुद्राक्षमाहात्म्यादिकथनम् । शिवप्रसादमाहात्म्यादिकथनम् । शिव-पूजाविध्यादिः । काश्याश्रितसर्वतीर्थनिरूपणम् । तारकोपदेशकथनम् । काशीकृतपापयातन-नादिवारणप्रकारनिरूपणम् । शिवविष्णुवैषम्यभावभञ्जनादिकथनश्चेति विषयः ॥

---

**No. 67.** कीरदूतं, By रामगोपालः। Substance, country-made paper, 14×3 inches. Folia, 12. Lines, 6 on a page. Extent, 238 çlokas. Character, Bengali. Date, S. K. 1778 Place of deposit, Dhánuká, Post office Pálanga, District Faridpura Paṇḍita Jagadbandhu Vidyábhúṣaṇa. Appearance, old. Verse. Generally correct

**Beginning.** ॐ नमः श्रीकृष्णाय ।
विधुगौरोज्ज्वलनिवसनं श्रीपदारविन्दं
वर्णानन्दं नवजलधरश्यामलकोमलाङ्गं ।

कुञ्जद्वारीविलसदधरं सुन्दरं स्मेरवक्त्रं
पूर्णानन्दं किमपि ललितं ज्योतिरालोकयामि ॥
वृन्दारण्ये खगमृगकुलाक्रन्दशून्ये तदान्ते
भास्वत्पुत्र्या दयितविरहोत्तापसन्तापितानां ।
गोपस्त्रीणां ...... दशां मण्डले दुःखिनीनां
चाचैत्युच्चैः ............ मर्म्मभित् सर्व्वदासीत् ॥
मध्ये तासामपि च शुशुभे तप्तकार्त्तस्वराङ्गी
सुश्रोणीनां कमलजदृशामाश्रयत् कर्णिकेव ।
दीना क्षीणा सजलनयना नीरसा......कण्ठी
वक्तुं नैच्छद्विरहदहनोत्तापतप्ता तदा किं ॥
काचिद्गोपी विनयवचनैः सान्त्वयित्वा क्षमाक्षीं
भर्त्तुर्व्वार्त्तागमनसुलभं जीवनं सानुमेने ।
इत्थं चिन्ताकुलितहृदया पश्चिमं कीरमारात्
प्रीत्यापश्यत् सुरसिकमनोहारिणं विम्बचञ्चुं ॥
प्रत्यूचे तं सुमधुरगिरा प्रीणयित्वा वराङ्गी
कीरास्माकं त्वमतिकुशलो दौत्यकर्म्मण्युतास्मिन् ।
वन्यस्त्रीणां विविधवचनं त्वन्मुखोद्गीतहृद्यं
श्रोष्यत्येव प्रमुदितमना माधवो यादवाग्र्यः ॥ इत्यादि ॥

End

काहं कोवा मम तु दयितो नैव किञ्चित् स्मरामि
शोकः कोऽपि स्फुरति हृदये श्यामसाम्नोऽग्निरूपः ।
कस्माद्धेतोर्द्दहति स च मां निर्दयः किं करोमी-
त्युक्त्वा भूमौ न्यपतदिव सा संवृतास्पन्दनाक्षी ॥
कृष्णायावेदयितुमपि तां दुर्दशां तत् प्रियाया
अत्यौत्कण्ठ्यात् झटिति मथुरां नागराय प्रियाय ।
वृन्दारण्याद्व्यथितहृदयो व्यक्तरूपः प्रतस्थे
कीरो धीरः सुसदुपहृतो दौत्यकर्म्मैकदक्षः ॥
राधादेवीविरहघटितोपेन्द्रलीलारहस्यं
... नेदं ललनमपि मया कीरदूताख्यकाव्यम् ।
...... प्रभवकविना रामगोपालकेन
प्रेमात्मानोऽमृतमिव सदा सन्त आस्वादयन्तु ॥

दोर्द्दण्डैव ममीकृताः क्षितिभुजो यत्नेन यत्रापतो
यत्राशेषगुणप्रदीप्तयशसा प्रख्यापितं ज्ञानदम् ।
यत्रैते परिवृत्य यत्र कवयः श्रीकालिदासोपमाः
काव्यं श्रीरघोत्तरं वितनुते यत्रैकरम्भो बुधः ॥ समाप्तोऽयं ग्रन्थः ।

**Colophon.** शाके वसुभिरैकक्षितिपरिमिते मार्गशीर्षे कृष्णाके
नारिष्ठाः पादपद्मं सरसरहहृदि ध्यायमानं गुणीन्द्रैः ।
नत्वा श्रीराधाकृष्णं कुलगुरुचरणः श्रीयपाठार्थमेतत्
काशीश्रीदुर्गाराममाधो सद्गुरिव च गुरोः संस्मरन् श्रीयुताङ्घ्रिं ॥
श्रीदुर्गाचरणे सदा भवतु मे भक्तिः पदाब्जं मता ॥

विषय । श्रीरघुवंश मथुरागतं श्रीकृष्णं प्रति श्रीराधायाः सन्देशप्रेरणम् ।

---

**No. 68.** कौतुकचिन्तामणिः, By रघुनाथभट्टः । Substance, country-made paper, 8×5 inches. Folia, 8. Lines, 11 on a page. Extent, 176 çlokas. Character, Bengali. Date, ? Place of deposit, Ágartalá Vṛddhanagara Paṇḍita Míneçvara Sárbabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीगौरविधुर्जयति ।
अथ कौतुकचिन्तामणिलक्षणम् ।
श्रीवाल्मीकिपुराणे यथा ।
श्रीमद्रूपगोस्वामिपदारविन्दचिन्तया ।
कौतुकचिन्तामणि ग्रन्थः श्रीरघुनाथेन निर्मितः ॥
चरितं यथा ।
निजभक्तबाधितबाधादिभावकानाथ नायकाः ।
नाट्यपरिधिराधायां यत् यत् कौतुकलक्षणम् ॥ इत्यादि ।

**End.** सर्व्वत्र आरचमेव(?) गौराङ्गः सदयो भवेत् ।
पार्षदं तथारूपेण प्रतिजन्मसु सन्नमम्(?) ॥

**Colophon.** इति श्रीरामाद्भुतिपुराणे भरद्वाजं प्रति श्रीवाल्मीकिमुन्युक्तं तदुद्धृतः संग्रहः
श्रीरघुनाथभट्टगोस्वामिविरचितः कौतुकचिन्तामणिग्रन्थमिति एकमात्रपत्रयोगः
सम्पूर्णम् ॥ (?)

विषयः । कौतुकस्य लक्षणादिकथनम् ।

---

**No. 69.** कुमारिकाखण्डः स्कन्दपुराणीयः। Substance, country-made paper, 12 × 4½ inches. Folia, 182. Lines, 10 on a page. Extent, 7,025 çlokas. Character, Bengali. Date, Sk. 1724. Place of deposit, Calcutta. Çyámapukur Visvakoşa Office. Bábu Nagendra Nátha Basu. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः। मुनय ऊचुः।

दक्षिणार्णवतीरेषु यानि तीर्थानि सन्ति च।

तानि ब्रूहि विशालाक्ष वर्णयन्यति तानि च॥

सर्व्वतीर्थफलं येषु नारदाद्या वदन्ति च।

तेषां चरितमाहात्म्यं श्रोतुमिच्छामहे वयम्॥

उग्रश्रवा उवाच।

शृणुध्वमद्भुतं पुण्यं तत्कथां कुमारनाथस्य महाप्रभावम्।

द्वैपायनो यन्मम चाह पूर्व्वं हर्षाम्बुरोमोद्गमचर्चिताङ्गं।

कुमारगीता गाथाश्च श्रूयतां मुनिसत्तमाः।

या सर्व्वैर्देवैर्मुनिभिश्च पूजिता॥

स्तम्भाचारस्थतीर्थं यो निषेवेत मानवः।

नियतं तस्य वासः स्यात्स्वर्गे लोके यथा मम॥

**End.** इति वो वर्णितः पुण्यो महीसागरसम्भवः।

शृण्वन् संकीर्त्तयंश्चैनं सर्व्वपापैः प्रमुच्यते॥

य इदं श्रावयेद्विद्वान् महीसागरसम्भवम्।

सर्व्वपापविनिर्म्मुक्तो रुद्रलोकमवाप्नुयात्॥

गुप्तक्षेत्रस्य सकलं माहात्म्यं श्रावयेद्यदि।

सर्व्वैश्वर्य्यमवाप्नोति ब्रह्महत्यां व्यपोहति॥

श्रुत्वैवमखिलं खण्डं ब्राह्मणाय निवेदयेत्।

यथाशक्त्या सुवर्णञ्च गां भूमिं प्रयतः शुचिः॥

सन्तुष्टे ब्राह्मणे तुष्टो महेशो जायते ध्रुवम्।

**Colophon.** इति श्रीस्कन्दपुराणे कुमारिकाखण्डे गुप्तक्षेत्रमाहात्म्यं। अत ऊर्द्ध्वं कपिल:

स्नानोपाख्यानं यत्रायमाद्यश्लोकः। शौनक उवाच।

श्रुत माहात्म्यमतुलं गुप्तक्षेत्रस्य सूचितं।

स्थानस्य कापिलस्यापि माहात्म्यं वक्तुमर्हसि॥

शुभमस्तु॥ शीसंवत् १८५९। शकाब्दा १७२४।

**विषयः ।** षट्तीर्थादिनिरूपणम् । दानप्रशंसादिकथनम् । युगाद्यादिनिरूपणम् । शारद-प्रज्ञानप्रतिष्ठादिः । महीप्रादुर्भावादिकथनम् । कुमारेशमाहात्म्यादिवर्णनम् । तारकविजयादि-वर्णनम् । पञ्चलिङ्गोपाख्यानादिः । भूसंस्थित्यादिनिरूपणम् । बर्बरेश्वरमाहात्म्यादिकथनम् । महाकालप्रादुर्भावकथनम् । युगव्यवस्थादिकथनम् । महाकालमाहात्म्यादिकथनम् । भयादित्य-माहात्म्यादिकथनम् । दिव्यवर्णनादिकथनम् । जयादित्यमाहात्म्यादिकथनम् । महाविद्या-साधनादिकथनम् । बर्बरीकोपाख्यानादिश्च ।

---

**No. 70.** **कुलचूड़ामणिः ।** Substance, country-made paper, 12 × 2½ inches. Folia, 28. Lines, 6 on a page. Extent, 504 çlokas. Character, Bengali. Date ? Place of deposit, Hálisahar Khásváṭi Mahádeva Bhattá-cháryya. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमो महेशाय । भैरव उवाच ।

असंख्या त्रिपुरा देवि असंख्याता च कालिका ।
वागीश्वरी तथासंख्या तथा तद्वत् कुलाकुला ॥
मातङ्गिनी तथा पूर्णा विमला च सुनायिका ।
त्रिपुरेगजटा दुर्गा याचान्या कुलसुन्दरी ॥
वैष्णवं गाणपत्यञ्च महासौरमतं तथा ।
शैवं महच्चजालञ्च दक्षिणित् भूतसम्भवम् ॥
चतुःषष्टिश्च तन्त्राणि मातृका गुणमानि च ।
महामाया (मम्भवश्च) योगिनीयामलसम्भवम् (?) ॥
(तद्वत्सरकम्बाम) भैरवाष्टकमेव च ।
(बहुरूपाष्टकं ग्रामं) यामलाष्टकमेव च ॥ (?)
तन्त्रज्ञानं वासुकिञ्च महासम्मोहनं तथा ।
महाशङ्खं महादेवं वातुलं वातुलोत्तरं ॥
खरभेदं गोचभेदं विशुद्धेश्वरमेव च ।
एवमेतानि तन्त्राणि तथान्यदपि कोटिशः ॥
श्रुता देवि न कुत्रापि यानानन्दाषि भैरवि
तत् कथं वद सुश्रोणि मयि त्वत्पादवर्त्तिनि ॥
देव्युवाच ।
शृणु देव परानन्द परमार्थविशारद ।
योगिनीगुह्यकाख्य उपायं कथ्यते मया ॥

**End.** भूतशुद्धिं प्राणायामञ्च बीजं षड्ङ्गं विधाय विन्यस्य रक्तवर्णं विशिष्ट चन्द्रशोभायां युवतीं समानीय तस्या योनौ भगमालां सम्पूज्य तत्र यन्त्रं संस्थाप्य ध्यायेत् ।
चलत्कुण्डलेन्दुसंकाशां नवयौवनविग्रहाम् ।
चिन्तयेत् योषितां योनौ क्षोभयेत् परमेश्वरीम् ॥
इति ध्यात्वा गन्धादिभिरभ्यर्च्य पुनः शक्त्यै दद्यात् ।
किं पुनर्मानुषं देवि त्रैलोक्यमपि मोहयेत् ।
प्रकारान्तरमाह । भूतशुद्धिं प्राणायामञ्च विधाय युवतीमस्तके यन्त्रं संस्थाप्य ध्यायेत् ।
रक्तवर्णां श्रियं ध्यात्वा तदीयमन्त्रसा ततः ।
तस्या मूर्द्धि सुरेशिं स्रवत्पीयूषवर्षिणीम् ॥

**विषयः** । गुरुनिरूपणम् । स्नानादिनिरूपणम् । कुलदेवतापूजादिनिरूपणम् । कुलाङ्गनादिनिरूपणम् । यन्त्रादिलेखनोपायकथनम् । कुलाचारादिनिरूपणम् । समयाचाररक्षादिनिरूपणम् । मद्यपानादिविधिः । वेतालादिसिद्धिप्रकारः । कुलाचारमहत्त्वनिरूपणम् । प्रयोगादिश्चेति ।

---

**No. 71.** **कुलदीपिका** । Substance, country-made paper, 15 × 7 inches. Folia, 47. Lines, 10 on a page. Extent, 940 çlokas. Character, Nágara. Date ? Place of deposit, Káçidháma Vindhyeçvarí-prasáda Dube. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय । अथ कुलप्रदीपिका लिख्यते । ॐ परापरायै नमः ।
नमामि प्रथमां देवीं आदिमूर्त्तिं सनातनीम् ।
चिन्मयीं परमानन्दां विश्वानन्दस्वरूपिणीम् ॥
विलोक्य कुलशास्त्रञ्च सम्प्रदायनयं मम ।
कौलिकानां हितार्थाय क्रियते कुलदीपिका ॥
अथ श्रीक्रमे दक्षिणक्रमे शिव उवाच ।
रहस्यातिरहस्यञ्च कथ्यते शृणु साम्प्रतम् ॥
आदिनारायणः साक्षात् परं ब्रह्मः स एव हि ।

**End.** आचारविद्याषट्कञ्च पुनरंशत्रिविधं क्रमात् ।
कुलविद्या परा चैव रहस्ययोगिनी तथा ॥

गःभवीतु इत्येषा सम्ययापरबोधिनी ।
कुलपञ्चाक्षरी पञ्चदशाक्षर्या मुमरात्मिका (?) ॥
कौलविद्या तथा प्रोक्ता गुरुक्रमविमर्षिणी ।
समानःख्यादिसङ्केता विद्यानुरागपूर्व्विका ॥
वाग्वादिनी ततः पश्चात् प्रोक्ता मुमरशाङ्करी
षोडशी मुक्तिविद्या च त्रिमूर्त्तिः पुरसुन्दरी ॥
सप्तविंशतितत्त्वाख्यं मौनकेतुकलात्मिका ।
कच्चरमिदं दिव्यं षड्दर्शचितं क्रमात् ॥
ॐ हं श्रीपादुका पूर्ब्बं चरणाख्यं क्रमाद्बुत ।

**Colophon.** इति श्रीकुलदीपिका समाप्ता ।

**विषयः ।** दशमहाविद्यामन्त्रानुष्ठानादिनिर्णयः ।

---

**No. 72 कुलपञ्जिका,** By **महेशः ।** Substance, country-made paper, 19 × 5 inches. Folia, 533. Lines, 11 on a page. Extent, 27,797 çlokas. Character, Bengali. Date ? Place of deposit, Kolágrám, District Dhaká, Çri Hariçcandra Ghaṭaka. Appearance, new. Generally Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय । अथ कुलपञ्जिका लिख्यते ।
बालकानां हितार्थाय निर्द्दोषकुलपञ्जिका ।
क्रियते श्रीमहेशेन कुलीनस्य प्रकाशिका ॥
षट्‌त्रिंशद्दन्दमालोक्य निर्द्दोषस्तत्र वक्ष्यते ।
निर्द्दोष इति पदमिति द्वन्दभग्नविषयकः ॥
द्वन्दशब्देनाच मुनिरुच्यते ।
फुलिया खड़्‌दहश्चैव बल्लभीश्च रबीकरः ।
आचारस्तथा ख्यातः सुराइश्चैव च ॥
वार्णोऽथ शेखरश्चन्द्रः श्रीविद्याधरकस्तथा ।
राढे वङ्गे समाख्याता निर्द्दोषकुलयूथकाः ॥

इत्यादि । यूथं द्वन्दं मेल इति पर्य्यायः । तन्मेलनावच्छिन्नस्य यूथं निर्द्दोषकपम् । तत्तद् यूथादि प्रकरणभेदेन कथ्यते । इत्यादि ।

**End.** राजवल्लभस्य कन्या वं कौशिमाराघव प्रं तत्सुतरामसोषनकुलभूषणः कथा

कन्या विं मुं रामसन्तोष प्रं वं चर्ममनारायण प्रं मतृसुत रामगतिविद्याभूषणः
चन्द्र चं मुं रामसन्तोषः प्रं मतृसुताः मिमचाद् गोकुल वंशिवदनाः ।

**Colophon.** ( अतःपरं न लिखितं ।)

**विषय:** । वङ्गीयराढ़ीयकुलीनानां वंशावलीकीर्त्तनम् । तेषामार्ग्गिवेय्यादिकीर्त्तनञ्च ।

---

**No. 73.** कुलसंहिता वा नवरात्रादि कुलसंहिता । Substance, country-made paper, 12×3 inches. Folia, 30. Lines, 8 on a page. Extent, 768 çlokas. Character, Bengali. Date ? Place of deposit, District Dháká, Vikramapura Májpáḍá Bábu Rásavihárí Ráya. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ।

कालीतन्त्रं समालोक्य यामलं भूतडामरम् ।
कुब्जिकातन्त्रराजञ्च खेचरीसाधनं तथा ॥
कालीतन्त्रं वीजतन्त्रं विविच्य परया मुदा ।
कथ्यतेऽतिप्रयत्नेन साधकानां हिताय च ॥
मन्दरस्थं महादेवं भगवन्तं महेश्वरम् ।
पप्रच्छ भक्तिसंयुक्ता प्रेमविह्वलमानसा ॥
वचःश्रवणमात्रेण विपरीतरतातुरा ।
श्री पार्व्वत्युवाच ।
केनोपायेन देवेश कुलं सिद्धिर्भवेन्नृणाम् ।
तन्मे वद दयासिन्धो भक्तानुग्रहकारक ॥
कौलाचारं विशेषेण शवादिसाधनं तथा ।
वदस्व गिरिजानाथ यदि स्नेहोऽस्ति मत्प्रति ॥
इति देव्या वचः श्रुत्वा भगवान् शङ्करोऽब्रवीत् ।
कौलभावोऽतिदुर्ल्लभ्यो योगिनामपि सुव्रते ॥
लक्षवारशतवाणि वारितासि मया प्रिये ।
तथापि तव चापल्यं वारितुं नैवमीश्वरः ॥
तवस्नेहेन भक्त्या च प्रेम्णा च गिरिसम्भवे ।
दासोऽस्मिति ते तन्त्रावतारातिसुनिर्मलम् ॥
वदामि जगतां मातः शृणु सावहिता प्रिये । इत्यादि ।

**End.** सुखदं मोक्षदञ्चैव सर्व्वैश्वर्य्यप्रदायकम् ।
नवरात्र मिदं देवि गोपनीयं त्वया प्रिये ॥
यथा जारो जनन्याश्च यथान्यस्य च सङ्गमः ।
यथा जारो गोपनीयो भर्त्तरि प्राणवल्लभे ॥
तथेदं गोपनीयञ्च न प्रकाश्यं त्वया पुनः ॥

**Colophon.** इति महारहस्ये शिवपार्व्वतीसंवादे नवरात्रादिकुलसंहिता समाप्ता ॥

**विषयः।** तत्र कौलधर्म्मनिरूपणम् । तत्र साधकलक्षणादिकथनम् । साधिकालक्षणादिकथनम् । कौलानां पूजाक्रमविधानम् । तत्फलादिकथनम् । पञ्चतत्त्वनिरूपणम् । मद्यादिशोधनविधिः । बलिदानविधिः । पात्रस्थापनादिविधिः । जपविधिः । तर्पणविधिः । कलौ वीरभावस्य प्राधान्यकथनम् । साधनविधिः । तत्तद्देशादिनिरूपणम् । कौलानां कर्त्तव्याकर्त्तव्यविधानम् । कौलगुरुलक्षणादिकथनम् । कौलाचाराधिकारनिरूपणम् । गुरुप्रशंसादिकथनम् । कौलरहस्यकथनञ्च ।

---

**No. 74. कुलसाम्भवी।** Substance, country-made paper, 18×4½ inches. Folia, 6. Lines, 7 on a page. Extent, 283 çlokas. Character, Bengali. Date ? Place of deposit, Hálisahar Khasváṭi Mahádeva Bhaṭṭácháryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ श्रीगुरवे नमः ।
नमामि यत्पुरुषं परं ब्रह्म च सर्व्वदा ।
शब्दस्पर्शरूपरसगन्धाकारविवर्ज्जितम् ॥
साधकानाञ्च चित्तानां स्वतन्त्रेदञ्च तद्वद ।
सृष्टिपालनसंहार तत्कृते स्तोत्रमात्मकम् ॥ (?)
प्रथमं सर्व्वलोकानां सर्व्वैश्वर्य्यसुखप्रदं ।
प्राचीनावत्यमयत्नं शिवाकारम्बनामयम् ॥
कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
पृच्छत्यस्मिन् उमा देवी ब्रूहि ज्ञानं महेश्वर ॥

**End.** अनुपमं निराकारं निःशब्दः शब्द उच्यते ।
अचलं निर्म्मलञ्चैव शून्यथापि निरञ्जनम् ॥
वेदान्तसारसर्व्वस्वं उमायै शिवभाषितम् ।
सिद्धिदं सर्व्वयोगानां नात्र कार्य्या विचारणा ॥

**Colophon.** इति योगशास्त्रे उमामहेश्वरसम्वादे कुलमाश्रवी समाप्तः ।

**विषयः ।** आध्यात्मिकस्नानमुद्रातीर्थादिनिरूपणम् ।

---

**No. 75.** कृष्णकर्णामृतटीका (सारङ्गरङ्गदा) By कृष्णदासः । Substance, country-made paper, 12 × 5 inches. Folia, 36. Lines, 11 on a page. Extent, 1,188 çlokas. Character, Bengali. Date ? Place of deposit. Váñkurá Kuneekol Bábu Yogindranátha Siñha Deva. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीश्रीकृष्णाय नमः ।

यद्भावभावितधियोऽत्र वाचां मुद्रामि दुर्गमतमामुनिपुङ्गवानां । (?)

रासोत्सुकं मदनमोहनमच्युतं तं राधाममेधितरमोऽस्मितं नतोऽस्मि ॥

कृपासुधासरिद् यस्य विश्वमाप्लावयन्त्यपि ।

नीचगैव सदा भाति तं श्रीचैतन्यमाश्रये ॥

वसन्तौ कृष्णमाधुर्य्यकेलिसौन्दर्य्यसम्पदम् ।

कैश्चिन्न भावज्ञा सम्यग् ज्ञेया लीलाशुकस्य गीः ॥

मन्दोऽपि कश्चित् श्रीरूपपदाम्भोजमधुव्रतः ।

कृष्णकर्णामृतव्याख्यां विस्तृणोति यथामति ॥

**End.** चरतु सः पथि मेऽस्य स्खलत्पदगतेर्मुहुः ।

स्वकृपायष्टिदानेन सन्तः सन्त्ववलम्बनम् ॥

**Colophon.** श्रीरूपचरणाब्जानि कृष्णदासेन निर्म्मिता ।

कृष्णकर्णामृतस्यैषा टीका सारङ्गरङ्गदा ॥

**विषयः ।** कृष्णकर्णामृतनामकस्य भक्तिग्रन्थस्य व्याख्यानम् ।

---

**No. 76.** कृष्णनामार्थप्रकाशः । Substance, country-made paper, 12 × 4½ inches. Folia, 16. Lines, 9 on a page. Extent, 468 çlokas. Character, Bengali. Date, ? Place of deposit, Viṣṇupura Kriṣṇaganja Çaçibhúṣaṇa Gosvámí. Appearance, old. Verse. Generally correct.

**Beginning.** नमः श्रीकृष्णनाम्ने ।

श्रीचैतन्यमुखोद्गीर्णा हरेकृष्णेति वर्णकाः ।

मज्जयन्तो जगत् प्रेम्णि विजयन्तां तदाह्वयाः ॥

कृष्णचैतन्यमद्वैतं नित्यानन्दं सभक्तकम् ।

यथा नमोमि तत्प्रीत्यै तन्नामार्थप्रकाशकम् ॥
युगेषु धर्म्मपादानां नियमस्तेषु साधनम् ।
कलौ तु हरिनामैव केवलं गतिरित्यपि ॥
नामिनाम्नोरभिन्नत्वं तस्मादाधिक्यमित्यपि ।
नाम्नां साधनरूपत्वं सर्व्वसाधनगौरवम् ॥
देशकालादिपात्राणां नियमाभाव इत्यपि ।
बहुजन्मसु गोविन्दसेवालभ्यत्वमेव च ॥
सम्यार्थसाधनविधिर्निन्दकानाञ्च दूषणम् ।
कृतार्थत्वं तत्पराणां यतिरेकेण गर्हणम् ॥

**End.**

सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम् ।
एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति ॥
पद्मपुराणे ॥
तारकं रामनाम स्यात् कृष्णनाम च पावकम् ।
तारकाज्जायते मुक्तिः प्रेम भक्तिश्च पावकात् ॥
युगलनाममाहात्म्यम् । भविष्योत्तरे नारदं प्रति भगवद्वचनम् ॥
मन्त्रमलक्षजापेन यत्फलं लभते नरः ।
तत्फलं समवाप्नोति राधाकृष्णेति कीर्त्तनात् ॥
कृष्णेति द्व्यक्षरं नाम राधया सह यो वदेत् ।
चाण्डाल इव तस्याहं वमामि हृदि नारद ॥ * ॥

**Colophon.** इति कृष्णनामार्थप्रकाशः समाप्तः ॥ * ॥ श्रीराधाकृष्णाय नमः ॥

**विषयः ।** युगेषु धर्म्मपादनियमयुगसाधनादिनिरूपणमुखेन हरिनाममाहात्म्यादिनिरूपणम् ।

---

**No. 77.** कृष्णभक्तिप्रकाशः । Substance, country-made paper, 17 × 3¾ inches. Folia, 33. Lines, 9 on a page. Extent, 1,225 çlokas. Character, Bengali. Date, Sk. 1696. Place of deposit, Viṣṇupura District Báñkurá. Babu Rámavallabha Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।

श्रीकृष्णचरणाम्भोजं प्रणम्य परया मुदा ।
नानापुराणवाक्येन सद्य भक्तिः प्रकाश्यते ॥

अज्ञानतिमिरध्वंसी परमार्थप्रकाशकः ।
कृष्णभक्तिप्रकाशोऽस्तु प्रमोदाय सतां सदा ॥
अथ प्रारिप्सितग्रन्थपरिसमाप्तिकारणं श्रीकृष्णनमस्कारं मङ्गलमाचरति
श्रीभागवतपद्येन ।
नौमीड्य तेऽभ्र वपुषे तडिदम्बराय
गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणु-
लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥
तथैव ग्रन्थप्रतिपाद्यं श्रीकृष्णभजनरूपं मङ्गलमाचरति । श्रीविष्णुयामल-
संहितावचनेन द्वाभ्यां ।
इह खलु सकलपुरुषार्थमर्थयमानानामनुपायमनुसरतां श्रीभगवद्भक्तिरेव
परमोपायमेव अतः पुरुषार्थेन श्रीभागवते परमरहस्यं श्रीवेदव्यास उप-
दिष्टम् ! तच्चनिरूपणन्तु भक्तिनिरूपणोपकरणमेवेत्याशयेन तत्परश्लोकानां
तदर्थप्रतिपादकानाञ्च नानापुराणोक्तश्लोकानां संग्रहेणास्मिन् श्रीकृष्णभक्ति-
प्रकाशके ग्रन्थे प्रथममुद्देशक्रमः । तत्र प्रथमकाण्डे श्रीकृष्णभक्तिप्रशंसा ।
तदभक्तनिन्दा । श्रीकृष्णभजनम् । सर्व्वकालिककर्त्तव्यत्वं । अधिकारिनियमा-
भावः । भक्तिकारणम् । एतानि प्रकरणानि । द्वितीयकाण्डे भिन्नाङ्ग-
भक्तेर्मैत्रीयलक्षणम् । भक्तेर्लक्षणं फलञ्च । गुरुपादाश्रयावश्यनिरूपणम् ।
कर्म्मत्यागनिरूपणम् ! साधनभक्तिनिरूपणं तत्राधिकारिनिरूपणञ्च । नाना-
विधभक्त्यङ्गादिषु पापाल्पकथनम् । मदर्चानिरूपणम् । कीर्त्तननिरू-
पणम् । नामापराधाः । तदन्ते तत्क्षमापणम् । स्मरणनिरूपणम् ।
पादसेवानिरूपणम् । तत्रैवार्च्चननिरूपणम् । तत्रैव सेवापराधाः । तदन्ते
तत्क्षमापणम् । वन्दननिरूपणम् । दास्यनिरूपणम् । तत्रैव दास्यभेदाः ।
सख्यनिरूपणम् ! तत्रैव सखिभेदाः । आत्मनिवेदननिरूपणमित्यादि । यथो-
द्देशक्रमे एकैकशः प्रकरणमारभमाणो भक्तिप्रवृत्त्यर्थं श्रीभगवद्भक्तप्रशंसामाह ।
श्रीभागवते भगवद्दासा एव सर्व्वतः कृतार्था इत्याह ।
यन्नामश्रुतिमात्रेण पुमान् भवति निर्म्मलः ।
तस्य तीर्थपदः किम्वा दासानामवशिष्यते ॥
पुमानिति सामान्यपदेन सर्व्वोपकारणम् ॥ इत्यादि ।

**End.** यावीं चि हिवा ग्रन्थस्य पण्डितैरुपपद्यते ।
देवार्थं तत्परं वैचित्र्यैः कविभिर्मनभाक् ॥

मम देवी । यथा यामुनाचार्य्यस्तोत्रे ।
वपुरादयोऽपि केऽपि गुणदोषात् यथाविधि ।
मदयं मम पादपद्मयोरद्यैव(?) मया समर्पितः ॥
देवो यथा जातिविवेके ।
चिन्तां कुर्य्यात् नरमवैर्विक्रीतस्य यथा पशोः ।
तथार्पयं हरौ देहं विरमेद्रक्षणाम्(?) ॥
भक्तिरसामृतसिन्धौ ।
दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने ।
केषाञ्चिदेव धीराणां लभेत साधनार्थताम् ।
इति भक्तिरसामृतसिन्धौ ।
शास्त्रो...प्रवलया भक्तमर्य्यादयाञ्चिता ।
वैधी भक्तिरियं केचित् मर्य्यादामार्ग उच्यते ॥

**Colophon.** इति श्रीकृष्णभक्तिप्रकाशे द्वितीयकाण्डे साधनभक्तिर्नाम पञ्चमप्रकरणं सम्पूर्णम् ॥ हरेकृष्ण ॥
रसाङ्कचन्द्रिन्दुमितशाके शालेषि कृतिना श्रीहरिरामेण ॥

**विषयः ।** प्रथमकाण्डे—

कृष्णभक्तिप्रशंसा । कृष्णभजन तदभक्तानां निन्दा च । सार्व्वकालिकमैयत्यकथनं चधि-कारिनियमाभावः । भक्तिकारणनिरूपणम् ।

द्वितीयकाण्डे—

निष्कामभक्तेर्मैरीयस्त्वकथनम् । भक्तिलक्षणफलादिः । गुणपादाश्रयाणानिरूपणम् । कर्म्मा-पणनिरूपणम् । साधनभक्तिनिरूपणम् । साधनभक्त्यधिकारिनिरूपणम् । नानाविधभक्त्यादिषु सख्याः प्राधान्यकथनम् । श्रवणकीर्त्तनादिः । नामापराधादिनिरूपणम् । अरणपादसेवा-र्च्चनादिनिरूपणम् । सेवापराधवन्दनदास्यादिनिरूपणम् । दासभेदादिकथनम् । सख्यरवि-भेदादिनिरूपणम् । आत्मनिवेदनादिश्चेति विस्तरः ।

---

**No. 78.** कृष्णयामलतन्त्रम् । Substance, palm-leaf, $18 \times 2\frac{1}{2}$ inches. Folia, 73. Lines, 5 on a page. Extent, 1,460 çlokas. Character, Bengali. Date, ? Place of deposit, Usthi, Mayamansiñha. Paṇḍita Navakiçora Bhaṭṭácáryya. Appearance, old. Verse. Generally correct.

**Beginning.** नमः श्रीकृष्णाय ।
सदाशिव-महाविष्णु-विष्णु-ब्रह्म-शिवादयः ।

यश्चैवांशककलाभिर्नमः कृष्णाय चेतवे ॥
इत्येवं द्वादश नमस्काराः । ॐ नमो देव्यै सरस्वत्यै इत्र नमस्काराः ।
एकदा मुनिभिः सार्द्धं व्यासः सत्यवतीसुतः ।
सिंहासने वसन् श्रीमान् श्रीमद्बदरिकाश्रमे ॥ इत्यादि ।

**End.** नवकमलदलाभं तस्य ............
निजवरवसरोजानन्दनं प्रशान्तं ।
सरसमधुरभावा कोमलाङ्गाय दीना
निजपतिममिदीनं प्राह दीनानुरक्ता ।

**Colophon.** इति कृष्णयामलमहातन्त्रे मुचुकुन्ददर्शने नारदमन्त्राभावम् । * ॥ समाप्तश्चायं ग्रन्थः ।

**विषयः** । व्यासनारदप्रश्नः । शम्भुप्रश्नप्रश्नः । कृष्णरहस्ये शिवप्रश्नप्रश्नः। वाराध्येश्वरनिर्बन्धे प्रश्नविष्णुप्रश्नः । वाराध्येश्वरनिर्बन्धे विष्णुमहाविष्णुप्रश्नः । इन्द्रावमारोहणनिरूपणम् । विद्याधरादिप्रत्यागमनम् । विद्याधरीं प्रति कृष्णस्य शापः । विद्याधरेण सह नारदनिर्यापम् । कृष्णकिङ्करोत्पत्तिः । महाखण्डोपाख्यानादिः । चतध्वजपितृपुरप्रवेशः । कालयवनभयादिकथनम् ।

---

**No. 79.** केदारखण्डः (स्कान्दपुराणीयः) । Substance, country-made paper, $16 \times 4\frac{1}{2}$ inches. Folia, 118. Lines, 9 on a page. Extent, 4,115 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Çyámapukur, Viçvakoṣa Office. Bábu Nagendranátha Vasu. Appearance, fresh. Generally correct.

**Beginning.** ॐ नमः शिवाय ।
यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः ।
संहर्त्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
तत्रैव नैमिषारण्ये शौनकाद्यास्तपोधनाः ॥
दीर्घसत्रं प्रकुर्व्वन्ति ऋषीणां समतेन च ।
तेषां सन्दर्शनौत्सुक्याद्दागतो हि महातपाः ॥
व्यासशिष्यो महाप्राज्ञो लोमशो नाम नामतः ।
तत्रागतं वै ददृशुर्मुनयो दीर्घसत्रिणः ॥

**No. 80.** केरलप्रश्नोत्तरसूत्रम्, (सटीकम्) । Substance, country-made paper, 6×4 inches. Folia, 40. Lines, 7 on a page. Extent, 245 çlokas. Character, Bengali. Date, ? Place of deposit, Naiháṭi, Paṇḍita Candrakánta Tarkaratna. Appearance, tolerable. Prose and Verse. Incorrect.

**Beginning.** श्रीदुर्गा ।

सिद्धान्तमौपनिषदं ध्यात्वाऽन्तं परमेष्ठिनः ।
ज्योतिषरं मनः किञ्चित् जीवाधरमुपास्महे ।
फलानि नवसद्मप्रकरणे विवक्ष्महे ।
वयं पाराशरीं होरामनुसृत्य यथामति ॥

अथ टीका,—

सिद्धान्तेति किञ्चित् मनःस्वरूपं तेजः परतत्त्वमिति यावत् तत्रापि विशिष्ट-ज्ञानात् उपास्महे भजामः । इत्यादि ।

**End.** धर्मकर्माधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ॥ (?)
प्रतिज्ञान् समावीक्ष्य पूर्व्वोदितान् विचक्षणः ।
नभस्थपरस्वरूपाणि क्रमेणैव विवक्ष्महे ॥

**Colophon.** इति निबन्धपाराशरीमतकेरलप्रश्नोत्तरसूत्रं समाप्तम् ॥
श्रीदुर्गा । अथ टीका,—
यथासमाप्तिक्रमेण मेषादीनां फलानि मन्यादिख्योतैरपन्ने प्रतिज्ञाम् समावीक्ष्य इत्यादि । इति केरलप्रश्नोत्तरसूत्रव्याख्या समाप्ता ॥

विषयः । पाराशरीमतानुसारेण नवसद्मफलनिरूपणमुखेन राजयोगादिनिरूपणम् ॥

---

**No. 81.** केरलिः । Substance, country-made paper, 16×1 inches. Folia, 40. Lines, 4 on a page. Extent, 526 çlokas. Character, Bengali. Date, Sk. 1732. Place of deposit, Pañcasár, District Dhákâ, Paṇḍita Mahendracandra Kávyatírtha. Appearance, tolerable. Prose and Verse. Incorrect.

**Beginning.** ॐ नमः श्रीसूर्याय ।

ज्ञानदीपकमादाय वर्णीकृत्य यथाचरैः ।

स्वरभेदेन संयुक्तिं पक्षिज्ञानोत्तराधरैः ॥

अ ए क च ट त प य शा वर्गाः । उक्ताः शुभाशुभाक्षराः । एभिश्च जगत् सर्वं व्याप्तमक्षरैश्चेति । अ ए क च ट त प य शाः प्रथमवर्गाः । आ ऐ ख छ ठ थ फ र षा द्वितीयवर्गाः । इ ओ ग ज ड द ब ल साः तृतीयवर्गाः । ई औ घ झ ढ ध भ व हाश्चतुर्थवर्गाः । एभि रेवं ++ वर्णैर्वर्गैर्व्यापनं । इदानीं स्वरभेदा भाष्यन्ते । इत्यादि ।

**End.** प्रथमेन द्वितीयन्तु द्वितीयेन तृतीयकम् ।
उभये पञ्च षट्सूमथवा तृतीयमक्षरम् ॥
एवं कोरक्षिता युक्ता वाक्तिविस्तारदैः (?) ॥

**Colophon.** इति श्रीचारादिज्ञानाभकोरक्षिः समाप्ता । शकाब्दाः १७९१ ।

**विषयः ।** प्रश्नकर्तुः प्रश्नाक्षरविशेषपर्य्यालोचनेन तत्तत्प्रश्नोत्तरकथनप्रकारः ॥

---

No. 82. कोष्ठीनिर्णयः, By गोपालन्यायपञ्चाननः । Substance, country-made paper, $16 \times 3\frac{1}{2}$ inches. Folia, 113. Lines, 5 on a page. Extent, 1,712 çlokas. Character, Bengali. Date, Sk. 1792. Place of deposit, Açujiyá, Mayamansiñha, Bábu Ánandakiçora Ráya. Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ नमः श्रीकृष्णाय नमः ।
श्रीकृष्णचरणाम्भोजमकरन्दमधुव्रतः ।
न्यायपञ्चाननो विद्वान् कुरुते कोष्ठीनिर्णयम् ॥
आदित्यादिग्रहाः सर्वे नक्षत्राणि च राशयः ।
दीर्घमायुः प्रकुर्व्वन्तु यस्यैषा जन्मपत्रिका ॥ इत्यादि ।

**End.** श रा इ मासः ४ । १० दिन पर्य्यन्तमशुभं शेषाभं रौप्यभूषणम् ।

**Colophon.** इति श्रीगोपालन्यायपञ्चाननविरचितायां(?) कोष्ठीनिर्णयो नाम चतुर्थो-ऽध्यायः । शाक १७९२ ॥

**विषयः ।** कोष्ठीकरणधर्म्मानुपायनिरूपणम् ।

---

**No. 83. कोष्ठीसारावली, By रामगोविन्दः.** Substance, country-made paper, 14 × 2 inches. Folia, 65. Lines, 8 on a page. Extent, 1,744 çlokas. Character, Bengali. Date ? Place of deposit, Çáktá, via-Keráṇígañja, District Dháká, Paṇḍita Trilocana Tarkálaṅkára. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

गुरुञ्च ज्ञानदातारं देवीं लेखां तथैव च
नवग्रहानुगां वाणीं नमामि शिरसा भुवि ॥
सुरान् नमस्कृत्य विलोक्य शास्त्रं
ज्योतिः सदा कोविदरञ्जनीया ।
श्रीरामगोविन्दद्विजेन कोष्ठी-
सारावली चारु वितन्यते वै ॥
न तथ्यं सर्वबोधाय पाठार्थं बालकस्य च ।
ज्योतिःशास्त्रोद्धृतः सारः संक्षेपेण मयोच्यते ॥
आदौ लग्ननिर्णयः ।
रामोऽश्वेदै( १ । ४७ ।)र्जलधिस्तु मित्रै-( ४ । १७ )
र्बाणो रसैः ( ५ । ६ ) पञ्चखसागरैश्च ( ५ । ४० ) ।
बाणः कुवेदै( ५ । ४१ )र्विषयोऽक्षयुग्मैः
( ५ । २९ । ) क्रमोत्क्रमान्मेषतुलादिमानम् ॥
लग्नं दशपलं हित्वा ततुसंख्यं क्रमतः पलम् ।
विपलञ्च रवेर्भोग्यमेवं कल्पनमब्जभे ॥
चतुस्त्रिंशदशीतिश्च शतञ्चैव पुनः शतम् ।
चाशीतिश्च चतुस्त्रिंशत् त्रुटिं वृद्धिं समादिशेत् ॥
माघचाद्यौ दिवाचानिर्माघाद्यौ वर्द्धते दिवा ।
इति स्वचादिनिर्णयः ॥ इत्यादि ।

**End.** चाभिर्दुःखं मरणत्क्लेशो धननाशश्च जायते ।
मरणं चातपादादि तद्दिने जायते ध्रुवम् ॥
तस्मिन् दिने च यो रोगो जायते पुरुषस्य च ।
असाध्यः स भवेद्रोगो मृत्युक्लेशादिदायकः ॥

**Colophon.** इति कोष्ठीसारावल्यामुदितादिदशानयनं समाप्तम् ॥

विषयः । अथ प्रथमं ग्रहनिर्णयः । ग्रहादिनिरूपणम् । सौरमसंक्रान्तकथनम् । दीप-स्थितिनिरूपणम् । मेषादीनां वर्णकथनम् । वारादिकथनम् । दशादिफलकथनम् । राशि-दैवताफलकथनम् । राशीनां क्रूरसौम्यादिविवेकः । मेषादीनां विशेषसंज्ञाः । ग्रहाणामुच्च-नीचफलकथनम् । मूलत्रिकोणफलकथनम् । अवहरणविषयेक्षणफलकथनम् । सौम्यक्षेत्रफलकथनम् । भेषादिवर्गफलकथनम् । होराफलकथनम् । नवांशादिनिरूपणम् । दशान्तरदशाफलकथनम् । काल-वारादिफलकथनम् । कालपुरुषफलकथनम् । गुणादिफलकथनम् । नपुंसकग्रहफलकथनम् । जन्मा-ङ्गफलकथनम् । आरम्भग्रहफलकथनम् । जन्मनक्षत्रफलकथनम् । वैधव्यफलकथनम् । अथ दशादिग्रहाणां दृष्टिकथनम् । ग्रहाणां वक्रत्वविवेचनम् । ग्रहाणां शत्रुमित्रविवेचनम् । अथ केन्द्रकथनम् । ग्रहाणां नैसर्गिकमित्रफलकथनम् । ग्रहाणां नैसर्गिकशत्रुफलकथनम् । लग्नाव-स्थितफलकथनम् । ग्रहाणां दिग्बलकथनम् । ग्रहाणां बलाबलनिरूपणम् । वक्रस्थफलकथनम् । भेषफलकथनम् । होराफलकथनम् । द्रेष्काणकथनम् । नवांशफलकथनम् । द्वादशांशादि-फलकथनम् । ग्रहाणां दैवादिफलकथनम् । अथ राशिफलकथनम् । जन्मलग्नफलकथनम् । वारफलकथनम् । तिथिनक्षत्रकरणफलकथनम् । वसुधादिद्वादशस्थानगतग्रहाणां फल-कथनम् । ग्रहाणामवस्थाफलकथनम् । अथ अवस्थाविवेककथनम् । मासविंशद्दशानिरूपणम् । सम्वत्सराफलकथनम् । पक्षदशानिरूपणम् । मास-दिन-प्रहरदशानिरूपणम् । योगिनीदशा-कथनम् । चक्रस्थाने ग्रहस्थिता सर्वं ज्ञातव्यमिति कथनम् । अथ आयुर्दायकथनम् । अष्ट-वर्गकथनम् । सर्वदशादिफलकथनम् । दशान्तर्दशादिनिरूपणम् ।

---

No. 84. कौतुकरत्नाकरः । Substance, country-made paper, 14½ × 3½ inches. Folia, 20. Lines, 6 on a page. Extent, 502 çlokas. Character, Bengali. Date ? Place of deposit, Tripurá, Maháraja's Library. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

धूलीराजदवज्रांशुरपि करधृतं कुम्भीनीलालताभीं
स्मेरेक्षा रक्ताङ्गी अथवनुधनया प्रसन्नन्नौ वदन्नौ ।
पश्चैतां दृष्टपत्नीमिति सुरचरिता जल्पिते चोपचारं
तां नीत्वा कोरकन्नः सपदि गतशिराः पातु वः पञ्चवक्त्रः ।
इत्यादि ।

**End.** अथ एव ततश्चक्रज्ञानाति इति सर्वेषां सम्प्रीताय तथाविधानेन एव राजधर्मिणी प्रकीर्तितः ।

**Colophon.** इत्येतावद्दृष्टं कौतुकरत्नाकरस्य । श्रीहरिः । श्रीरामभद्रशर्म्मणः स्वाक्षरमिदं पुस्तकम् ।

**विषयः ।** भुलुया-इतिप्रसिद्धराजधानीवासकस्य नरसिंहमाणिक्यपुत्रस्य लक्ष्मणमाणिक्य-नाम्नः भूपतेः कवितार्किकापरनामधेयेन पुरोधसा विरचितः प्रहसनविशेषः ।

---

**No. 85.** **कौलावलीनिर्णयः**, By **ज्ञानानन्दपरमहंसः ।** Substance, country made paper, 19 × 5 inches. Folia, 37. Lines, 10 on a page. Extent, 1,277 çlokas. Character, Bengali. Date, ? Place of deposit, Májpáḍá, District Dhaká, Babu Rásavihári Ráya. Appearance, new. Verse. Incorrect.

**Beginning.** श्रीगुरवे नमः ।

नत्वा श्रीगुरुपादपद्मयुगलं सिद्धैः सदा सेवितं
ज्ञातॄणां परिभावमोक्षजनकं कौलावलीनिर्णयम् ।
वक्ष्येऽहं कुलवर्द्धनं सुकृतिभिः सेव्यं सदा कौलिकै
र्भावैरेव मनोहरे + + + + + प्रसादाश्रयम् ॥
प्रातरुत्थाय शिरसि सहस्रदलपङ्कजे ।
तरुणादित्यकिञ्जल्के विधोर्मण्डलसंयुते ॥
ध्यायन्निजगुरुं धीरो रजताचलसन्निभम् ।
वीरासनसमासीनं मुद्राभरणभूषितम् ॥
शुक्लमाल्याम्बरधरं वराभयपाणिकम् ।
वामोरुशक्तिसहितं कारुण्येनावलोकितम् ॥
प्रियायाः सव्यहस्तेन धृतचारुकलेवरम् ।
वामेनोत्पलधारिण्या रक्ताभरणभूषितम् ॥
ज्ञानानन्दसमायुक्तं स्मरेत् तन्नामपूर्वकम् ।
मानसैरुपचारैश्च सम्पूज्य कल्पयेत् सुधीः ॥
गन्धं भूम्यात्मकं दद्यादाकाशपुष्पं ततः परम् ।
धूपं वाय्वात्मकं दद्यात् तेजसा दीपमेव च ॥
नैवेद्यममृतं दद्यात् हृदाच मुकुटं तथा ।
चामरं पादुके चैव तथालङ्कारभूषणम् ॥
नवकुम्भविधानेन सम्पूज्य चार्घ्यं तथा ।

यथाशक्ति जपं कृत्वा समर्प्याथ स्तुतिं पठेत् ॥
इत्यादि ।

**End.** अथ कामकला शक्तिः साधको रत्नमन्दिरे ।
रत्नालङ्कारसंयुक्तो रक्तगन्धानुलेपनः ॥
रक्तवस्त्रो रक्तनेत्रो रक्तकामकलात्मकः ।
रक्तपुष्पैश्च विविधै र्नैवेद्यै रक्तपङ्क्तिभिः ॥
नानोपचारपङ्क्तिभिः कुङ्कुमादिविलेपनैः ।
घटादिमध्यरन्ध्रेषु स्फुर + धनदपिण्डीम् ॥
बन्धूककुसुमाकाररक्ताङ्गीभूषितभूषणाम् ।
रक्तकोकनदपुष्पेषु वरदाभययुक्कराम् ।
वह्नीप्रकाशिसिन्दूरभूषितां नयनोज्ज्वलाम् ॥

**Colophon.** इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये दशमोल्लासः ॥

विषयः। अथ कौलिकानां प्रातःकृत्यनिरूपणम् । कुलगुरुसंख्यादिकथनम् । कुलद्रव्य-संख्यादिकथनम् । प्रातःकृत्याकरणे दोषकथनम् । स्नानविधिः । सन्ध्याविधिः । तर्पणविधिः । षट्कर्मनिरूपणम् । तत्र कर्मभेदे वर्णभेदकथनम् । पूजास्थाननिरूपणम् । द्वारादिप्रवेशपूजा-विधिः । कूर्मचक्रनिरूपणम् । अर्घ्यस्थापनविधिः । आसनादिविधिः । पूजाद्रव्यादिनिरूपणम् । द्रव्यस्थापनस्थानादिकथनम् । फलपुष्पपत्रदानविधिः । पुष्पविवेचनम् । शक्तियुक्तेन पूजा कार्य्येति कथनम् । चक्रमध्ये स्त्रीपुरुषयोरुपवेशनादिव्यवस्था । पूजादौ विजयादिस्वीकारविधिः । विजयादिशोधनविधिः । तत्र अनुपानविधिः । भूतशुद्ध्यादिक्रमकथनम् । अन्तर्यजनविधिः । तत्र हृत्पुष्पकथनम् । अथ बाह्यपूजाविधिः । तत्र यन्त्रद्रव्यनिरूपणम् । यन्त्रपुष्पनिर्णयः । पञ्चमकारविधिः । पञ्चद्रव्यशुद्धिकथनम् । अर्घ्यपाद्यादिविधिः । षोडशोपचारविधिः । शक्ति-विषये धूपनिरूपणम् । दशाङ्गषोडशाङ्गधूपादिविधिः । कुण्डगोलादिविधिः । होमद्रव्य-निरूपणम् । अथ त्रिविधपानलक्षणकथनम् । अन्नपूर्णाध्यानादिकथनम् । अन्नपूर्णामन्त्रादि-कथनम् । कौलिकलक्षणादिकथनम् । पानविधिः । सुरादेवीध्यानादिकथनम् । चक्रमध्ये वर्ज्यावर्ज्यकथनम् । ततः शान्तिस्तोत्रम् । तिलकादिविधिः । आत्मसमर्पणविधिः । पश्चात्कृत्य-निरूपणम् । तत्र शक्तिशोधनादिविधिः । स्थानविशेषे पूजायां फलाधिक्यकथनम् । वामाचार-भावेन पूजनीयदेवताकथनम् । पूजाकालकथनम् । शिवावलिप्रकारकथनम् । कुलाचारादि-निरूपणम् । नवकन्यानिरूपणम् । कुलाष्टककथनम् । महाष्टककथनम् । शक्तिपूजाप्रकारः । अथ कौलिकलक्षणादिकथनम् । गुरोरग्रतो निषिद्धकर्मकथनम् । गुरुशिष्ययोर्निषिद्धकर्मकथ-नम् । शक्तिप्रशंसाकथनम् । अथ भावनिरूपणम् । अथ कामकलाध्यानादिकथनम् । वीरभाव-

कथनम् । तत्र चिताशाधनादिविधिः । बलिदानविधिः । वीरसाधनविधिः । शवसाधन-विधिः । शवशवादिकथनम् । पञ्चमुण्डीसाधनविधिः । अथ षट्चक्रपुरश्चरणविधिः । अथ श्रस्माशीमपूजायाः कर्मयताकथनम् । तत्र कुमारीपूजनादिविधिः । समयाचारविधिः । प्रकाशादिद्रव्ये नमस्कारविधिः । नमस्कारादिकथनम् । बलपुष्पादिग्रहणविधिः । काम्यपूजा-विधिः ; रत्नपूजाविधिः । त्रिपुरावीरसाधनविधिश्चेति ॥

---

**No. 86.** क्रमदीपिकावृत्तिः । Substance, country-made paper, Folia, 45. Lines, 6 on a page. Extent, 1,215 çlokas. Character, Bengali. Date, Sk. 1691. Place of deposit, Kánṭhálpáḍá, Post office, Naiháṭí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नमोऽस्तु गुरवे तस्मै केशवाय महात्मने ।
यस्यावतारः सर्व्वेषामपवर्गाप्तिसाधनम् ॥
तत्र तावत् प्रथमतः प्रारिप्सितस्याविघ्नेन परिसमाप्त्यर्थमिष्टलाभाय नमस्कारः अभीष्टदेवतास्मरणात्मकमाशीर्व्वादरूपं मङ्गलमारब्धं सम्बन्धादिकं सूचयति प्रथमश्लोकेन तस्य प्रयोजनं निःश्रेयसदुःखनिवृत्तिः । इत्यादि ।

**End.** जगत्सृष्ट्यादिप्रवृत्तिमत् निरतिशयप्रकाशानन्दचिद्रूपं परं ज्योतिः यत् प्रकृतिं विभजते स्वेच्छालीलानविराड्रूपाधिष्ठानतया तिष्ठति । कथं मौक्तिप्रलीनत्वं (?) करोमि स्वदेवादिप्रकोपहारेण तन्मय एव भवामि ॥

**Colophon.** इति क्रमदीपिकावृत्तावष्टमः पटलः ॥ * ॥ शकाब्दा १६९१ ॥

**विषयः ।** क्रमदीपिकाख्यवैष्णवतन्त्रस्य व्याख्यानम् ॥

---

**No. 87.** सोमतीर्थवर्णनम्, (स्कन्दपुराणकाशीखण्डीयम्) । Substance, country-made paper, 14×8 inches. Folia, 19. Lines, 6 on a page. Extent, 342 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodal, District Mayamansiñha, Paṇḍita Kálicandra Bhaṭṭácáryya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ विश्वेश्वराय नमः । अगस्त्य उवाच ।

स्कन्द भविष्यं कुमारं वारस्य शिवनन्दन ।
सर्व्वभाजनं जातश्चीर्णानि कथयाधुना ॥

आनन्दकाननं यानि यत्र भान्ति षडानन ।
तानि लिङ्गस्वरूपाणि समाचक्ष्व समाहितः ॥ इत्यादि ।

End — इति नन्दिवचः श्रुत्वा देवी देवीसमायुतः ।
दिव्यं रथं समारुह्य निजगाम त्रिपिष्टपात् ॥

Colophon — इति स्कन्दपुराणे काशीखण्डे सेवतीर्थवर्णनं नाम सप्तनवतितमोऽध्यायः ॥

विषय । काशीस्थिततीर्थनिचयनिरूपणमुखेन तत्तत्तीर्थानां माहात्म्यादिकथनम् ।

---

**No. 88.** गयापद्धतिः, By रघुनाथभट्टः । Substance, country-made paper Folia, 19. Lines, 11 on a page. Extent, 440 çlokas. Character, Nāgara Date, Sam. 1886. Place of deposit, Gobardhansarāi, Benares, Pandita Vindhyeçvariprasāda Dube. Appearance, fresh. Prose and verse. Correct.

Beginning — श्रीगणेशाय नमः ।
अथ गयापद्धतिर्लिख्यते ।
गदाधरं प्रणम्यादौ विघ्नाद्यः परदेवता ।
रघुनाथो गयाकृत्यं यात्रारम्भादि भाषते ॥
अथ यात्राप्रभृतिसकलगयाकृत्यप्रयोगः । इत्यादि ।

End — माखोपन्यासभवामार्गे(?) रघुनाथेन निर्मित
परानुलेखमन्दोषप्रयोगक्रमसंग्रहः ॥
प्रीयतां पितरस्तेन देवश्चादिगदाधरः
अन्नयास प्रमाद दोषः कश्चिदिह मे भवेत् ॥

Colophon — इति श्रीमन्माधवात्मजभट्टरघुनाथकृतः गयानुष्ठानपद्धतिः सम्पूर्णा । सं०
धरार्णवगजक्ष्मा संवत् १८८६ मार्गशीर्ष कृष्णद्वादशी ग्रन्थसमाप्तिः ॥ शुभ
भट्ट आचार्येण लिखितं स्वार्थं परार्थं च ।

विषय । गयातीर्थे यात्रारम्भमारभ्य तत्र कर्तव्यस्य पिण्डदानादिकस्य प्रयोगकथनम् ।

---

**No. 89.** गयाप्रकाशः । Substance, country-made paper, 10×5 inches. Folia, 21. Lines, 12 on a page. Extent, 315 çlokas. Character,

Bengali. Date, ? Place of deposit, Kánṭhálpáḍá, Post office, Naiháṭí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose and verse. Incorrect.

**Beginning.** यस्य प्रथमपर्वं नास्ति तेन द्वितीयपर्वस्य प्रारब्धवाक्यं लिखितम् ॥

गयायां पिण्डप्रदानेन यन्मादिनौचे ?

मोचयितौ तीर्थवरप्रभावाद्वौषिवंशं नरकं गतो तौ ।

पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।

प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ।

तेनाक्षद्युगपद्योगो जातो वाक्येन सत्तम ॥ इत्यादि ।

**End.** भाद्रं ईश्वरीकुण्डे चकाराद्रुक्मिणीकुण्डे च भाद्रकर्त्तुः शिवो भवतीत्यर्थः । गौरी चेति तत्र महेश्वरकुण्डे मतङ्गलाभः पूजनात् सर्व्वसौभाग्यं प्राप्तितो भवतीत्यर्थः ॥

**Colophon.** इति गयाप्रकाशः समाप्तः ॥

विषयः । गयामाहात्म्यादिनिरूपणमुखेन तत्तीर्थकर्त्तव्यकर्म्मविषयनिरूपणम् ।

---

**No. 90.** गीतगोविन्दटीका, (सर्व्वाङ्गसुन्दरी) । Substance, country-made paper, $15 \times 2\frac{1}{2}$ inches. Folia, 65. Lines, 6 on a page. Extent, 1,500 çlokas. Character, Bengali. Date, Sk., 1650. Place of deposit, Kánṭhálpáḍá *viá* Naiháṭí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य जगतामीशं कृष्णरूपं सनातनम् ।

क्रियते गीतगोविन्दटीका सर्व्वाङ्गसुन्दरी ।

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयमित्यादि । इत्यादि ।

**End.** किम्भूताः सानन्दा आनन्देन सह वर्त्तमानाः । किं तदित्याह मांसर्व्वकलासु यत् कौशलं अस्ति यदैश्वरमनुध्यानं यत् शृङ्गारे विवेकतत्त्वम् । यत् काव्येषु लीलायितम् । किम्भूतस्य कृष्णैकतानात्मनः । कृष्णश्चासौ एकतानश्चेति कृष्णैकतानं । तदेव आत्मा यस्य एकातानोऽनन्यवृत्तिः ॥

**Colophon.** इति गीतगोविन्दे महाकाव्ये लाघौवभट्टकावर्षिते सुप्रीतपीताम्बरो नाम द्वादशः सर्गः समाप्तोऽयं ग्रन्थः । शकाब्दा १६५० ।

ख-बाण-ऋतु चन्द्रे च शाके परिमिते मता।
लिखिता जयदेवस्य टीप्पनीयं प्रयत्नतः॥
प्रणम्य भारतीं देवीं श्रीनारायणशर्म्मणा।
लिखिता शब्दशास्त्रस्य मममता शोधिता बुधैः॥
श्रीमाधवाय नमः।

विषयः। गीतगोविन्दनामकस्य कृष्णलीलाविषयकस्य काव्यस्य व्याख्या।

---

**No. 91. गीतगोविन्दप्रबोधः,** By **रमाकान्तः।** Substance, country-made paper, 15×3 inches. Folia, 57. Lines, 6 on a page. Extent, 1,617 çlokas. Character, Bengali. Date, ? Place of deposit, Dhákā, Paṇḍita Candrakánta Nyáyálaṅkára. Appearance, old. Prose. Incorrect

**Beginning.** ॐ नमो गणेशाय।
गोपिकास्तनविभ्रमस्तु राधिका
भ्रूविभङ्गपरिकम्पितान्तरः।
नयनैरधरजितरोषरः
श्यामलो जयति नन्दनन्दनः॥
प्रणम्य मान्यान् बहुमानपूर्व्वं
मन्यानुपस्थाय कृताञ्जलीकम्
श्रीगीतगोविन्दप्रबोधमुर्व्वी-
देवो रमाकान्त इमञ्चकार॥
अनेकशः पूर्व्वविचक्षणानां
विस्तारिताः सन्ति यदस्य टीकाः
तथापि संक्षेपविशेषदर्शी
मेम श्रमः सद्भिरयं न बाध्यः॥
इह खलु नानाविधबुधजनगणसम्मत-निखिलविद्यागमनद्भुतनमस्कारकाम-
सानन्दक्रीड़ाकवनच्छलेन तमेव प्रथमं प्रतिपादयन्नाह मेघैरिति। यमुनायाः
तीरे राधामाधवयोः रहःकेलयो जयन्ति। रहसि निर्जने सुरते रति-
विषये वा केलयो रहःकेलयः। तथाच रहः सुरतगुह्ययोरिति रभसः।
रहो गुह्यं यथा स्यात् इति क्रियाविशेषणं वा। इत्यादि।

**End.** श्रीभोजदेवप्रभवस्य श्रीभोजदेवनामाख्य पिता तस्मात् प्रभवस्य जातस्य ।

**Colophon.** इति श्रीगीतगोविन्दप्रबोधे द्वादशसर्गव्याख्या समाप्ता ।

यदत्र पूर्व्वपूर्व्वासां टिप्पनीनां विरोधिता ।

कृपया मयि तत्सर्व्वं क्षम्यतां सदसद्विदः ॥

ममोक्तिरन्यटीकानां संक्षेप एव केवलम् ।

विशेषो यदि चान्योऽस्ति तदा चिन्त्यो मनीषिभिः ॥

कृतिनः सदसद्विवेचका

भवतास्तां कृपया कृतौ मम ।

स्खलते पथि पिच्छिले मुहुः

सरलतो दण्ड इवावलम्बनम् ॥

यो जातो वसुधामनगुरोर्गोविन्दपादाम्बुज(?)

द्वन्द्वध्यानकराजिराजितहृदः श्रीरामभद्रात् सुतः ।

तेनैवाक्षमुदे मुदेयमुदिता टीका तदीव प्रियः

प्रायः केलिकलाकलानिधिलसत्काव्याब्धिपारप्रवोः ॥

न तोल + + + द्विजराज शाके

देवीप्रबोधोषतिथौ नवम्यां ।

श्रीगीतगोविन्दकविलटीका-

मिमां रमाकान्तकृतो लिलेख ॥

समाप्तोऽयं ग्रन्थः ।

**विषयः ।** जयदेवकृतस्य गीतगोविन्दनामकस्य कृष्णलीलावर्णनात्मकस्य काव्यस्य व्याख्यानम् ।

---

**No. 92.** गीतासारः । Substance, country-made paper, $13\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 3. Lines, 7 on a page. Extent, 110 çlokas. Character, Bengali. Date, ? Place of deposit, Kálikaccha, Parganá Saráil, District Tripurá, Paṇḍita Kálicandra Nyáyapañcánana. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः कृष्णाय । अथ गीतासारः । अर्ज्जुन उवाच ।

ॐकारस्य च माहात्म्यं रूपं स्थानं स्वरं तथा ।

तत्सर्व्वं श्रोतुमिच्छामि ब्रूहि मे परमेश्वर ॥

श्रीभगवानुवाच ।

साधु पार्थ महाबाहो यन्मे त्वं परिपृच्छसि ॥ इत्यादि ।

**End.** समस्ति ह्यर्जुनात् सर्व्वं गीता यस्य हृदि स्थिता ।
यत्र तत्र स्थितो भक्त्या स गच्छेत् परमं पदम् ॥ (?)

**Colophon.** इति श्रीकृष्णार्ज्जुनसम्वादे गीतासारः समाप्तः ॥

विषयः । श्रीकृष्णार्ज्जुनसम्वादच्छलेन ओङ्कारस्य माहात्म्यरूपध्यानादिनिरूपणम् ॥

---

**No. 93.** गुणप्रकाशः By वर्द्धमानोपाध्यायः । Substance, country-made paper, $15\frac{1}{2} \times 2\frac{1}{2}$ inches. Folia, 79. Lines, 5 on a page. Extent, 2,123 çlokas. Character, Bengali. Date, ? Place of deposit, Dhánuká, Post Office, Pálaṅ, District Pharidpur, Paṇḍita Haramohana Tarkacúḍámaṇi. Appearance, tolerable. Prose. Generally Correct.

**Beginning.** ॐ नमः शिवाय ।
एकत्र मस्तिपतिताखिलकल्पबिम्ब-
मन्यत्र चन्द्रकिरणाखिलग्रहभावं ।
सन्ध्याजटाञ्चितमनङ्गरिपोर्नमामि
खण्डप्रविष्टमिव पुष्कलमं प्रयामम् ॥
मतिवत्सुतेरपि प्रारिप्सितविघ्नविघातकत्वात् नामादौ इतां निबध्नाति गुरु-रिति । तुष्टिरनुरक्तिरतुष्टिर्द्वेषः तदुभयमपि बन्धनीयमोचनीययोरीश्वर-विषयकमेव ।
परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ इति स्मृतेः ।
यद्वा मोचनेच्छाबन्धनेच्छे तुष्ट्यतुष्टी ते ईश्वरस्यैव तदिच्छाया एकत्वेऽपि तत्तत्फलोपधानात् भिन्नत्वाभिमानजीवीयाबद्धोपाधिको भेदः सहकारिभेद-समवधानाच्च तस्याः कार्य्यभेदजनकत्वात् तत बध्नतः पुनरित्यनेन बन्धस्या-वृत्त्या मोक्षानन्तरं बन्ध इत्यर्थे विरोधात्तुष्टेः पुनरिति योजना । तथाच व्यवच्छेदार्थः पुनःशब्दो नावृत्त्यर्थं इति मोक्षादोषः । यद्वा बध्नतः पुन-रित्यनेन बन्धस्य निरन्तरानुवृत्तिरुच्यते न मोक्षानन्तरतेति नोक्तदोषः । मुक्तिबन्धौ दुःखमन्तत्यत्यन्तच्छेदतदृत्ती तयोश्च शरीरावच्छेदत्वादिह्यपदेन भोगायतनं शरीरमेव ....................... ।
.................. कारो बधे निग्रहे च ...... यत्ने पचावपि ।
गुणारम्भेऽपि पुमान् क्रियां अतिप्रवेशके । इत्यादि ॥

**End.** न च भट्टेरपेक्षाबुद्धेर्हिंसाभिव्यञ्जकत्वाकारा दृष्टान्तासिद्धिः तत्रापेक्षा बुद्धेर्हिंसादिजनकत्वेन नैव प्राक् ............ एवं घटविषयकबुद्धेः प्राक् च जनकत्वे सिद्धे तद्दृष्टान्तेनापेक्षाबुद्धेरपि विषयकबुद्धेव प्राक् घटजनकत्वमनु-मेयं । न चाद्यानुमानेऽपेक्षाबुद्धित्वस्योपाधित्वात् ननु जातो घट इति विशिष्टप्रतीतेः ...... उत्पन्नः सिद्धेन वर्त्तमाने विषये बाधकाभावात् न चातीतानागतादेः तदभावे ...... व्यवहारानापत्तिः तत्र...... अन्वयात् । न च ज्ञानविधावेव तद्धीविषयो वर्त्तमानेऽपि तथापत्तेः प्रतीत्योर्विषय-वैलक्षण्यानुभावात् वस्तुतो जानामीति मानसानुव्यवसायवत् ज्ञानं प्रत्यक्षं अन्यथा ............ समावायः अधिकार्यविशेषगुणत्वात् गुणपत्त्वानध-प्रत्यक्षत्वमनुमेयं अन्यथा परमाण्वादि ...... ननु परमाणुवृत्तिः रूपादिः घटादौ प्रतीयते न च ..... परमाणुवृत्तितया च तद्रूपः परमाणोरती-न्द्रियत्वेन तद्प्रतीत्यैव न स्यात् न परमाणुघटितसन्निकर्षेण अयोग्यता-भावात् रूपादिः । ( अतःपरं खण्डितम् )

विषयः । रूपादिचतुर्विंशतिसंख्यकानां नैयायिकसम्मतगुणानां यथायथविचारपूर्वकं समा-धानम् । "तुष्टेर्मोचयतो यस्मादतुष्टेर्बन्धतः पुनः कारागारमिदं विश्वं यस्य नौमि तमीश्वर"-मिति किरणावलीनिर्माणतुष्वभवन उदयनाचार्यस्य गुणपन्थस्य मङ्गलाचरणं अस्तित्वपि तुष्टेरिति मङ्गलश्लोकमारभ्य व्याख्यानात् किरणावल्या उपरि क्रियेयं टीका ।

---

**No. 94.** गुणविवृतिविवेकः, by विद्यावागीशः. Substance, country-made paper, 16 × 2½ inches. Folia, 157. Lines, 7 on a page. Extent, 5,600 çlokas. Character, Bengali. Date, ? Place of deposit, Barsikurá, Mayamansiñha, Paṇḍita Jayanátha Tarkálañkára. Appearance, very old. Prose. Correct.

**Beginning.** ॐ नमः शिवाय नमः ।

कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपंक्तिः ।
गोपयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
गुणप्रकाश ... ... ... ... ॥

प्रारिप्सितप्रत्यूहनिवर्त्तकत्वेन कृतं भगवन्नमस्काररूपं मङ्गलं शिष्यशिक्षायै चादौ निबध्नाति ॐ नम इति । व्याख्यानमेतदनुमानदीधितिरहस्ये

... ... प्रकाशप्रकाशिकामवतारयति । विनापीति निरूपणस्य प्रश्नप्रयोग
बुत्पाद्यादिति भावः । इत्यादि ।

End. यत्र चात्र किञ्चेति चमत्कारविचारचञ्चत्वोकमतिहणेः ॥

Colophon. इति महामहोपाध्यायश्रीविद्यावागीशभट्टाचार्य्यविरचितो गुणविवृति-
विवेकः समाप्तः ।

विषयः । मथुरानाथकृतस्य गुणप्रकाशविवृतिनामकस्य गुणप्रकाशव्याख्यानग्रन्थस्य व्याख्या ।

---

No. 95. गुप्तवृन्दावनरहस्यम्, by हरिचरणः. Substance, country-made paper, 10 x 4 inches. Folia, 27. Lines, 10 on a page. Extent, 643 çlokas. Character, Bengali. Date, Sk. 1602. Place of deposit, Visnupur, Krisnaganja, Pandita Çaçibhúsana Gosvámí. Appearance, old. Prose. Incorrect.

Beginning. श्रीश्रीकिशोरीकिशोरौ जयतः ॥
प्रपद्य वृन्दावनमध्यमेकतः श्रीमन्नपातुत्कलिकाकुलात्मा ।
उद्घाटयामि अहतः कठोरां वाण्यस्य मुद्रां हृदि मुद्रितस्य ॥
यये वृन्दारण्ये स्फुरितमिव गोपीतृषवपराः
परामापुः के वा न किल परमानन्दलहरीं ।
यतो गोपैर्यापे स्वयमपि च यो गोपवनिषे
वैरेण्यां मे चेतस्युपदिश दिशं वा कुरु कृपां ॥
... ... ... ... विचरते
सदा प्रेयाश्चति श्रुतिरपि विरौति श्रुतिरपि ।(?)
इति ज्ञात्वा वृन्दे चरणमभिवन्दे तव कृपां
कुरुष्व क्षिप्रं मे फलतु नितरां तर्षविटपी ॥ इत्यादि ।

End. अन्योन्यं रसकेलिकौतुकविधौ यत्रां रवे मग्नतां
प्राप्तायां प्रसकोकिलादिविरुतैः कश्चिन् खगो गोतृषयः ।
पायो पायवनवनेन विचक्षणानां परीहासकृत् (?)
नानारसविचारकौतुकरवे श्रीवृन्दिमेकन्दिरम् ॥
... ... ... ... ... ... ... ।
सखि सहचरीवृन्दैरनुचर्य्यादिभिर्नवम् ।
तत्कालनिश्चितयोः सम्यं कुर्मोवगत् यथामति ॥

इत्येवं कथितं साधो नैत्यिकं चरितं तयोः ।
यथामति तथा कुर्य्याद्यथा तत्र मतिर्भवेत् ॥
इति नत्वा गुरुं तत्र पपात दण्डवद्भुवि ।
तथा भवतु मे नित्यमिति विश्वासधाम्यवम् ॥
श्रीमत्श्रीरघिनग्रामनाना श्रीश्रीगुरुर्मम ।
यत्पादाम्भोजमाधुर्य्यं नवं भावयतु तत्सुखम् ॥ (?)
नाम्ना......चरित्ररतः श्रीगुरोः सत्कृपातो
नानातत्त्वप्रकटस्फुरसैः पुस्तकं चाव चक्रे ।
यद्दध्यासेऽप्रकटभजने चित्तवृत्तिर्निगूढे
चित्ताह्वयां सपदि रसिका नित्यमालोकयन्तु ॥
... ... ... ... ... ... ।
येषां सखीवृन्दनिषेव्यमाणौ श्यामौ सदा राजत एव चित्ते ॥
चरित्ररत्नवेऽत्र वृन्दावनसप्रखण्डे च परिच्छेदस्तृतीयः ।
सेवाप्रकाशः प्रथयतु तान् ॥

**Colophon.** इति श्रीगुप्तवृन्दावनरत्नखण्डे नित्यसेवाप्रकाशस्तृतीयः परिच्छेदः । शुभमस्तु शकाब्दा १६०१ ॥

**विषयः ।** वैष्णवशास्त्रं । प्रथमपरिच्छेदे-उत्कलिकावल्लरीनिरूपणं तथा ध्यानप्रकाशादि-निरूपणम् । द्वितीयपरिच्छेदे-स्वभावप्रकाशादिनिरूपणम् । तृतीयपरिच्छेदे-नित्यसेवाप्रकाशादि-निरूपणम् ॥

---

**No. 96.** गुरुपादुकास्तोत्रटीका, by अनन्तरामः. Substance, country-made paper, 18 x 3½ inches. Folia, 5. Lines, 8 on a page. Extent, 215 çlokas. Character, Bengali. Date, ? Place of deposit, Hálisahar, Khásváṭí, Paṇḍita Mahádeva Bhaṭṭácárya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ गुरवे नमः । अथ गुरुपादुकास्तोत्रटीका द्विजेन रच्यते ।
गुरूपदेशाच्च पण्डितैः सा प्रशस्यताम् ।
नत्वा श्रीगुरुमम्भोजं प्रत्यक्षं शिवरूपिणम् ।
श्रीमदानन्दरामेण ज्ञात्वा चैव गुरोर्मतम् ॥ इत्यादि ।

**End.** चाञ्चल्यात् शेषो नास्ति ।

विषयः । तन्त्रोक्तस्य गुरुपादुकास्तोत्रस्य व्याख्यानम् ।

---

**No. 97.** गुरुपादुकास्तोत्रटीका, by रघुनन्दनन्यायालङ्कारः. Substance, country-made paper, 16×3 inches. Folia, 4. Lines, 7 on a page. Extent, 101 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala, Mayamansiñha, Paṇḍita Kálícandra Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ श्रीशिवाय नमः ।

नमस्तस्मै भगवते परमात्मस्वरूपिणे ।
गुरवे श्रीमते ज्ञानदात्रे सर्व्वार्थदर्शिने ॥
सदाशिवपदं ध्यात्वा स्वस्था स्वयं मुदा । (?)
करोमि पादुकास्तोत्रव्याख्यानं शिवसेवकः ॥

**End.** एतत् वचनानुसारेण षडाम्नायागमोक्तमन्त्रोपासनपरा ये कुर्व्वन्ति तेऽप्यतिशयमन्त्ररुचयः ॥

**Colophon.** इति रघुनन्दनन्यायालङ्कारविरचिता गुरुपादुकास्तोत्रटीका समाप्ता ।

विषयः । तन्त्रोक्तस्य गुरुपादुकास्तोत्रस्य व्याख्या ।

---

**No. 98.** गोत्रप्रवरविवेकः । Substance, country-made paper, 15×2½ inches. Folia, 2. Lines, 8 on a page. Extent, 44 çlokas. Character, Bengali. Date, ? Place of deposit, Kuṇḍi, Tháná Ráṇínagar, District Dháká, Paṇḍita Káliçañkara Vidyálañkára. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

अथ गोत्रप्रवरविवेको लिख्यते । तत्र—
जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः ।
वसिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते (?) ।
एतदुपलक्षणम् । अन्येषामपि दर्शनात् । प्रवरस्तु गोत्रप्रवर्त्तको मुनिः ।
तत्र जमदग्निगोत्रस्य जमदग्न्यौर्व्ववसिष्ठाः । इत्यादि ।

**End.** कृष्णात्रेयगोत्रस्य कृष्णात्रेय-आङ्गिरस-बार्हस्पत्यप्रवराः ॥

**Colophon.** इति गोत्रप्रवरविवेकः समाप्तः ।

**विषयः ।** जमदग्न्यादिगोत्राणां प्रवराणाञ्च समुच्चयः ।

---

**No. 99.** गोरक्षसंहिता, by गोरक्षनाथः. Substance, country-made paper, 19×4 inches. Folia, 13. Lines, 7 on a page. Extent, 398 çlokas. Character, Bengali. Date, ? Place of deposit, Káṭiháli, *viá* Mayamansiñha, Paṇḍita Viçvanátha Tarkabhúṣaṇa. Appearance, tolerable. Verse. Incorrect.

**Beginning.** ॐ नमः शिवाय ।

अद्वैतरूपिणे चिदात्मने सुखस्वरूपिणे ।
षडेश्विभिश्चादादिभिर्निरूपिताय वै नमः ॥
साङ्कृतिर्मुनिवर्य्योऽसौ भूतले योगसिद्धया ।
सनकञ्च परिभ्रम्य नैमिषारण्यमागतान् ।
सुगन्धिनानाकुसुमैः स्वादुसत्फलसंयुतैः ।
शाखिभिः शोभितं पुण्यं जनकासनमध्यितम् ।
स मुनि विचरंस्तत्र ददर्शाश्च तरोरधः ।
वेदिकायां समासीनं दत्तात्रेयं महामुनिम् ॥ इत्यादि ।

**End.** मद्धारो गोध्यवे शीघ्रं तुष्टायेमेतरे जनाः ।(?)
भवतीति परं गूढां मुक्तिसोपानसंज्ञकम् ।
गुह्याद्गुह्यतरञ्चैतत् मयोरस्येव प्रकाशितम् ।
नित्यं तेन समर्पिताश्च पितरः सर्गेऽपि गीताः पुन-
र्येषां मद्विचारणे क्षणमपि प्राप्नोति धैर्य्यं मनः ।
× × × × × × ×
× × × × × × × ।

**Colophon.** इति गोरक्षसंहितायां मुक्तिसोपानं समाप्तम् ।

**विषयः ।** योगकैवल्योपायादिनिरूपणम् ।

---

**No. 100.** गोविन्दकल्पलता, by गौराचार्य्यः. Substance, country-made paper, 12×5 inches. Folia, 58. Lines, 12 on a page. Extent, 2,349 çlokas. Character, Bengali. Date, ? Place of deposit, Viṣṇupur, *viá* Báñkurá, Paṇḍita Rúparáma Bhaṭṭácáryya. Appearance, tolerable. Verse. Generally correct.

**Beginning** ॐ नमः श्रीकृष्णाय ।

कलयति कलवेणुं मायया मोहयन्त्
स्रवति मधुरविन्दुं कृष्णगोविन्दगीतम् ।
पटुतरवटुनीपैरावृतं गोषु गोपी-
जन इति च समाम्नायवल्लभं तच्च नत्वा ॥ १ ॥
समुदितमिदमेतत् पूजनं श्रीमुरारे
र्विधिवदिति पुरा यन्नारदाद्यैर्मुनीन्द्रैः ।
सकलविभवसाध्यैर्धर्म्मकामार्थमोक्षैः
फलति यदि कदाचिच्चागतो वा कथञ्चित् ॥
जनेषु मर्त्येषु विशुद्धकर्म्मसु
श्रीकृष्णमन्त्रं भवसिन्धुपोतम् ।
नत्वा पुनर्व्वच्मि दयाम्बुधेः श्री-
गुरोः पदं कञ्जजपांशुनिर्म्मलम् ॥
गाणपत्यस्तथा शाक्तः शैवः सौरादिकस्तथा ।
विभिन्नफलदाः प्रोक्ताः शम्भु(?) चासीन बान्धवाः ॥
यतीनां ब्रह्मचारिणां वनस्थानाञ्च योषिताम् ।
सर्व्वेषां गृहमेधिनां विष्णुमन्त्राश्च बान्धवाः ॥
असारे घोरसंसारे सारं कृष्णपदार्चनम् ।
तत्पदं नार्चितं येन पापिना पापकर्म्मणा ॥
तदर्चनं प्रवक्ष्यामि यथा शास्त्रविधानतः ।
गुरुतः शास्त्रतः सम्यक् कुर्य्याद्दीक्षां प्रयत्नतः ॥
आद्यै दीक्षां प्रकुर्व्वीत सर्व्वार्थसिद्धिहेतवे ॥ इत्यादि ।

**End.** ततश्च कृष्णभूतोऽसौ जायते नान्यथा मुने ।
अन्नं दद्यात् सात्वतेभ्यो बहुमानपुरःसरम् ॥
खण्डाद्यभोज्यैश्च ततो वस्त्रालङ्करणादिभिः ।
एतत्ते कथितं ग्रन्थं सर्व्वग्रन्थोत्तमोत्तमम् ॥
अस्य विज्ञानमात्रेण कृष्णात्मैक्यं समश्नुते ।
न प्रकाश्यमिदं ग्रन्थं न देयं यस्य कस्यचित् ॥
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे ।
इह लोके च दारिद्र्यं परत्र पशुतां व्रजेत् ॥

लुब्धकाय न दातव्यं परदाररताय च ।
शठाय परशिष्याय नास्तिकाय विशेषतः ॥
स्त्रियां सक्ताय दुष्टाय तथा कामातुराय च ।
विदूषकाय शाक्ताय न प्रकाश्यमिदं शुभम् ॥
शिवद्वेषरतायापि देवद्वेषरताय च ।
विप्रद्वेषपरायापि निश्चितं न प्रकाशयेत् ॥
कृपणाय खलायापि भ्रष्टाचाराय निश्चितम् ।
न प्रकाश्यमिदं ग्रन्थं प्रकाश्यं वैष्णवाय च ॥
शाक्तस्थाने न पाथेद(?) दुर्जने न प्रकाशयेत् ।
अनाचाराय विप्राय तथा कोपरताय च ॥
न शूद्राय मतिं दद्यान्नोच्छिष्टश्च कदाचन ।
इह लोके च दारिद्र्यं परत्र पशुतां व्रजेत् ॥
... मध्ये कालिन्द्यास्तटसन्निधौ ।
एतद्गुह्यं समाख्यातं वैष्णवानां हिताय च ॥

**Colophon.** इति श्रीसमीराचार्य्यविरचितायां गोविन्दकल्पलतायां त्रयोदशः संग्रहः ॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः** । १ प्रथमसंग्रहे दीक्षादिनिरूपणम् । २ ये मन्त्राधिकार्य्यादिनिरूपणम् । अकडम चक्रादिनिरूपणञ्च । ३ ये मन्त्रचैतन्यादिनिरूपणम् । ४ र्थे मन्त्रसिद्धिलक्षणादिनिरूपणम् । ५ मे कृष्णमन्त्राचारादिनिरूपणम् । ६ ष्ठे आचारगतमासिकपूजादिनिरूपणम् । ७ मे मन्त्र-ऋषि-छन्दः-प्रभृतिनिरूपणम् । ८ मे गोपालमन्त्रग्रहणविध्यादिनिरूपणम् । ९ मे यजनविधि-प्रयोगादिनिरूपणम् । १० मे पुरश्चरणविध्यादिनिरूपणम् । ११ शे मन्त्रप्रभेदादिनिरूपणम् । १२ शे कुण्डलक्षणादिकथनम् । १३ शे योगमाहात्म्यादिकथनञ्च ।

---

**No. 101. गोविन्दलीलामृतम्,** by **रघुनाथदासः**. Substance, country-made paper, 12 × 4 inches. Folia, 35. Lines, 8 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, ? Place of deposit, Kāñṭhálpáḍá, *viâ* Naihátí, Paṇḍita Rámatárana Ṭhákura. Appearance, very old. Verse Generally correct.

**Beginning.** श्रीराधामाधवौ जयेताम् ॥

श्रीगोविन्दं व्रजानन्दं सन्दोहानन्दमन्दिरम् ।
तं वन्दे परमानन्दं श्रीराधासुखनन्दितम् ॥
योऽज्ञानमत्तं भुवनं कृपालुरुल्लाघयन्नप्यकरोत् प्रमत्तं ।

स्वप्रेमसम्पत्सुधयाद्भुते तं श्रीकृष्णचैतन्यमहं प्रपद्ये ॥ इत्यादि ।

End. खण्डितत्वात् शेषो नास्ति । प्रथमसर्गे श्लोकसंख्या ११७ । द्वितीयसर्गे ००७ । तृतीयसर्गे ११० । चतुर्थसर्गे ७८ ।

विषयः । कृष्णस्य कुञ्जनिशान्तकेलिवर्णनम् । तस्यविलासवर्णनम् । भोजनकेलिवर्णनम् ।

---

**No. 102.** गौराङ्गविरुदावली, by किशोरिमोहनगोस्वामी. Substance, country-made paper, 13×5 inches. Folia, 35. Lines, 3 on a page. Extent, 360 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalá, Vṛddhanagar, Paṇḍita Mineçvara Sárbbabhauma. Appearance, tolerable. Verse. Generally correct.

Beginning. श्रीगौरचन्द्राय नमः ।
देवैस्तथा श्रुतिगणैर्महिमा न यस्य
प्रज्ञायते प्रभवता भवतापि ... ।
दुर्वाङ्मलीमसमतिर्मनुजः कथं स्यात्
श्रीगौरचन्द्र भवतः स्तवनेऽस्य शक्तिः ॥ इत्यादि ।

End येषां निदेशवशतो विरुदावलीयम्
गौरप्रभोर्विरचिता रघुनन्दनेन ।
गोवर्धनक्षितिभृदन्तिकवासिनस्ते
गृह्णन्त्विमां कृतकृपाः कृपणे महान्तः ॥

Colophon. इति श्रीकलियुगपावनावतारभगवन्नित्यानन्दकुलजकलानिधि-श्रीहरदु--नन्दनद्वितीयनाम्ना किशोरिमोहनगोस्वामिना कृता गौरविरुदावली ॥

विषयः । श्रीगौराङ्गस्य महिमव्यञ्जकानि विशेषणपदानि ।

---

**No. 103.** गौराङ्गशतनाम, by सार्व्वभौमभट्टाचार्य्यः. Substance, country-made paper, 9×4½ inches. Folia, 2. Lines, 12 on a page. Extent, 48 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalá, Vṛddhanagar, Paṇḍita Minesvara Sárbbabhauma Appearance, tolerable Verse. Generally correct.

Beginning. श्रीगौराङ्गप्रभुर्जयति ।
नमस्कृत्य प्रवक्ष्यामि देवदेवं जगद्गुरुम् ।

नाम्नामष्टोत्तरशतं चैतन्यस्य महात्मनः ।
विश्वम्भरो जितक्रोधः ............ ॥ इत्यादि

End. विश्वम्भराय गौराय चैतन्याय महात्मने ।
शचीपुत्राय मित्राय लक्ष्मीशाय नमोनमः ॥

Colophon. इति श्रीसार्व्वभौमभट्टाचार्य्यविरचितं श्रीचैतन्यदेवस्य शतमष्टोत्तरनामस्तोत्रं(?)
सम्पूर्णम् ॥

विषयः । श्रीगौराङ्गदेवस्याष्टोत्तरशतनाम स्तोत्रम् ।

---

**No. 104.** गौराङ्गस्तोत्रम्, By विराजगोस्वामी. Substance, country-made paper, 16×1½ inches. Folia, 1. Lines, 4 on a page. Extent, 8 çlokas. Character, Bengali. Date, ? Place of deposit, Çāktā, Thānā Kerāniganja, District Dhākā, Pandita Trilocana Tarkālankāra. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
हरिकीर्त्तननर्त्तनकौशिभृतं
हरिनामविलेखितदेहधरम् ।
धृतभाग्यशचीसुतभागवतं
शरणेऽपि हरेर्गलद्भुजगम् ॥
तुलसीदलनिर्म्मितमाल्यधरं
हरिणा कलितो धृतगौरतनुम् ।
सुरसिन्धुतटे धृतबालरसं
प्रकलय्यितभागवतानुभवम् ॥ इत्यादि ।

**End.** य इदञ्च पठेत् प्रणमादरतो
नहि वक्तुमलं सुजनस्य फलम् ।
इह चैव परत्र च मुक्तिपदं
लभते लभते + + मेन समः ॥

**Colophon.** इति श्रीविराजगोस्वामिविनिर्म्मितं श्रीगौराङ्गस्तोत्रं समाप्तम् ।

विषयः । गुणकथनव्याजेन श्रीगौराङ्गमहाप्रभो रूपादिवर्णनात्मकं स्तोत्रमेतत् ।

---

**No. 105.** गौराङ्गाष्टकालिकम्, By नरहरिसरकारः. Substance, country-made paper, 13×3¼ inches. Folia, 2. Lines, 11 on a page. Extent, 49 çlokas. Character, Bengali. Date, ? Place of deposit, Āgartalā, Vṛddhanagara, Paṇḍita Mineçvara Sārvvabhauma. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीगौरविधुर्जयति ।

श्रीगौराङ्गमहाप्रभोश्चरणयोर्या केशशेषादिभिः
सेवा-गम्यतया स्वभक्तविहिता सा तैर्यया लभ्यते ।
तां तन्मानसिकस्मृतिं प्रथयितुं भाव्यां सदा सत्तमैः
स्तौमि प्रात्यहिकं तदीयचरितं श्रीमन्नवद्वीपजम् ॥ इत्यादि ।

**End.** श्रीगौराङ्गविधोः स्वधामनि नवद्वीपेऽष्टकालोद्भवां
भाव्यां भाव्यजनेन गोकुलविधोर्लीलास्मृतेरादिशत् ।
लीलां द्योतयेदत्र दशकं प्रत्यन्वितो यः पठेत् (?)
तं प्रीणाति सदैव यः करुणया तं नौमि ...... ॥

**Colophon.** इति श्रीनरहरिसरकारप्रणीतं श्रीगौराङ्गमहाप्रभोरष्टकालिकं समाप्तम् ।

**विषयः ।** श्रीगौराङ्गस्याष्टकालिकभजनविधानकथनम् ॥

---

**No. 106.** गौरीकञ्चुलिका । Substance, country-made paper, 12×5 inches. Folia, 17. Lines, 9 on a page. Extent, 187 çlokas. Character, Bengali. Date, ? Place of deposit, Çerpur, Mayamansiṁha, Bābu Haracandra Caudhurī. Appearance, tolerable. Verse. Incorrect.

**Beginning.** ॐ नमः काल्यै । देव्युवाच ।

ज्ञातं भवत्प्रसादेन यथा कालस्य वञ्चनम् ।
मन्त्रस्य सारसम्भूतमिदानीमौषधं वद ॥
येन सिध्यन्ति देहानि सन्ति तानि हितानि च ।
ज्वररोगहरं कोपं तद्वद् त्रिपुरान्तक ॥
सन्त्यौषधान्यनेकानि मनुष्याणां हिताय च ।
पूर्व्वन्तु यत् त्वया प्रोक्तं प्रत्यक्षं कथयस्व मे ॥

ईश्वर उवाच ।

तिथिनक्षत्रवारेण ऋतुभेदैः परिग्रहः ।
खननोत्पाटनं मन्त्रैः कारयेद्धि चिकित्सकः ॥ इत्यादि ।

End. कालस्य रक्षणोपायं त्वयि सत्यं वदाम्यहम् ।
विना मृत्युञ्जयं काशीनाथं मर्म्मार्थबोधकम् ।
कालस्य निकटं ज्ञात्वा भज काशीं समाहितः ॥

Colophon. इति गोपालसंहितायां हरगौरीसम्वादे गौरीकवचलिखिता समाप्ता ॥ • ॥

विषयः । ईश्वरदेवीसम्वादेन औषधादिनिरूपणमौषधकरणकालादिकथनञ्च ॥

---

**No. 107.** ग्रहयागप्रयोगः (कौमुदीसम्मतः) । Substance, country-made paper, 12×3 inches. Folia, 13. Lines, 6 on a page. Extent, 175 çlokas. Charater, Bengali. Date, ? Place of deposit, Varsikurā, Mayamansiñha, Bābu Ānandamohana Cakravartī. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमो गणेशाय । अथ कौमुदीसम्मतग्रहयागप्रयोगः । प्रातः कृतनित्य-क्रियो यजमानो ब्राह्मणत्रयं वाचयेत् । पुण्याहं स्वस्ति ऋद्धिरस्त्विति । इत्यादि ।

End. धेनुः शङ्खस्तथानड्वान् हेमवासो हयास्तथा ।
कृष्णा गौ र्वायसश्छागो ग्रहाणां दक्षिणा क्रमात् ॥

Colophon. इति कौमुदीसम्मतग्रहयागप्रयोगः समाप्तः ॥

विषयः । विरोधिग्रहाणां शान्त्यै करणीयस्य यागस्य प्रयोगादिनिरूपणम् ।

---

**No. 108.** ग्रहयागप्रयोगतत्त्वम् । Substance, country-made paper, 16×3 inches. Folia, 19. Lines, 7 on a page. Extent, 532 çlokas. Character, Bengali. Date, ? Place of deposit, Teliveni, Post Gadbetā, District Medinípura, Appearance, tolerable. Prose. Incorrect.

Beginning. ॐ नमः श्रीसूर्य्याय ॥ अथ ग्रहयागप्रयोगः ।
ध्यात्वा गुरुपदद्वन्द्वं नत्वा च शङ्करात्मजम् ।
ग्रहयागप्रयोगतत्त्वं वक्ति श्रीरघुनन्दनः ॥ (?)
तत्रादौ रविसोमबुधजीवशुक्रेषु वारेषु शोभनाः । चित्रानुराधामृगशिरो-रेवतीपुष्याश्विनीहस्तारोहिण्युत्तरात्रयेषु चन्द्रतारानुकूलेषु शुभलग्नेषु कार्य्यः ।
तत्र बालग्रहभूतनराधिपग्रहसतरशत्रुदुःस्वप्नरोगाभिभवद्भूतदुःखपापग्रह-पीड़ादिनिमित्तकं शान्तिकं मलमासादावपि कर्त्तव्यमिति ।

पञ्चदोषैः प्रणीयन्त अन्यु व अपेचते ।
अकालेऽपि च कर्त्तव्यं नात्र कालविचारणम् ॥ इत्यादि ।

End. ॐ मन्त्रतन्त्रतश्छिद्रं देशकालाच वस्तुतः । (?)
सर्व्वं करोतु निश्छिद्रं नामसङ्कीर्त्तनं हरेः ॥
अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु च ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥
ॐ यदक्षरं परिभ्रष्टं मात्राहीनञ्च यद्भवेत् ।
पूर्णं भवतु तत्सर्व्वं श्रीहरेर्नामकीर्त्तनात् ॥
ॐ मया कृतं कर्म्म कीदृशं जातं इति पृच्छेत् । ॐ सर्व्वं साङ्गं जातं सर्व्वं वेदोक्तमासीत् प्रत्युत्तरमिति ॥

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं पञ्चयागप्रयोगतत्त्वं समाप्तम् ॥

विषयः । विरोधिप्रचाणां शान्त्यै करणीयस्य पञ्चयागस्य विधिः प्रयोगादिश्च ।

---

No. 109. घटकर्परकाव्यटीका । Substance, country-made paper, 18 x 4½ inches. Folia, 3. Lines, 7 on a page. Extent, 102 çlokas. Character, Bengali. Date, ? Place of deposit, Kānihāri, Mayamansiñha, Paṇḍita Mukundacandra Smṛtiratna. Appearance, old. Prose. Correct.

Beginning. ॐ नमः शिवाय । निचितमित्यादि । नीरदैर्मेघैः समाकाशमुपेत्य प्राप्य निचितम् । आच्छादितमित्यर्थः । इत्यादि ।

End. घटकर्परेण छिद्रघटेन तस्मै उदकं वहेयं भावानुरक्तेति आदौ तृतीयातत्पुरुषे पश्चात् कर्म्मधारयः ॥

Colophon. इति घटकर्परस्य टिप्पनी समाप्ता ।

विषयः । वर्षावर्णनात्मकस्य घटकर्परकविप्रणीतस्य घटकर्परकाव्याख्यस्य क्षुद्रकाव्यस्य व्याख्यानम् ।

---

No. 110. चन्द्रनधेनुदानतत्त्वम्, By वाचस्पतिमिश्रः. Substance, country-made paper, 18 x 3½ inches. Folia, 8. Lines, 6 on a page. Extent, 186 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭihāli, Mayamansiñha, Paṇḍita Navakiçora Tarkacúḍāmaṇi. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमो गणेशाय ।
नत्वा शिवं चन्दनचर्च्चिताया
धेनोः प्रदाने सविधिं प्रयोगम् ।
रत्नाकराद्यैर्लिखितं विलोक्य
तनोति वाचस्पतिरग्रबुद्धिः ॥ इत्यादि ।

End. जीवत्पितृकवृषोत्सर्गनिषेधे पतिपुत्रवत्याः वृषगुणसंहारः । सोऽपि तस्याः पुत्रानधिकारमात्रप्रत्युक्तवृषोत्सर्गाभावः ॥

Colophon. इति वाचस्पतिमिश्रविरचितं चन्दनधेनुदानतत्वं समाप्तम् ॥

विषयः । पतिपुत्रवत्या भार्य्या मृतायाः स्वर्गार्थं वृषोत्सर्गनिषेधात् तदनुकल्पीभूतचन्दन-धेनुदानविधिः तत्प्रयोगादिश्च ।

---

**No. 111.** चन्दनधेनूत्सर्गपद्धतिः, By रत्ननाथभट्टाचार्य्यः. Substance, palm-leaf, $16 \times 1\frac{1}{2}$ inches. Folia, 37. Lines, 3 on a page. Extent, 472 çlokas. Character, Bengali. Date, Sk. 1687. Place of deposit, Viṣṇupura, Kādākuli, District Vāñkurā, Paṇḍita Raghurāma Tarkaratna. Appearance, old. Generally correct.

Beginning. ॐ कृष्णाय नमः ।
प्रणम्य पीताम्बरपादपङ्कजं
पिनाकि-पद्मोद्भवसेवितं सदा ।
वितन्यते चन्दनधेनुपद्धतिः
श्रीरत्ननाथेन मुदे सतामियम् ॥
देवलः ।
पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः ।
चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते ।
अत्र अग्रत इति वचनात् । प्रोषितभर्त्तृकाया वृषोत्सर्गं कुर्य्यादिति केचित् तन्मन्दं । यदाह जातूकर्णः ।
चन्दनेनाङ्कितं कृत्वा दद्यात् धेनुं द्विजातये ।
वृषं नैवोत्सृजेत्तस्या यावद्भर्त्ता स जीवति ॥ इत्यादि ।

End. उद्धरति वेदार्थान् यज्ञविद्याः स्मृतीरपि ।
श्रुतिस्मृतिसमापन्नमाचार्य्यं तं प्रचक्षते ॥

इति परिमितवचनात्यज्ञादिकर्तृगायत्र्यादिवेदार्थाध्यापकस्य चाचार्यत्वम् ।
शूद्राणां तद्वचनात्तान्त्रिकमन्त्रदातुरेव । तथाच नरसिंहपुराणम् ।
श्रुतिस्मृतिपुराणेभ्यो हीनस्य शूद्रजन्मनः ।
गर्भाधानादिसंस्कारैर्युतस्य च महामुने ॥
इयमेव परा शुद्धिर्दीक्षा या तान्त्रिकी भवेत् ।
यस्माच्च लभते मन्त्रं शूद्रः सेवेत तं सदा ॥
प्राणैरर्थैर्धिया वाचा स एवाचार्य्य उच्यते ।
न मर्त्त्यबुद्ध्या जानीयाद्विष्णुरूपो गुरुर्मतः ॥

**Colophon.** इति नवद्वीपीयरत्ननाथभट्टाचार्य्यकृता चन्दनधेनूत्सर्गपद्धतिः समाप्ता ॥
शकाब्दाः १६८१

**विषयः** । पतिपुत्रवत्या नार्य्या मृतायाः स्वर्गार्थं वृषोत्सर्गनिषेधात् तदनुकल्पीभूतस्य चन्दनधेनूत्सर्गस्य विधिः प्रयोगादिश्च ॥

---

**No. 112.** चाटुपुष्पाञ्जलिः । Substance, country-made paper, 9×6 inches. Folia, 4. Lines, 5 on a page. Extent, 34 çlokas. Character, Bengali. Date, ? Place of deposit, Tripurā, Mahārāja's Library. Appearnce, tolerable. Verse. Generally correct.

**Beginning.** श्रीराधिकायै नमः ।
नवगोरोचनागौरीं प्रवरेन्दीवराम्बराम् ।
मणिस्तवकविद्योतिवेणी ............ ॥ इत्यादि ।

**End.** करुणां मुहुरर्थये परां
तव वृन्दावनचक्रवर्त्तिनि !
अपि केशिरिपोर्य्यया भवेत्
स चाटुप्रार्थनभाजनं जनः (?) ॥
इमं वृन्दावनेश्वर्य्या जनो यः पठति स्तवम् ।
चाटुपुष्पाञ्जलिं नाम स स्यादस्याः कृपास्पदः ॥

**Colophon.** इति चाटुपुष्पाञ्जलिः समाप्ता ।

**विषयः** । वृन्दावनेश्वर्य्याः स्तवात्मकानि कतिपयानि पद्यानि ।

---

**No. 113.** **चिकित्सारत्नम्,** By **जगन्नाथदत्तः.** Substance, country made paper, 16×3 inches. Folia, 101. Lines, 6 on a page. Extent, 2,110 çlokas. Character, Bengali. Date, SK. 1715. Place of deposit, Dhākā, Bābu Bhagavāncandra Dāsa Kavirāja. Appearance, old. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

पञ्चाननाय फणिराजविभूषणाय
स्वर्गापवर्गफलदाय फलात्मकाय ।
गौरीप्रियाय भुवनत्रयवन्दिताय
तेजोमयाय च नमः परमेश्वराय ॥
प्रणम्य गुरुपादाब्जं दृष्ट्वा बहुभिषङ्मतम् ।
श्रीजगन्नाथदत्तेन चिकित्सारत्नमुच्यते ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत् ॥
आसुरी मानुषी दैवी चिकित्सा त्रिविधा स्मृता ।
रसप्रधाना दैवी स्याच्छेदभेदादिकासुरी ॥
षड्रसा मानुषी प्रोक्ता होमपूजादिसंस्कृता ।
कलौ चास्य + + लोके मानुषी तेन पूजिता ॥
वटिका गुड़िका लेहचूर्णारिष्टाश्च पिण्डकाः ।
घृतं तैलं गुड़ो लेपः स्वेदाञ्जनकषायकाः ॥
पुटपाकस्तथा ग्रास्याभरणो धूमधारणे ।
बहून्यानि यथायोग्यान्यनेकानि यथा तथा ॥ इत्यादि ।

**End** निद्रास्तम्भनमेतद्धि मूलदेवेन भाषितम् ।
माक्षिकं नवनीतञ्च कुष्ठञ्च मधुयष्टिका ॥
सौभाग्यं भगलेपेन दासवच्च भवेत् पतिः ।
निम्बकाष्ठस्य धूपेन धूपयित्वा भगं स्त्रियः ॥
सुभगाः स्युः पतिस्तासां दासवच्च भवेद्ध्रुवम् ।

**Colophon.** इति स्तम्भनाधिकारः । इति चिकित्सारत्नं समाप्तम् । शकाब्दाः १७१५ ॥

**विषयः ।** ज्वरादिरोगाणां चिकित्साकथनम् । तत्र दैवी-मानुषी-आसुरी चेति चिकित्सा त्रिविधेति निरूपणम् । अथ सामान्यज्वरचिकित्सा । तत्र षड्ङ्गजलविधानम् । मान-

रादिपाचनकथनम्। गुडूच्यादिपाचनकथनम्। अथ वातज्वरे हिङ्गुलेश्वररसकथनम्। अथ पित्तज्वरे यवपटोलविधानम्। धान्यशर्कराविधानम्। घनचन्दनादिविधानम्। दाहप्रतिक्रियाविधानम्। ज्वरकेशरिरसकथनम्। शीतभञ्जीरसकथनम्। अथ कफज्वरे कटुफलादिविधानम्। पर्णखण्डेश्वरविधानम् प्रचण्डेश्वररसकथनम्। कफकेतुरसकथनम्। अथ वातपित्तज्वरे नवाङ्गपाचनविधानम्। पञ्चभद्रविधानम्। नवज्वरे अङ्कुशविधानम्। चण्डेश्वररसविधानम्। अथ वातकफज्वरे वालुकास्वेदविधानम्। पञ्चकोलविधानम्। शीतारिरसकथनम् रसचन्द्रिकाकथनम्। सौभाग्यवटिकाकथनम्। अथ पित्तश्लेष्मज्वरे कण्टकार्य्यादिविधानम्। धान्यपटोलविधानम्। अमृताष्टकविधानम्। चन्द्रशेखररसकथनम्। अथ सन्निपातज्वरे लङ्घनस्वेदनज्वरनिष्ठीवनादिविधानम्। अष्टाङ्गावलेहिकविधानम्। बृहन्नवाङ्गविधानम्। मृत्युञ्जयरसविधानम्। बृहत्पञ्चमूल्यादिविधानम्। दशमूली-चतुर्द्दशमूल्यादिविधानम्। लक्ष्मीविलासरसकथनम्। वेतालरसकथनम्। भैरवेश्वररसकथनम्। पञ्चवक्त्ररसकथनम्। अथ कर्णशोथे प्रलेपविधानम्। अथ जीर्णज्वरे भार्ग्यादिपाचनविधानम्। मेघनादरसकथनम्। सर्व्वज्वरलौहकथनम्। अथ विषमज्वरे मुस्तकादिपाचनविधानम्। दार्व्यादिपाचनविधानम्। भेदिज्वराङ्कुशकथनम्। ज्वराशनिरसकथनम्। त्रैलोक्यज्वरजिद्रसकथनम्। अर्द्धनारीश्वररसकथनम्। महाज्वराङ्कुशरसकथनम्। बृहत्सर्व्वज्वरलौहकथनम्। अथ कम्पज्वरे शीतमातङ्गसिंहरसकथनम्। विजयायोगकथनम्। अथ धातुस्थज्वरे सुदर्शनचूर्णकथनम्। बृहत्सर्व्वज्वरहरलौहकथनम्। अङ्गारकतैलकथनम्। लाक्षादितैलकथनम्। बृहल्लाक्षादितैलकथनम्। अष्टाङ्गधूपकथनम्। अथ दाहज्वरे दूर्व्वाद्यतैलविधानम्। अथ ज्वरातिसारे ह्रीवेरादिपाचनविधानम्। उशीरपञ्चमूल्यादिपाचनविधानम्। आनन्दभैरवरसकथनम्। कनकसुन्दररसकथनम्। प्राणेश्वररसकथनम्। अथ आमातिसारचिकित्सा। तत्र धान्यपञ्चक धान्यचतुष्कादिविधिः। अथ पक्वातिसारे कल्कटादिविधानम्। मोचादिचूर्ण-मुस्तादिचूर्णस्वल्पपञ्चमूल्यादिविधानम्। कुटजावलेहविधानम्। शिवादिचूर्णकथनम्। गङ्गाधरचूर्णकथनम्। लवङ्गचतुःसमविधानम्। लवङ्गप्रयोगविधानम्। कुटजाष्टकविधानम्। पाठादिचूर्णविधानम्। रसाञ्जनादिचूर्णविधानम्। अथ सर्व्वातिसारे बृहद्गङ्गाधरयोगादिकथनम्। अथ प्रवाहिकायां जातिफलाद्यविधानम्। अथ अभयानरसिंहरसकथनम्।

अथ ग्रहणीरोगचिकित्सा। तत्र कुटजावलेहादिविधानम्। लवङ्गवटिकाविधानम्। गङ्गाधरचूर्णविधानम्। जीरकाद्यचूर्णविधानम्। जातीफलाद्यचूर्णविधानम्। महागन्धकविधानम्। रूपवज्रभरसविधानम्। ग्रहणीगजेन्द्रवटिकाविधानम्। पानीयभक्तवटिकाविधानम्। रसपर्प्पटीविधानम्। लौहपर्प्पटीविधानम्। स्वर्णपर्प्पटीविधानम्। अथ संग्रहणग्रहण्यां चाङ्गेरीघृतविधानम्। श्रीलवङ्गादिमोदकविधानम्। जीरकाद्यमोदकविधानम्। ग्रहणीमिहिरतैलविधानम्।

अथ अर्शोरोगचिकित्सा। तत्र शूरणमोदकविधानम्। प्राणदागुड़िकाविधानम्। कुटजावलेहविधानम्। अर्शोमण्डूरविधानम्। यमानिकामोदकविधानम्। अथ अजीर्णरोगचिकित्सा। तत्र हिंग्वष्टकविधानम्। रामबाणरसकथनम्। वाड़वानलरसकथनम्। बृहदग्निकुमाररसकथनम्। महाशङ्खवटिकाकथनम्। सुकुमारमोदककथनम्। हरीतकीखण्डकथनम्। अथ क्रिमिरोगचिकित्सा। तत्र क्रिमिमुद्गररसकथनम्। कीटवज्ररसकथनम्। क्रिमिघातिनीवटिकाकथनम्। विड़ङ्गादिघृतकथनम्। अथ पाण्डुरोगचिकित्सा। तत्र नारायणलौहविधानम्। पुनर्नवामण्डूरविधानम्। पुनर्नवाद्यतैलविधानम्। अथ रक्तपित्तरोगचिकित्सा। तत्र एलादिगुड़िकाकथनम्। कुष्माण्डखण्डकथनम्। अथ यक्ष्मरोगचिकित्सा। तत्र त्रयोदशाङ्गविधानम्। रास्नादशमूलविधानम्। वासावलेहकथनम्। तालिशादिमोदकविधानम्। यक्ष्मान्तमोदककथनम्। शृङ्गाराभ्रविधानम्। महाकल्पतरुरसकथनम्। मृगाङ्करसकथनम्। बृहच्चन्दनाद्यतैलकथनम्। अथ कासरोगचिकित्सा। तत्र समशर्कराचूर्णकथनम्। कण्टकार्य्यवलेहकथनम्। काससंहारभैरवकथनम्। चन्द्रामृतरसकथनम्। राजमृगाङ्करसकथनम्। अथ हिक्काचिकित्सा। तत्र नस्यविधानम्। पिप्पल्यादिलौहकथनम्। अथ हिक्काश्वासे पुरन्दररसविधानम्। श्वासकुठाररसकथनम्। अथ स्वरभेदचिकित्सा। तत्र कल्याणावलेहकथनम्। सारस्वतघृतकथनम्। अथ अरोचकचिकित्सा। तत्र अमृतसुन्दररसकथनम्। अथ छर्दिचिकित्सा। तत्र एलादिचूर्णविधानम्। अथ तृष्णाचिकित्सा। अथ मूर्च्छाचिकित्सा। अथ मदात्ययचिकित्सा। अथ उन्मादचिकित्सा। तत्र कल्याणघृतविधानम्। चौरकल्याणघृतकथनम्। शिवाघृतकथनम्। शिवातैलविधानम्। अथ अपस्मारचिकित्सा। तत्र गन्धकादिलौहविधानम्। महाचैतसघृतकथनम्। पाषाणवज्ररसकथनम्। अथ वातरोगचिकित्सा। तत्र रसोनपिण्डविधानम्। त्रयोदशाङ्गगुग्गुलुकथनम्। विष्णुतैलकथनम्। मध्यमनारायणतैलकथनम्। कुब्जप्रसारणीतैलकथनम्। सिद्धार्थकतैलकथनम्। बृहच्छतपुष्पादितैलकथनम्। हिमसागरतैलकथनम्। वातारिगुग्गुलुकथनम्। वातकुलान्तकतैलकथनम्। बृहद्वातारितैलकथनम्। हंसमागघृतविधानम्। हंसादिघृतकथनम्। वातगजाङ्कुशरसकथनम्। महाराजेश्वररसकथनम्। अथ वातरक्तचिकित्सा। तत्र विविधगुग्गुलुविधानम्। गुड़ूच्यादिलौहकथनम्। रसमाणिक्यविधानम्। द्वादशाङ्गवकथनम्। बृहद्गुडूचीतैलकथनम्। बृहद्गुडूच्यादितैलकथनम्। अथ ऊरुस्तम्भचिकित्सा। तत्र त्रयोदशाङ्गगुग्गुलुविधानम्। अथ वातरोगचिकित्सा। तत्र रास्नापाकविधानम्। रास्नाष्टकविधानम्। योगराजगुग्गुलुकथनम्। बृहद्रसोनपिण्डकथनम् व्याधिशार्दूलगुग्गुलुकथनम्। आमवातारिगुग्गुलुकथनम्। बृहत्सैन्धवाद्यतैलकथनम्। अथ शूलरोगचिकित्सा। तत्र परिणामशूले वैश्वानरलौहकथनम्। पित्ताधिक्ये नारिकेलखण्डविधानम्। गुवाकखण्डविधानम्। धात्रीलौहविधानम्। शूलवज्रिणीवटिकाकथनम्। शूलगजेन्द्रतैलकथनम्। अथ उदावर्त्तरोगचिकित्सा। तत्र नाराचयोगकथनम्। अथ गुल्मरोग-

चिकित्सा । तत्र अभयावटिकाविधानम् । नाराचरसकथनम् । गुल्मकालानलरसकथनम् । अथ हृद्रोगचिकित्सा । तत्र अर्ज्जुनघृतकथनम् । हृदयार्णवरसकथनम् । अथ उरोग्रह-चिकित्सा । अथ मूत्रकृच्छ्रचिकित्सा । तत्र कुशावलेहकथनम् । कर्पूरमोदककथनम् । अथ मूत्राघातचिकित्सा । तत्र गोक्षुरघृतकथनम् । अथ मूत्रातिसारचिकित्सा । तत्र निदानादि-कथनम् । धात्रीघृतकथनम् । तारकेश्वररसकथनम् । अथ अश्मरीचिकित्सा । तत्र कुलत्थाद्य-घृतविधानम् । अथ मेहरोगचिकित्सा । तत्र न्यग्रोधादिपञ्चकविधानम् । मेहमुद्गरवटिका-कथनम् । दाडिमाद्यघृतविधानम् । प्रमेहगजसिंहघृतकथनम् । अथ स्थौल्यदौर्गन्ध्यादि-चिकित्सा । तत्र विडङ्गादिलौहकथनम् । त्र्यूषणाद्यलौहकथनम् । अथ अत्यग्निक्षोधचिकित्सा । अथ कार्श्यचिकित्सा । तत्र निदानकथनम् । अश्वगन्धाघृतकथनम् । अथ उदररोगचिकित्सा । तत्र पुनर्नवाष्टकविधानम् । उदरारिरसकथनम् । सामुद्राद्यचूर्णकथनम् । अथ शोथोदर-चिकित्सा । तत्र मानमण्डादिविधानम् । इच्छाभेदिरसकथनम् । अग्निमुखचूर्णकथनम् । बिन्दु-घृतकथनम् । अथ प्लीहरोगचिकित्सा । तत्र मणिगुडिकादिविधानम् । अभयालवणविधानम् । बृहद्गुडपिप्पलीकथनम् । ताम्रकल्परसकथनम् । पञ्चामृतताम्रकथनम् । प्लीहवज्रिणीवटिका-कथनम् । लोहमृत्युञ्जयकथनम् । प्लीहगजेन्द्ररसकथनम् । अथ शोथचिकित्सा । तत्र सिंहास्यादिपाचनविधानम् । पुनर्नवाष्टककथनम् । शोथशार्दूलरसकथनम् । अग्निमुखमण्डूर-कथनम् । दुग्धवटिकाकथनम् । तत्र मण्डूरकथनम् । बृहच्छुष्कमूलकादितैलविधानम् । अथ वृद्धिरोगचिकित्सा । तत्र वृद्धिहरयोगकथनम् । नित्यानन्दरसकथनम् । अथ गलगण्डादि-चिकित्सा । अथ श्लीपदचिकित्सा । तत्र प्राणवल्लभरसकथनम् । अथ विद्रधिचिकित्सा । अथ व्रणशोथचिकित्सा । तत्र विडङ्गादिगुग्गुलुकथनम् । अथ व्रणचिकित्सा । तत्र सप्तदशाङ्गपाच-नादिकथनम् । व्रणराक्षसतैलकथनम् । अथ दग्धव्रणचिकित्सा । अथ भग्नचिकित्सा । अथ नाडीव्रणचिकित्सा । अथ भगन्दरचिकित्सा । तत्र सप्तविंशतिगुग्गुलुकथनम् । अथ उपदंश-चिकित्सा । तत्र श्रीमन्मथरसकथनम् । सामान्यप्रयोगकथनम् । अथ शूकदोषचिकित्सा । अथ कुष्ठरोगचिकित्सा । तत्र पञ्चनिम्बविधानम् । पञ्चतिक्तघृतकथनम् । उदयभास्कररसकथनम् । महातालेश्वररसकथनम् । अमृताङ्कुरलेहकथनम् । बृहन्मरिच्यादितैलकथनम् । महारुद्रतैल-विधानम् । कन्दर्पप्रसारतैलकथनम् । अथ शीतपित्तचिकित्सा । अम्लपित्तचिकित्सा । तत्र सितामण्डूरादिविधानम् । नारिकेलामृतविधानम् । अथ विसर्पचिकित्सा । तत्र अमृतादि-पाचनविधानम् । अथ विस्फोटकचिकित्सा । अथ स्नायुरोगचिकित्सा । अथ मसूर्यादि-चिकित्सा । तत्र पापान्तकरसकथनम् । अथ क्षुद्ररोगचिकित्सा । तत्र कुष्ठादितैलविधानम् । अथ गुदभ्रंशचिकित्सा । तत्र भृङ्गराजादितैलविधानम् । अथ मुखरोगचिकित्सा । तत्र मालत्याद्यचूर्णविधानम् । पथ्यादिचूर्णकथनम् । खदिरवटिकाकथनम् । अथ कर्णरोगचिकित्सा । तत्र शम्बूकतैलकथनम् । दशमूलतैलकथनम् । अथ नासारोगचिकित्सा । तत्र सामान्य-

योगकथनम् । गृहधूमाद्यतैलकथनम् । अथ नेत्ररोगचिकित्सा । तत्र कुमारीवर्त्तिकाकथनम् । चन्द्रोदयवर्त्तिकाकथनम् । नयनामृतविधानम् । अथ राज्यन्मचिकित्सा । अथ शिरोरोगचिकित्सा । तत्र गगनसुन्दररसकथनम् । षड्विन्दुतैलकथनम् । महादशमूलादितैलकथनम् । महाफलकतैलादिकथनम् । बृहद्भूराद्यतैलकथनम् । महावङ्गतैलकथनम् । अथ प्रदररोगचिकित्सा । तत्र अशोकघृतकथनम् । प्रदरान्तकरसकथनम् । अथ सोमरोगचिकित्सा । अथ योनिव्यापकचिकित्सा । तत्र विविधतैलविधानम् । अथ निर्लोमकरणविधिः । तत्र कर्पूरादितैलकथनम् । अथ ऋतुकारणकथनम् । ऋतुशूलचिकित्सा । अथ बन्ध्याचिकित्सा । तत्र फलघृतकथनम् । अथ गर्भस्रावचिकित्सा । तत्र सप्तचरादियोगकथनम् । गर्भविलासरसकथनम् । गर्भचिन्तामणिरसकथनम् । अथ प्रसवविधानकथनम् । अथ मक्कल्लशूलचिकित्सा । अथ सूतिकाचिकित्सा । तत्र सूतिकादशमूलविधानम् । सप्तचरादिविधानम् । सूतिकारसविधानम् । सौभाग्यशुण्ठीकथनम् । अथ स्तनरोगचिकित्सा । तत्र वज्रकाञ्जिकविधानम् । अथ बालरोगचिकित्सा । तत्र बालचातुर्भद्रिकाविधानम् । धातक्यादियोगकथनम् । रजन्यादिचूर्णकथनम् । बालचतुःसमविधानम् । शिशुपञ्चककथनम् । अष्टमङ्गलघृतकथनम् । अथ शय्यामूत्ररोगचिकित्सा । अथ विषचिकित्सा । तत्र विषवज्रपातरसकथनम् । कुक्कुरविषशान्तिकथनम्। अथ रसायनविधिः । तत्र चतुर्मुखरसकथनम् । वसन्ततिलकरसकथनम् । रससिन्दूरकथनम् । श्रीकामदेवरसकथनम् । पूर्णचन्द्ररसकथनम् । अथ वाजीकरणविधिः । तत्र श्रीमन्मथरसकथनम् । पूर्णचन्द्ररसकथनम् । श्रीमदेश्वररसकथनम् । रतिवल्लभमोदककथनम् । कामदीपकविधिः । अथ ध्वजभङ्गचिकित्सा । तत्र मेघारिरसकथनम् । अथ स्तम्भनादिविधिश्च । इति शम् ।

---

No. 114. चिकित्सासारदीपिका, By हरानन्ददासकविराजः. Substance, country-made paper, $14 \times 2\frac{1}{3}$ inches. Folia, 271. Lines, 7 on a page. Extent, 6,925 çlokas. Character. Bengali. Date, Sk. 1705. Place of deposit, Dhākā, Bhagavāncandra Kavirāja. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमः शिवाय ।

जयत्यधरपल्लवामृतरसेन सम्पूरयन्
जगज्जनमनोहरस्वनितचारुवंशं मुहुः ।
अभीष्टफलदायकः शरणदः शरण्यैषिणां
हरिः कनकसद्गुणोत्तमकदम्बमूलस्थितिः ॥
श्रीहरानन्ददासेन कविचन्द्रेण धीमता ।

क्रियते बालबोधाय चिकित्सासारदीपिका ॥

अथ शास्त्रावतारः ।

ब्रह्मास्येभ्यः पञ्चसंख्यागतेभ्यो
वेदा जाता ऋग्यजुःसामभेदाः ।
आयुर्वेदोऽथर्ववेदश्च तस्मिन्
आस्तां तथौ लौकवादस्य भक्तिः ॥
आस्ते वेदः पञ्चमो वैद्यकाख्यो
येना कश्चित् तस्य नास्ते सवेशात् ।
तस्माज्जाताध्वैत तस्मात् पुराणात्
तस्माज्ज्ञाता वस्तुमर्हासि शास्त्रम् ॥
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ॥
क्वचिदर्थः क्वचिद्धर्म्मः क्वचिन्मित्रं क्वचिद्यशः ।
कर्म्माभ्यासः क्वचिच्चापि चिकित्सा नास्ति निष्फला ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
यावत् कण्ठगताः प्राणा यावन्नास्ति निरिन्द्रियम् ।
तावच्चिकित्सा कर्त्तव्या कालस्य कुटिला गतिः ॥ इत्यादि ।

**End.** काकोली-वाला-चन्दन-जातिफल-लवङ्ग दारुचिनि-एलाचि-तेजपत्र-नागे-श्वर-पिप्पली, एषां प्रति २ पल मृगमदकस्तूरी माषा ४ एकीकृत्य वर्त्तिका-मध्ये स्थापयेत् । ततो जातरसं पाययेत् । दशमूलारिष्टिः ॥

**Colophon.** इति श्रीरामचन्द्रदासकविचन्द्रविरचितायां चिकित्सासारदीपिकायामासव-धानं(?) समाप्तम् ॥ समाप्तोऽयं ग्रन्थः ।
संक्षेपान्मूलशास्त्रस्य लिखिता ग्रन्थगौरवात् ।
श्रीजगन्नाथदत्तेन किञ्चिद्विस्तारतः क्रमम् ॥
यद्यपि कविचन्द्रेण रचिता सारदीपिका ।
विस्तारेण मया प्रोक्तश्चिकित्सासागरः शुभः ॥

इति शकाब्दाः १७०५ ।

**विषयः ।** अथ प्रथममायुर्वेदागमप्रशंसा, ततः शास्त्रिकर्म्मादिकथनम् । अथ शारीराधि-कारः । तत्र मूत्रादिपरीक्षाविधिः । नासिकापरीक्षाकथनम् । नाडीपरीक्षाकथनम् । अथ

परिभाषाकथनम् । दाहकर्मनिरूपणम् । लेपपानलेहनादिविधिः । वस्तिकर्मकथनादिकम् । नस्यधूमपानादिकरणविधिः । गण्डूषविधिः । अञ्जनविधिः । देशनिरूपणम् । द्रव्यगुणकथनम् । तत्र रसादिनिरूपणम् । धान्यादिवर्गनिरूपणम् । फलशाकमूलादिनिरूपणम् । मद्यमांसादिनिरूपणम् । पानीयक्षीरदधितक्रादिगुणकथनम् । औषधादिगुणकथनम् । व्यायामादिगुणकथनम् । स्नानादिगुणकथनम् । औषधकरणादिदिननिरूपणम् । अनुपानादिविधिः । तैलचूर्णादिविधिः । गन्धमात्रादिकथनम् । रसायनविधिः । तत्र यन्त्रनिरूपणम् । रसादिशुद्धिकथनम् । षड्गुणगन्धकनिरूपणम् । रसकर्पूरादिविधिः । पीतस्वर्णभस्मरजतादिनिरूपणम् । रससिन्दूरादिविधिः । महाद्रावकादिविधिः । स्वर्णरौप्यताम्रादिधातूनां मारणशोधनादिविधिः । मनःशिलाहरितालादिशुद्धिकथनम् । मत्स्यादिपित्तशुद्धिकथनम् । अथ विषादिशोधनप्रकारः ।

अथ चिकित्साप्रकरणम् । तत्र ज्वरस्य पूर्वरूपादिकथनम् । पथ्यापथ्यकथनम् । सामान्यज्वरे नागरादिपाचनविधिः । एवं क्षुद्रादिपाचनविधिः । गुडूच्यादिपाचनविधिश्च । अथ वातज्वरनिदानादिकथनम् । तत्र बृहत्पञ्चमूल्यादिपाचनविधिः । शालपर्ण्यादिपाचनविधिः । त्रिगुणेश्वररसादिकथनञ्च । अथ पित्तज्वरनिदानादिकथनम् । तत्र कटुफलादिपाचनविधिः । धान्यशर्करादिविधिः । चन्दनादिविधिः । लेपनविधिः । ज्वरकेशरिरसविधिः । शीतभञ्जीरसविधिः । ज्वरभैरवरसविधिश्च । अथ कफज्वरनिदानादिकथनम् । तत्र अवलेहादिविधिः । कुतामनरसकथनम् । पर्णखण्डेश्वररसकथनम् । प्रचण्डेश्वररसकथनम् । पञ्चाननरसकथनम् । कफकेतुरसकथनम् । महाकफकेतुरसकथनम् । श्लेष्मकालानलरसकथनञ्च । अथ वातपित्तज्वरनिदानादिकथनम् । तत्र नवाङ्गपाचनादिकथनम् । पञ्चभद्रपाचनकथनम् । त्रिपुरभैरवरसकथनम् । जयावटिकाकथनम् । ज्वरधूमकेतुरसकथनम् । रत्नगिरिरसकथनम् । नवज्वराङ्कुशरसकथनम् । चण्डेश्वररसकथनञ्च । अथ वातश्लेष्मज्वरनिदानादिकथनम् । तत्र पञ्चकोलादिपाचनादिविधिः । रसचन्द्रिकारसकथनम् । सौभाग्यवटिकाकथनम् । अथ पित्तश्लेष्मज्वरनिदानादिकथनम् । तत्र कण्टकार्य्यादि—धान्यपटोलादि गुडूच्यादिपाचनविधिः । चन्द्रशेखररसकथनञ्च । अथ सन्निपातज्वरादिनिदानकथनम् । तत्र वालुकास्वेदादिविधिः । नस्यनिष्ठीवनादिविधिः । महाद्रावकलेहादिविधिः । बृहन्नवाङ्गादिपाचनविधिः । बृहत्पञ्चमूलादिपाचनविधिः । एवं दशमूल्यादिपाचनविधिः । सञ्जीविकारसकथनम् । वेतालरसकथनम् । भैरवेश्वररसकथनम् । त्रिदोषनीहारसूर्य्यरसकथनम् । सन्निपातसूर्य्यरसकथनम् । सूचिकाभरणरसकथनम् । लोकनाथरसकथनम् । अग्निकुमाररसकथनम् । नीलकण्ठरसकथनम् । चिन्तामणिरसकथनम् । सन्निपातप्रलयानलरसकथनम् । भैरवनादरसकथनम् । सन्निपातकालानलरसकथनम् । जलयोगिकरसकथनम् । त्रिलवमूर्तिरसकथनम् । वारिसागररसकथनम् । वीरभद्ररसकथनम् । त्रिनेत्ररसकथनम् । पञ्चवक्त्ररसकथनम् । नन्दभैरवरसकथनम् । अञ्जनभैरवरसकथनम् । रसचूडामणिरसकथनम् । भस्मेश्वररसकथनम् । उन्मत्तभैरवरसकथनञ्च । अथ अभिन्यासज्वर-

निदानादिकथनम् । तत्र षडङ्गादिपाठनिरूपणम् । स्वच्छन्दनायकरसकथनम् । अथ कर्णग्रीव-
निदानादिकथनम् । तत्र शुद्धिक्रियाकथनम् । अथ जीर्णज्वरनिदानादिकथनम् । तत्र
निदिग्धिकादिविधिः । भार्ग्यादिविधिः । शुद्धियोगकथनम् । पानीयोदकविधिः । मेघनादरस-
कथनम् । अथ विषमज्वरनिदानादिकथनम् । तत्र शुद्धियोगकथनम् । मुक्तकादि द्राक्षादिपाचन-
विधिः । महाज्वराङ्कुशरसकथनम् । विद्यावल्लभरसकथनम् । ज्वरराजरसकथनम् । विषमज्वरा-
न्तकलौहकथनम् । सर्वज्वरलौहकथनम् । जीरकादिमोदककथनम् । बृहत्सर्वज्वरलौहकथनम् ।
त्रैलोक्यज्वरजिद्रसकथनम् । रविसुन्दररसकथनम् । शीतभञ्जीरसकथनम् । शीतारिरसकथनम् ।
अर्धनारीश्वररसकथनम् । अथ रात्रिज्वरनिदानकथनम् । तत्र शुद्धिक्रियाकथनम् । त्रिनेत्ररस-
कथनम् । अथ काम्यज्वरनिदानकथनम् । तत्र कण्टकार्यादिपाचनविधिः । शीतमातङ्गसिंहरस-
कथनम् । विजयायोगकथनम् । भारतपंचादिविधिः । अथ शूचिकादिज्वरकथनम् । तत्र
मरीचयादिकथनम् । अथ चर्चिकादिज्वरचिकित्सा । चर्चिकादिरसकथनम् । अथ चातुर्थकज्वरे
शुद्धिक्रियाकथनम् । चातुर्थकारिरसकथनम् । सुदर्शनचूर्णकथनम् । ज्वरभैरवचूर्णकथनम् ।
अङ्गारकतैलविधिः । लघुलाक्षादितैलकथनम् । बृहल्लाक्षादितैलकथनम् । पिप्पल्यादितैल-
कथनम् । महाङ्गधूपकथनम् । अपराजिताधूपकथनम् । अथ ज्वरान्ते दूर्वादितैलकथनम् ।
ज्वरवर्जितदानविधिः । नवज्वरनिदानादिविधिः । अथ ज्वरातिसारचिकित्सा । तत्र ह्रीबेरादि-
योगकथनम् । उशीरादियोगकथनम् । बृहद्गुडूचीपञ्चमूल्यादि-दशमूलपथ्यादिपाचनकथनम् ।
व्योषादिचूर्णकथनम् । कुटजावलेहादिकथनम् । आनन्दभैरवरसकथनम् । कनकसुन्दररस-
कथनम् । अमृतार्णवरसकथनम् । महाभ्रवटिकाकथनम् । अथ अतिसारनिदानकथनम् ।
आमातिसारचिकित्सा । धान्यपञ्चकादिकथनम् । चतुःसमगुडकादिकथनम् । कटुकादिशुद्धि-
योगकथनम् । तत्र कुटजपुटपाकादिविविधौषधकथनम् । अथ रक्तातिसारचिकित्सादिः । तत्र
शुद्धिक्रियाकथनम् । कुटजाष्टकादिपाचनकथनम् । पाठादिचूर्णविधिः । सर्वेऽतिसारे शुद्धियोग-
कथनम् । अथ प्रवाहिकायां शुद्धियोगकथनम् । अभयनृसिंहरसकथनम् । मृतसञ्जीवनरस-
कथनम् । अथ ग्रहणीचिकित्सा । तत्र शुद्धिक्रियाकथनम् । नागरवटिकाकथनम् । कुटजावलेह-
कथनम् । पंचपल्लवीरसकथनम् । गङ्गाधरचूर्णकथनम् । बृहद्गङ्गाधरचूर्णकथनम् । लवङ्गा-
दिचूर्णकथनम् । बृहल्लवङ्गादिचूर्णकथनम् । जीरकादिचूर्णकथनम् । विजयभैरवचूर्णकथनम् ।
जातिफलादिचूर्णकथनम् । महागन्धककथनम् । कपर्दकरसकथनम् । ग्रहणीगजेन्द्रवटिका-
कथनम् । ग्रहणीवटिकाकथनम् । ग्रहणीगजसिंहकथनम् । ग्रहणीकपाटकथनम् । त्रिपुर-
रसकथनम् । रसपर्पटीकथनम् । रसशुद्धिगन्धकशुद्ध्यादिनिरूपणम् । पञ्चामृतपर्पटीकथ-
नम् । विजयपर्पटीकथनम् । लौहपर्पटीकथनम् । स्वर्णपर्पटीकथनम् । पञ्चामृतलौह-
कथनम् । गगनसुन्दररसकथनम् । विषाणाद्यवटिकाकथनम् । ग्रहणीवज्रकपाटकथनम् । अथ
वृद्धग्रहण्यां कामाचारमपूरकथनम् । चाङ्गेरीघृतकथनम् । कल्याणगुडकथनम् । ग्रहणी-

शिशिरतैलकथनम् । कण्टकार्यवलेहकथनम् । मदनमोदककथनम् । बृहच्छतावरीमोदककथनम् । कामेश्वरमोदककथनम् । जीरकाद्यमोदककथनम् । लवङ्गाद्यमोदककथनम् । कल्याणविदा-चूर्णकथनम् । नायिकाचूर्णकथनम् । जातीफलाद्यवटिकाकथनम् । अभयावटिकाकथनम् । ग्रहणीकपाटरसकथनम् । विजयाभैरवचूर्णकथनम् । अथ ग्रीष्मप्रवर्तां वारिशोषणरसकथनम् । लवङ्गादिमधूरकथनम् । अथ अर्शोनिदानकथनम् । धूपनलेपनादिविधिः । शूरणमोदक-कथनम् । जीरादिचूर्णकथनम् । बृहच्छूरणमोदककथनम् । प्राणदागुडिकाकथनम् । चाङ्ग-मीकगुडकथनम् । लवणोत्तमादियोगकथनम् । कुटजावलेहकथनम् । चन्द्रप्रभावटिकाकथनम् । तीक्ष्णमुखरसकथनम् । अर्शोघ्नरसकथनम् । अथ अजीर्णनिदानकथनम् । तत्र हिङ्ग्वष्टकचूर्ण-कथनम् । शिवादिचूर्णकथनम् । अग्निमुखचूर्णकथनम् । अथ विसूचिकाविलम्बिकाचिकित्सा । तत्र शुद्धिक्रियाकथनम् । मेथिमोदककथनम् । हरीतकीखण्डकथनम् । रामबाणरसकथनम् । हुताशनरसकथनम् । अग्निकुमाररसकथनम् । महाशङ्खवटीकथनम् । बृहच्छङ्खवटिकाकथनम् । महोदधिरसकथनम् । बृहन्महोदधिरसकथनम् । अजीर्णकण्टकरसकथनम् । क्रव्यादरसकथनम् । राजवल्लभरसकथनम् । शुक्लपाकवटिकाकथनम् । अग्निजननीवटिकाकथनम् । आनन्दोदयरस-कथनम् । सुकुमारमोदककथनम् । अथ क्रिमिनिदानकथनम् । तत्र शुद्धिक्रियाकथनम् । विडङ्गादिघृतकथनम् । क्रिमिमुद्गररसकथनम् । कीटमर्द्दरसकथनम् । क्रिमिकालानलरस-कथनम् । क्रिमिघातिनीगुडिकाकथनम् । अथ पाण्डुनिदानकथनम् । तत्र शुद्धिक्रियाकथनम् । त्रिफलादियोगकथनम् । नवायसलौहकथनम् । पुनर्नवामण्डूरकथनम् । त्रिकत्रयलौहकथनम् । पाण्डुनिघ्नरसादिकथनम् । अथ रक्तपित्तनिदानकथनम् । तत्र एलादिगुडिकादिकथनम् । वासाघृतकथनम् । कुष्माण्डखण्डकथनम् । शर्कराद्यलौहकथनम् । त्रैलोक्यसुन्दररसकथनम् । अथ राजयक्ष्मनिदानादिकथनम् । तत्र लवङ्गादिचूर्णकथनम् । तालीशादिमोदककथनम् । वासावलेहकथनम् । छागलाद्यघृतकथनम् । चन्दनादितैलकथनम् । यक्ष्मान्तकलौहकथनम् । शृङ्गाराभ्रकथनम् । रजतादिचूर्णकथनम् । मृगाङ्करसकथनम् । [illegible]कथनम् । राजा-दनमूलकथनम् । बृहच्चन्दनादितैलकथनम् । रत्नगर्भपोटलीकथनम् । अथ कासनिदानादि-कथनम् । तत्र शुद्धिक्रियाकथनम् । हरीतक्यादिमोदककथनम् । अगस्त्यहरीतक्यादिकथनम् । कण्टकार्यवलेहकथनम् । समशर्करागुडिकाकथनम् । रसगुडिकाकथनम् । कासंसंहारभैरव-कथनम् । चन्द्रामृतरसकथनम् । राजमृगाङ्ककथनम् । भार्गीशर्करावलेहकथनम् । अथ हिक्कानिदानादिकथनम् । पिप्पल्यादिलौहकथनम् । अथ श्वासनिदानादिकथनम् । तत्र भार्गीगुडकथनम् । सूर्यावर्तरसकथनम् । पुरन्दररसकथनम् । श्वासारिलौहकथनम् । अथ स्वरभेदनिदानकथनम् । तत्र कल्याणावलेहकथनम् । निदिग्धिकावलेहकथनम् । भार्ङ्गीघृतकथनम् । कर्पूरमोदककथनम् । अथ अरोचकनिदानकथनम् । तत्र शुद्धिक्रिया-कथनम् । कलहंसकाख्यकथनम् । अथ छर्दिनिदानादिकथनम् । तत्र शुद्धिक्रियाकथनम् ।

चर्दिंहेतुकथनम्। एलादिचूर्णकथनम्। शिखरीमन्त्रकथनम्। कुमुदेश्वररसकथनम्। अथ
तृष्णानिदानकथनम्। तत्र मुष्टिक्रियाकथनम्। अथ मूर्च्छानिदानकथनम्। तत्र मुष्टिक्रिया-
कथनम्। शीतलरसकथनम्। अथ मदात्ययाध्यायकथनम्। अथ गुल्मादिनिदानकथनम्।
तत्र मुष्टिक्रियाकथनम्। कल्याणघृतकथनम्। चैतसघृतकथनम्। शिवाघृतकथनम्। शिवा-
तैलकथनम्। त्रिकत्रयाद्यलौहकथनम्। अथ अपस्मारनिदानकथनम्। तत्र मुष्टिक्रियाकथनम्।
धूपाञ्जनादिविधिः। ब्राह्मीघृतकथनम्। महाचैतसघृतकथनम्। अथ वातनिदानकथनम्।
तत्र मुष्टिक्रियाकथनम्। रसोनपिण्डकथनम्। त्रयोदशाङ्गगुग्गुलुकथनम्। पथ्यागुग्गुलुकथनम्।
महाकल्याणघृतकथनम्। बृहच्छागलादिघृतकथनम्। स्वल्पविष्णुतैलकथनम्। बृहद्विष्णुतैल-
कथनम्। मध्यमनारायणतैलकथनम्। महानारायणतैलकथनम्। कुब्जप्रसारणीतैलकथनम्।
स्वल्पमाषतैलकथनम्। बृहन्माषतैलकथनम्। सप्तप्रस्थमाषतैलकथनम्। शीतारिरसकथनम्।
वातारिगुग्गुलुकथनम्। विजयभैरवतैलकथनम्। हिमसागरतैलकथनम्। बृहद्वातारितैलकथनम्।
वातकुलान्तकतैलकथनम्। बृहच्छतपुष्पादितैलकथनम्। स्वल्पगुडूचीतैलकथनम्। बृहद्गुडूची-
तैलकथनम्। कैशोरगुग्गुलुकथनम्। वज्रगुग्गुलुकथनम्। भैरवगुग्गुलुकथनम्। गुडूच्यादिलौह-
कथनम्। रसमाणिक्यकथनम्। महातालेश्वरकथनम्। द्वादशाङ्गयवकथनम्। वाड़वारितैल-
कथनम्। विषविन्दुकतैलकथनम्। अथ ऊरुस्तम्भनिदानकथनम्। तत्र चिकित्साकथनम्। अथ
आमवातनिदानकथनम्। तत्र रास्नासप्तकादिकथनम्। रास्नादशमूलादिकथनम्। लेपनादि-
कथनम्। बृहद्रसोनपिण्डकथनम्। योगराजगुग्गुलुकथनम्। महारसोनपिण्डकथनम्। सिंह-
नादगुग्गुलुकथनम्। आमवातगजसिंहमोदककथनम्। स्वेदादिविधिः। बृहत्सैन्धवाद्यतैलकथनम्।
आमवातेश्वररसकथनम्। आमवातारिगुड़िकाकथनम्। अथ शूलनिदानकथनम्। तत्र
मुष्टियोगकथनम्। चतुःसमचूर्णकथनम्। त्रिफलामण्डूरकथनम्। चतुःसमलौहकथनम्।
परिणामे मुष्टिक्रियाकथनम्। नारिकेलखण्डकथनम्। आमलकीखण्डकथनम्। शतावरीम-
ण्डूरकथनम्। धात्रीलौहकथनम्। शुण्ठीखण्डकथनम्। विद्याधराभ्रकथनम्। शूलगजेन्द्र-
तैलकथनम्। अथ उदावर्तनिदानकथनम्। तत्र नाराचचूर्णकथनम्। मुष्टिक्रियाकथनम्।
अथ गुल्मनिदानकथनम्। तत्र मुष्टिक्रियाकथनम्। काङ्कायनगुड़िकाकथनम्। गुल्मकाला-
नलरसकथनम्। दन्तीहरीतकीकथनम्। विद्याधररसकथनम्। नाराचरसकथनम्। अथ
हृद्रोगनिदानकथनम्। तत्र मुष्टियोगकथनम्। अर्जुनघृतकथनम्। अथ उरोग्रहचिकित्सा।
अथ मूत्रकृच्छ्रनिदानकथनम्। तत्र मुष्टिक्रियाकथनम्। त्रिकण्टकादिघृतकथनम्। कुशाव-
लेहकथनम्। शर्करावलेहकथनम्। अथ मूत्रघातनिदानकथनम्। तत्र मुष्टियोगकथनम्।
गोक्षुराद्यघृतकथनम्। अथ मूत्रातिसारनिदानकथनम्। तत्र मुष्टिक्रियाकथनम्। धात्रीघृत-
कथनम्। तारकेश्वररसकथनम्। अथ अश्मरीशर्करानिदानकथनम्। तत्र मुष्टियोगकथनम्।
कुलत्थाद्यघृतकथनम्। वरुणगुड़कथनम्। अथ प्रमेहनिदानकथनम्। तत्र मुष्टिक्रियाकथनम्।

दाडिमादिघृतकथनम् । इन्द्रवटीकथनम् । बृहद्दाडिमाद्यघृतकथनम् । सोमेश्वररसकथनम् । बृहन्नामनाथरसकथनम् । मेघमुद्गरतैलकथनम् । बृहन्मेघमुद्गरतैलकथनम् । कर्पूरमोदककथनम् । अथ स्थौल्यदौर्गन्ध्यनिदानकथनम् । तत्र मुष्टिक्रियाकथनम् । विडङ्गादिलौहकथनम् । अथ कार्श्यचिकित्सा । अथ उदररोगनिदानकथनम् । तत्र मुष्टिक्रियाकथनम् । सामुद्राद्यचूर्णकथनम् । अग्निमुखचूर्णकथनम् । पुनर्नवाष्टककथनम् । बिन्दुघृतकथनम् । मानमण्डविधिः । नाराचरसकथनम् । उदरारिरसकथनम् । इच्छाभेदिरसकथनम् । बृहदुदरारिरसकथनम् । उदरवरतायोगकथनम् । अथ प्लीहनिदानादिकथनम् । तत्र मुष्टिक्रियाकथनम् । मानादिगुडिकाकथनम् । अभयालवणकथनम् । यकृतानिलरसकथनम् । लोकनाथरसकथनम् । अथ शोथनिदानादिकथनम् । तत्र मुष्टियोगकथनम् । शिंशपादियोगकथनम् । वंशपत्रीतकीविधानम् । कटुकाद्यलौहकथनम् । त्रिकट्वादिलौहकथनम् । शुण्ठ्यामूलादितैलकथनम् । वासुकिभूषणरसकथनम् । दशमूलगुडकथनम् । बृहच्छुण्ठीमूलादितैलकथनम् । अथ वृद्धिनिदानकथनम् । तत्र मुष्टिक्रियाकथनम् । शतपुष्पादिघृतकथनम् । नित्यानन्दरसकथनम् । वृद्धीश्वररसकथनम् । अथ गलगण्डमालाऽर्बुदादिचिकित्सा । अथ श्लीपदनिदानकथनम् । तत्र मुष्टिक्रियाकथनम् । लेपादिशोधनविधिः । विषतैलकथनम् । व्रणलेपनविधिः । शारीरव्रणचिकित्सा । विपरीतमल्लतैलकथनम् । व्रणराक्षसतैलकथनम् । अथ दग्धव्रणचिकित्सा । अथ भग्नचिकित्सा । अथ नाडीव्रणचिकित्सा । तत्र सप्ताङ्गगुग्गुलुकथनम् । अथ भगन्दरनिदानकथनम् । तत्र मुष्टिक्रियाकथनम् । सप्तविंशतिगुग्गुलुकथनम् । विष्यन्दनतैलकथनम् । भगन्दरहररसकथनम् । अथ उपदंशनिदानकथनम् । तत्र मुष्टियोगकथनम् । शीमन्मथरसकथनम् । सामान्यप्रयोगकथनम् । अथ शूकदोषचिकित्सा । अथ कुष्ठनिदानकथनम् । तत्र पञ्चनिम्बकथनम् । विश्वेश्वररसकथनम् । पञ्चतिक्तघृतकथनम् । अमृतभल्लातककथनम् । महाभल्लातककथनम् । सिन्दूराद्यतैलकथनम् । अर्कतैलकथनम् । बृहन्मरीच्यादितैलकथनम् । महावज्रतैलकथनम् । विषतैलकथनम् । बृहत्सोमराजतैलकथनम् । कन्दर्पप्रसारतैलकथनम् । अमृताङ्कुरलौहकथनम् । उदयभास्कररसकथनम् । तालकेश्वररसकथनम् । हरितालभस्मविधानम् । महातालेश्वररसकथनम् । अथ शीतपित्तचिकित्सा । अथ अम्लपित्तचिकित्सा । तत्र नारिकेलामृतकथनम् । शतावरीघृतकथनम् । औपपत्तिकचूर्णकथनम् । शितामण्डूरकथनम् । आमलक्यादिलौहकथनम् । अथ विसर्पचिकित्सा । तत्र अमृतादिपाचनकथनम् । बृहदमृतादिपाचनकथनम् । कालाग्निचन्द्ररसकथनम् । अथ विस्फोटकचिकित्सा । अथ स्नायुरोगचिकित्सा । अथ मसूरिकाचिकित्सा । अथ क्षुद्ररोगनिदानकथनम् । तत्र मालत्यादितैलकथनम् । गुञ्जादितैलकथनम् । गुञ्जातैलकथनम् । अथ गुदभ्रंशचिकित्सा । तत्र क्षुद्रचाङ्गेरीघृतकथनम् । भृङ्गराजतैलकथनम् । अथ मुखरोगचिकित्सा । अथ दन्तरोगचिकित्सा । अथ

जिह्वाचिकित्सा । तालुचिकित्सा । तत्र कालकचूर्णकथनम् । पञ्चादिचूर्णकथनम् । खदिर-
वटिकाकथनम् । बृहत्खदिरवटिकाकथनम् । अथ कर्णरोगनिदानकथनम् । तत्र शुद्धिक्रिया-
कथनम् । क्षारतैलकथनम् । दशमूलतैलकथनम् । जातीतैलकथनम् । शम्बूकतैलकथनम् ।
धुस्तूराद्यतैलकथनम् । बृहच्छम्बूकाद्यतैलकथनम् । अथ नासारोगनिदानम् । तत्र चित्रकहरीतकी-
कथनम् । मुष्टियोगकथनम् । गृहधूमाद्यतैलकथनम् । अथ नेत्ररोगनिदानकथनम् । तत्र शुद्धि-
क्रियाकथनम् । बृहद्दार्व्यादिविधानम् । चन्द्रोदयवर्तिकथनम् । कुमारीवर्तिकथनम् । पिप्पल्या-
वर्तिकथनम् । बृहत्त्रिफलावर्तिकथनम् । सप्तामृतलौहकथनम् । अञ्जनविधानम् । अथ शिरो
रोगचिकित्सा । तत्र षड्बिन्दुतैलकथनम् । अथ सूर्यावर्तचिकित्सा । तत्र मयूरघृतकथनम् ।
दशमूलतैलकथनम् । बृहद्दशमूलतैलकथनम् । स्नेहमर्दनतैलकथनम् । कणकतैलकथनम् । महा-
कणकतैलकथनम् । महाभृङ्गराजतैलकथनम् । बृहद्धुस्तूराद्यतैलकथनम् । बृहत्कणकतैलकथनम् ।
महादशमूलतैलकथनम् । महाचन्दनतैलकथनम् । अथ प्रदरनिदानकथनम् । तत्र मुष्टियोग-
कथनम् । शीतकल्याणघृतकथनम् । अशोकघृतकथनम् । प्रदरान्तकरसकथनम् । अथ सोमरोग-
निदानकथनम् । तत्र चिकित्सा । अथ योनिव्यापच्चिकित्सा । तत्र सूचिकतैलकथनम् । अथ
इन्द्रलुप्तचिकित्सा । अथ निर्लोमीकरणविधिः । अथ वन्ध्याचिकित्साविधानम् । तत्र फलघृत-
कथनम् । सोमघृतकथनम् । अथ गर्भोत्पादनविधानम् । अथ पुंसवनविधानम् । अथ मूढगर्भ-
चिकित्सा । अथ गर्भचिकित्सा । अथ चन्दनादिपाचनकथनम् । ह्रीबेरादिपाचनकथनम् । अथ
गर्भविनाशकथनं तत्र मुष्टियोगकथनम् । गर्भचिन्तामणिरसकथनम् । अथ प्रसवविधिः । तत्र
मन्त्रविधिः । अथ मक्कल्लशूलचिकित्सा । अथ सूतिकादशमूलकथनम् । देवदार्वादिपाचन-
कथनम् । वज्रकाञ्जिककथनम् । सौभाग्यशुण्ठीकथनम् । सूतिकाहररसकथनम् । सूतिकारस-
कथनम् । अथ स्तनविद्रधिचिकित्सा । तत्र स्तनरोगचिकित्सा । तत्र कासीसतैलकथनम् । अथ
शिशुचिकित्सा । तत्र ज्वरादौ चातुर्भद्रिकापाचनविधिः । धातक्यादिपाचनकथनम् । रजन्यादि-
चूर्णकथनम् । बालचतुःसमादिकथनम् । बालरसकथनम् । अश्वगन्धाघृतकथनम् । अष्टमङ्गल-
घृतकथनम् । अथ दन्तकडमरिचिकित्सा । अथ शय्यामूत्रचिकित्सा । अथ विषाधिकार-
चिकित्सा । तत्र मुष्टियोगकथनम् । विषवज्ररसकथनम् । अथ रसायनाधिकारः । तत्र
पूर्णचन्द्ररसकथनम् । चतुर्मुखरसकथनम् । महाकल्पतरुरसकथनम् । वसन्ततिलकरसकथनम् ।
श्रीकामदेवरसकथनम् । रसकर्पूरकथनम् । अथ वाजीकरणविधिः । तत्र वानरखण्डकथनम् ।
पूगखण्डकथनम् । कामाग्निसन्दीपनरसकथनम् । रतिवल्लभमोदककथनम् । मन्मथरसकथनम् ।
पूर्णचन्द्ररसकथनम् । महेश्वररसकथनम् । परमानन्दरसकथनम् । कामदीपकरसकथनम् । अथ
ध्वजभङ्गचिकित्सा । अथ वीर्यस्तम्भनविधिः । अथ वशीकरणविधिः । तत्र आसवधानविधानम् ।
मद्यामयकथनम् । बब्बूलारिष्टकथनम् । दशमूलारिष्टकथनञ्च ॥ इति शम् ।

---

**No. 115.** चिन्तामणितन्त्रं, By शिवः. Substance, country-made paper, 19×5 inches. Folia, 7. Lines, 7 on a page. Extent, 252 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Vikramapur, Mājpāḍā, Bābu Rāsavihāri Rāya. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमः परदेवतायै ।

पार्वत्युवाच ।

देवदेव महादेव नीलकण्ठ तपोधन ।
शूलपाणे महादेव कथ्यतां चन्द्रशेखर ॥
सर्वं हि परमानन्द श्रुतं तव मुखाम्बुजात् ।
इदं पृच्छामि देवेश गुह्यतत्त्वं महेश्वर ॥
मन्त्रतत्त्वं महेशान चैतन्यञ्च तपोधन ।
योनिमुद्रां महेशान तत्त्वत्रयं परात्परम् ।
एतद्देव महादेव कथ्यतां मे पिनाकधृक् ॥

ईश्वर उवाच ।

शृणु पार्वति वक्ष्यामि दासोऽहं तव सुव्रते ।
अतिगुह्यं महत्पुण्यं तत्त्वत्रयं वरानने ॥
सारात्सारतरं मन्त्रमतिगोप्यं शुचिस्मिते ।
ब्रह्मापि जायते देवि कथं तत्कथयाम्यहम् ॥
कथयामि महादेवि दासोऽहं तव सुव्रते ।
न चैतत्कथ्यते देवि तव क्रोधः प्रजायते ।
अथवा क्रोधे कृते देवि हानिः स्यान्मम कामिनि ॥
मन्त्रार्थं मन्त्रचैतन्यं धर्मार्थकामदं प्रिये ।
योनिमुद्रां महेशानि साक्षान्मोक्षप्रदायिनीम् ॥ इत्यादि ।

**End.** एतन्मन्त्रमतं ज्ञात्वा जीवन्मुक्तः स एव तु ।
एतन्मन्त्रमतं देवि सर्वतन्त्रेषु शस्यते ॥
शिवे विष्णौ महेशानि तथाच गणनायके ।
शक्तिभेदेषु देवेशि सर्वविद्यासु शस्यते ॥
सत्यं सत्यं पुनः सत्यं सत्यमेव वदाम्यहम् ।
यत्नेन कुरु देवेशि हृदये धारणं चरेत् ॥ (?)

**Colophon.** इति श्रीचिन्तामणितन्त्रे मुद्रामन्त्रार्थ-चैतन्यनिरूपणे पार्व्वतीश्वरसंवादे सप्तमः पटलः ॥

**विषयः।** शिवाशिवयोः संवादेन योनिबीजादिकथनम्। रहस्ययोनिमुद्राकथनम्। कुण्डलिनीध्यानादिकथनम्। योनिकवचकथनम्। आधारचक्रादिक्रमेण कवचपाठफलकथनम्। तत्कवचधारणफलकथनञ्च। षट्चक्रक्रमेण मन्त्रार्थकथनम्। षड्दलवर्णनम्। मणिपूरवर्णनम्। हृत्पद्मवर्णनम्। विशुद्धाख्यवर्णनम्। आज्ञापुरवर्णनम्। मन्त्रचैतन्यप्रकारकथनम्। मुद्रामन्त्रार्थनिरूपणम्। चैतन्यरहस्यकथनञ्च ॥

---

**No. 116.** चैतन्यकल्प (ब्रह्मयामलान्तर्गतः)। Substance, country-made paper, 13 × 3⅓ inches. Folia, 8. Lines, 7 on a page. Extent, 196 çlokas. Character, Bengali. Date, ? Place of deposit, Kānṭhālpāḍā *vid* Naihāṭī, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीचैतन्यचन्द्राय नमः।

कल्पौ पूर्णानन्दस्त्रिभुवनजयी गौरसुतनु-
र्नवद्वीपे जातः सुरधुनीसमीपे शचीसुतः।
इदन्यापिभ्योऽपि सकलजमपि हरेर्नाम निखिलं
तरिता पापाद्दि जगति विजयते गौरचन्द्रावतारः ॥ (?)

पार्व्वत्युवाच।

भगवन् देवदेवेश सृष्टिस्थित्यन्तकारक।
चैतन्यकल्पं भगवन् कथयस्व मयि प्रभो ॥
नवद्वीपे कथं कृष्णो भगवान् भक्तवत्सलः।
जातः किं कर्म्म कृत्वा च शच्याः पुत्रः प्रभूय च।
तदहस्य महाबाहो यदा ते यदि जायते ॥ इत्यादि।

**End.** भक्तप्रियो गौरचन्द्रो भक्तगम्यः शचीसुतः।
तस्मात् तं ये भजन्तीह तेषां वश्यः शचीसुतः ॥
श्रुत्वा चैतन्यकल्पं हरिभजनविधिं विस्मिता शैलपुत्री
आनन्दाश्रुप्रमुदितसुखी मङ्गलं स्रावयन्ती।
गायन्त्युच्चैर्हरिगुणमयं श्लोकविस्तारकल्पं
श्रुत्वा श्रुत्वा हिमगिरिसुता तद्गता संबभूव ॥

**Colophon.** इति ब्रह्मयामले श्रीचैतन्यकल्पे शिवदुर्गासम्वादे चैतन्यकल्पं नाम पञ्चमो-ऽध्यायः ।

श्रीचैतन्यनित्यानन्दाभ्यां नमः । हरये नमः ।

**विषयः ।** अत्र प्रथमं हरपार्व्वतीसंवादेन चैतन्यदेवस्य अवतारप्रयोजनकथनम् । नाना-विधं चैतन्यस्य महिमादिवर्णनम् । ततः श्रीचैतन्यदेवस्य स्तोत्रादिः ।

---

**No. 117.** **चैतन्यविलासामृतम्,** By **नन्दकुमारगोस्वामी.** Substance, country-made paper, 13 × 3 inches. Folia, 178. Lines, 6 on a page. Extent, 2,937 çlokas. Character, Bengali. Date, ? Place of deposit, Cuāmasinā, Post office Rādhānagara, District Vāñkurā, Çrī Nikuñjavihāri Gosvāmī. Appearance, new. Verse. Correct.

**Beginning.** श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

गुरोः पादाम्बुजं नौमि करुणारसपूरितम् ।
यस्य ध्यानानुलेशोऽपि सर्व्वसिद्धिप्र[illegible]ः ।
नीलाम्बुद्द्युतिनिन्द्यदेहरुचिरं विद्युद्दुकूलावृतं
न्यस्तोष्ठाधरवेणुमिन्दुवदनं कन्दर्पदर्पाकुलम् ।
गुञ्जाहारसुचिरोरसं निरुपमं वक्रालकामण्डितं
चूड़ाबद्धमयूरपुच्छकुसुमं वन्दे व्रजेन्द्रात्मजम् ॥
बालार्कप्रतिमारुणाम्बुजपदद्वन्द्वं सुवर्णाकृतिं
शुभ्रस्फाटिकधिक्कृतैकदशनं लम्बोदरं सुन्दरम् ।
दीप्यद्यावककरीन्द्रवक्त्रमनिशं लम्बाङ्घ्रिसंधारिणं
वन्दे शैलसुतासुतं गणपतिं तं विघ्नविध्वंसिनम् ॥
वन्दे व्यासपराशरादियमिनो भीष्माम्बरीषार्ज्जुन-
प्रह्लादांश्च विभीषणं कपिपतिं भक्ताग्रगण्यं परम् ।
अक्रूरोद्धवशौनकादिसहितञ्चोत्तानपादात्मजं
वाल्मीकिं शुकनारदप्रभृतिकं भक्ताङ्घ्रिभृङ्गानपि ॥
संदग्धहेमरुचिरांशुसुचारुरूपं
बालार्कतुल्यवसनं कमलाक्षमीशम् ।
राधानुभावगलदश्रुविधौतदेहं
प्रेमार्णवं द्विजवरं प्रणमामि गौरम् ॥

वन्दे श्रीकृष्णचैतन्यं कृष्णाकारविग्रहम् ।
प्रेमार्द्दिताङ्गरुचिरं कीर्त्तनानन्दमोहितम् ॥
नित्यानन्दं प्रभुं वन्दे श्रीवासादिमसुन्दरी ।
गदाधरं स्वरूपञ्च गौरभक्तगणानपि ॥
वन्दे रूपसनातनौ रघुवरं श्रीजीवगोपालकौ
दासश्रीरघुनाथमीश्वरपदे दातुं स्वभक्तिञ्च ये ।
नानाशास्त्रपुराणवेदनिगमादुद्धृत्य सारात्मकं
प्रातन्वन् व्रजराजनन्दनगुणपन्थान् वक्तुन् सुन्दरान् ॥
कीदृक् प्रेम प्रणयिनि पराराधिकाया गयीनः
स्वादुत्वं वा स्मरविशिखजं पीड़नञ्चापि कीदृक् ।
ज्ञातुं तत्तद्वचनविभामापिधाय स्वनेत्र-
कस्या देहद्युतिमनुदधावविरासीच्छचीजः ॥
श्यामावलीं प्रेमरसस्य संदह
जनान् समुद्धर्त्तुमिहाविराभवत् ।
श्रीकृष्णदासादिभिरेव विस्तृता
लीलास्तदीयाश्चरितामृतादिषु ।
प्रवक्तुमेषां चरणप्रसादतः श्रीगौरलीलालवमेवमुत्सुके ।
ममैव यत्नः किमु दर्शनाय ते सतां न गौराङ्गचरित्रवर्णनम् ॥
मतिहतेन मया रचितोऽप्ययं
जनमतं ननु नाशयिता ध्रुवम् ।
अचिभवोपि मयि मे नमसयं
किमु न नाशयति स्वधमश्चितः ॥

भो भोः साधवः कृपावधानं क्रियतां, द्वापरयुगावसानमनुगत्यात्यन्ताक्रान्ति-चेतःप्रारूढ़प्रचण्डप्रचलतरदीर्घभीषणकल्मषतरङ्गं सद्गुरुसमुद्गरचन्द्रचर्म्मांगरा-समायातायुधघनघूर्णितरक्तोत्पलप्रतिमाचिन्दयचोरनरारिकुलसंमर्द्दकप्रचण्डदोर्द्द-ण्डप्रतापकम्पितब्रह्माण्डमण्डल-विविधयातनाकर-कर्कश-कुलिशकुल-धिक्कृत-भीमत्कलिराजो मर्त्त्यभूमाववततार । ततः स एव चचर्म्मनिर्दयक्रोधकामा-दिरिपुपुङ्गवाः ! आगच्छत कृतं कर्म्म साध्यतां मम संप्रति ।
ततोऽधर्म्मो निर्दयश्चामात्य कामादिभिः सह प्रणम्य पार्श्वे नृपतिमाश्च स्थिता कृताञ्जलिः ।

किमर्थमागतौ राजन् किम्वा कार्य्यं भवतृ प्रभो ।
साधयामो वयं सद्य एवासाध्यमपि द्रुतम् ॥
ततः कलिः ।
धन्यौ तौ निर्द्दयाधर्म्मौ तुष्टोऽहं वचनेन वः ।
भ्राम्यतं पृथिवीमध्ये धर्म्मादिः कुरुतं क्षयम् ॥ इत्यादि ।

**End.** इत्याद्याक्षेपणं वाक्यमुक्त्वा श्रीगौरसुन्दरः ।
भक्तैर्लीलां चकाराग्र्यां श्रोतृणतिसुखप्रदाम् ॥
प्रणीतनयतत्त्वतद्गुणचरित्रलीलादिकं
मुनीन्द्रसुरपुङ्गवैरपि न वेद्यमन्येन किम् ।
वदेव यदि शारदा युगमसंख्यमेवानिशं
सहस्रवदनोऽपि तौ न खलु तत्र किञ्चित् क्षमौ ॥
ये नं शृतं गौरगुणानुकीर्त्तनं ये नार्च्चितं तस्य पदाम्बुजद्वयम् ।
ये नो कृतस्तज्जनसङ्ग आदरात् ते मृढमत्या यमदूतशासनाः ॥

× × × ×
× × × × ।

ते सर्व्वपापैर्वियुता नराधमा दुष्टाः कृतघ्ना भवकूपवासिनः ॥
श्रूयतां श्रूयतां भक्ताश्चैतन्यगुणकीर्त्तनम् ।
तस्माच्च परमानन्दप्राप्तिः स्यान्नात्र संशयः ॥
आचार्य्यश्रीनिवासप्रभुकुल-जलधावब्जवद्भक्तिभाक्-स
जातः पञ्चाननाख्यो जनकुलविदितः प्राप्त ईशानुकम्पः ।
तत्पुत्रेणैव किञ्चिद्रचितमिह मया ज्ञानहीनेन यत्नात्
श्रीश्रीगौराङ्गलीलामृतमिति कृपया शोधनीयं भवद्भिः ॥
श्रीरामचन्द्रेण विशोधिते बङ्ग्यकाङ्किते विष्णुपुरिनिवासिना ।
ग्रन्थेऽत्र दोषो यदि वर्त्तते कियद्दशात्र दुष्टः सुधियो विविच्यताम् ॥ ।

**Colophon.** इति श्रीनन्दकुमारगोस्वामिविरचिते श्रीचैतन्यविलासामृतग्रन्थे अन्त्यकाण्डे प्रेषितभर्त्तृकारसास्वादनं नाम पञ्चमो विलासः ॥ समाप्तश्चायं ग्रन्थः ।

**विषयः।** अत्र आदिकाण्डे प्रथमविलासे कलेरुपाख्यानवर्णनम् । २ ये प्रभोर्जन्मलीला-वर्णनम् । ३ ये गौराङ्गोद्वाहादिवर्णनम् । ४ र्थे विवाहादिलीलावर्णनम् । ५ मे सन्न्यासोप-क्रमादिवर्णनम् । मध्यकाण्डे प्रथमविलासे गौराङ्गसन्न्यासग्रहणवर्णनम् । २ ये नीलाचलगमन-

नादिवर्णनम् । ३ ये चौरचौरगोपीनाथचरित्रवर्णनम् । ४ र्थे सार्व्वभौमोपदेशवर्णनम् । ५ मे रामानन्देन सह मेलनादिवर्णनम् । ६ ष्ठे गौराङ्गस्य तीर्थाटनादिवर्णनम् । ७ मे गौड़वासिभक्तैः सह मेलनवर्णनम् । ८ मे पुनर्नीलाचलप्रत्यागमनम् । ९ मे वृन्दावनभ्रमणवर्णनम् । १० मे श्रीमद्रूपाद्युपदेशादिवर्णनम् । अन्त्यकाण्डे प्रथमविलासे श्रीमद्रूपमेलनादिवर्णनम् । २ये हरिदासनिर्याणादिवर्णनम् । ३ ये नवानुरागरसास्वादननिरूपणम् । ४ र्थे अभिसारादिरसवर्णनम् । ५ मे प्रोषितभर्त्तृकारसास्वादनम् । इति ।

---

**No. 118.** **चौरपञ्चाशत्काव्यस्य कालिकापक्षटीका,** By **श्रीराधाकृष्णशर्म्मा.** Substance, country-made paper, 7 x 2 inches. Folia, 15. Lines, 8 on a page. Extent, 482 çlokas. Character, Bengali. Date, Sk. (?) Place of deposit, Kānthālpādā *via* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीदुर्गा ।

नत्वा कालीपदद्वन्द्वं सेवितं सुरराजिभिः ।
राधाकृष्णेण व्याख्यातं काव्यं सौन्दरमेव च ॥
अभिरामात्मजः श्रीमाञ्छन्दरामसदाशयः ।
एकदा संसदि प्राह व्याख्यां कर्त्तुं द्रुतञ्च माम् ॥
वर्द्धमाने महाकाल्याः पक्षं व्याख्यातुमादृतः ॥ इत्यादि ।

**End.** × × × ×
× × × × ।

श्रीराधाकृष्णविप्रस्तुहिनगिरिसुतापक्षमस्मिन् सुकाव्ये
शास्त्रे प्रख्यातबुद्धिः सुविदितमकरोच्छन्दरामेण चोक्तः ॥
शाके चन्द्राङ्करामाम्बुधिसुतगणिते रत्नगर्भस्य सूनुः
चन्तव्यं कोविदैस्तन्मम यदविदितं प्राञ्जलिं के करोमि ।

× × × ×
× × × × ॥

**Colophon.** इति चौरसुन्दरराजकृते पञ्चाशच्छ्लोककाव्ये श्रीराधाकृष्णकृतकालिकापक्षव्याख्या सम्पूर्णा ॥ श्रीदुर्गा ॥

**विषयः ।** चौरपञ्चाशदपरनामकस्य शृङ्गाररसात्मकस्य सौन्दरकाव्यस्य कालिकापक्षे व्याख्यानम् ।

**No. 119.** जपरहस्यम्. Substance, country-made paper, 13 x 4½ inches. Folia, 8. Lines, 10 on a page. Extent, 360 çlokas. Character. Bengali. Date, ? Place of deposit, Kānṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Navīnacandra Ṭhākura. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ परमदेवतायै नमः । अथ जपरहस्यम् । तत्रादौ प्रातः कर्त्तव्यमाह ।
प्रातःकाले च सन्ध्यायां जपस्य निर्णयं शृणु ।
पूर्व्वोक्तमातृकान्यासं विन्यसेन्मातृकाक्षरैः ॥
तथा एकादशद्वारे चौरमन्त्रांश्च विन्यसेत् ।
दशधा चैव मन्त्रस्तु एकधा वापि संजपेत् ॥ इत्यादि ।

**End.** पुनर्णकारमारभ्य श्रीकण्ठान्तं मनुं जपेत् ।
विलोम इति विख्यातः चकारं केवलं जपेत् ॥
अष्टवर्गीयवर्णैश्च सह मूलमथाष्टकम् ।
अष्टोत्तरशतं ज० : समर्थ्य ...मश्रिया ॥
सर्व्वान्तरात्मनिलये ............ स्वरूपिणि ।
गृहाणास्मज्जपं मातरग्रपूर्णे नमोऽस्तु ते ॥
समर्प्य जपमेतेन ...... प्रणमेच्छ्रिया ॥

**Colophon.** ॐ गुरुभ्यो नमः ॥

**विषयः ।** जपनिर्णयः । जपक्रमनिरूपणम् कुल्लुकादिनिरूपणम् । सेतुनिरूपणम् । मुखजिह्वादिशोधननिरूपणम् । दीपिनीनिरूपणम् । मन्त्रचैतन्यादिनिरूपणम् । जपकाल-कर्त्तव्यनिरूपणम् । मानसपूजादिनिरूपणञ्चेति ।

---

**No. 120.** जातकदीपः, By कौण्डिन्यवरसेनः. Substance, palm-leaf, 17 x 1 inches. Folia, 100. Lines, 4 on a page. Extent, 1,831 çlokas. Character, Bengali. Date, Sk. 1747. Place of deposit, Dhākā, Pañcasāra, Paṇḍita Mahendracandra Kāvyatīrtha. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
जयति कमलवक्त्रर्ज्जीवलोकैकचक्षु-
स्त्रिगुणमयशरीरो मण्डलस्थो गरेश्वः ।

मनुजजनमत। रोगशोकैकहर्त्ता
भुवनजननरक्षानाशहेतुर्विवस्वान् ॥
अन्यस्मिन् मनुजादीनां न हि जन्मफलान्विते ।
तत्र कथितान्येव मनुभिर्मतभेदतः ॥ (?)
तस्माज्जन्मपयसां सारैः + + येव प्रकाशकः ।
मनुजानन्दोशार्थं क्रियते जातदीपकः ॥
शास्त्रलब्धं पुरा यत् कृतं कर्म्म शुभाशुभम् ।
तत्तत्सम्बन्धकारे तद्द्रव्यं दीप इवोज्ज्वलः ॥
तत्र राशिप्रहराणाम् भेद आदौ निगद्यते ।
तो ज्ञात्वा भेदभेदेषां यो दैवं वक्तुमर्हति ॥
शास्त्रप्रशंसा । इत्यादि ।

End ज्योतिर्ग्रन्थघटीपयोनिधिमथनीनिःशेषसारोद्धृतै-
र्देवानां सदसद्विचाररचनावैदग्ध्यसन्दर्भवित् ।
श्रीलौहित्यवरेण वैद्यकुलजेनाकारि यो यत्नतो
पश्यन्त्वेव चिरामसत्सरगुणाः सज्जातदीपं जनाः ॥

Colophon. इति लौहित्यवरसेनविरचिते जातकदीपके निर्व्वाणो नाम पञ्चविंशति-
तमोऽध्यायः । समाप्तोऽयं ग्रन्थः ॥

विषयः । अथ प्रथमं राशिभेदनिरूपणम् । तत्र राशीनां स्वभावादिभेदकथनम् । ग्रहभेद-निरूपणम् । तेषां क्रूरसौम्यादिकथनम् । गोचरनिरूपणम् । नवांशादिकथनम् । षड्वर्गादि-कथनम् । मूलत्रिकोणादिकथनम् । वश्यावश्यनिरूपणम् । केन्द्रादिकथनम् । ग्रहवर्णादि-कथनम् । द्रेक्काणादिनिरूपणम् । ग्रहाणामुच्चनीचत्वादिकथनम् । राहुकेत्वोर्मूलत्रिकोणादि-कथनम् । दिक्पतिराशिकथनम् । पृष्ठोदयादिकथनम् । राशिबलाबलकथनम् । तन्वादिसंज्ञा-कथनम् । लग्नमानकथनम् । उपचयसंज्ञाकथनम् । केन्द्रादिकथनम् । रूपादिसंज्ञाकथनम् । क्रूरसौम्यज्ञाननिरूपणम् । दिक्पतिविवेकः । नपुंसकाद्यधिपकथनम् । जात्यधिपादिकथनम् । तत्कालमित्रामित्रकथनम् । दृष्टिनिरूपणम् । गोचरफलकथनम् । फलकालनिर्णयः । ओषधधारणव्यवस्था । पञ्चमादिताराफलकथनम् । नाडीनक्षत्रनिरूपणम् । संक्रान्ति-निरूपणम् । रव्यादिचक्रकथनम् । रेखादिफलकथनम् । अष्टवर्गकथनम् । महाष्टवर्ग-कथनम् । अथ गर्भाधानादिकथनम् । जातकलग्नादिनिरूपणम् । जारयोगकथनम् । नौकादौ जन्मकथनम् । मातृत्यक्तजातस्य शुभाशुभकथनम् । सत्त्वादिज्ञानकथनम् । तामादिज्ञानकथनम् । जातकर्मनिरूपणम् । निर्याणज्ञाननिरूपणम् । शिशुरिष्टिकथनम् । द्रेक्काणरिष्टादिकथनम् ।

मातृरिष्टादिकथनम् । पित्रायुःकथनम् । दशाकथनम् । चरमचन्द्रादिदशाकथनम् । दशारिष्टकथनम् । चन्द्रदशानिरूपणम् । मासिकदशाकथनम् । केतुपताकिनिरूपणम् । रव्यादिसप्तखेचरफलकथनम् । नवांशादिफलकथनम् । तन्वादिभावकथनम् । गुरुशौरयोः परस्परदृष्टिकथनम् । राशिशीलकथनम् । नक्षत्रशीलकथनम् । उच्चफलादिकथनम् । तन्नुगततुङ्गादिकथनम् । मूलत्रिकोणफलकथनम् । स्वगृहस्थग्रहफलकथनम् । मित्रगृहस्थग्रहफलकथनम् । नीचग्रहफलकथनम् । शत्रुगृहस्थग्रहफलकथनम् । द्विग्रहयोगकथनम् । त्रिग्रहयोगकथनम् । प्रव्रज्यायोगकथनम् । पतितयोगकथनम् । पातकयोगकथनम् । पातकयोगभङ्गकथनम् । शीर्षादिच्छेदयोगकथनम् । त्रिशूलयोगकथनम् । वज्रहतयोगकथनम् । कुष्ठदुष्टयोगकथनम् । काणयोगकथनम् । खञ्जयोगकथनम् । पङ्गुहतयोगकथनम् । जलजन्तुहतयोगकथनम् । चौरभमादियोगकथनम् । क्रूरादियोगकथनम् । दारिद्र्यादियोगकथनम् । सिंहासनादियोगकथनम् । चलकादियोगकथनम् । दोलाच्छत्रहेमच्छत्रयोगकथनम् । विजययोगकथनम् । धनज्ञानकथनम् । सुखज्ञानकथनम् । नृपतियोगकथनम् । राजयोगभङ्गकथनम् । स्त्रीणां लग्नादिस्थग्रहफलकथनम् । वैधव्यादियोगकथनम् । सहमरणयोगकथनम् । कुलटायोगकथनम् । बन्ध्यादियोगकथनम् । प्रव्रज्यायोगकथनम् । मृतापत्यादियोगकथनम् । नृत्यगीतादियोगकथनम् । पतिद्वेषयोगकथनम् । शुभाशुभयोगकथनम् । ब्रह्मवादिनीयोगकथनम् । शिल्पादियोगकथनम् । निधनस्थानफलकथनम् । गङ्गामरणादियोगकथनम् । मृत्युज्ञाननिरूपणम् । जलमृत्युयोगादिकथनम् । मृत्युस्थानज्ञाननिरूपणम् । जन्मसमये मरणसमये वा मोक्षगतिनिरूपणम् । देवलोकादिगतिनिरूपणञ्च । इति क्रम ।

---

**No. 121.** जातकसारः, By गोविन्दानन्दः. Substance, country-made paper, 17×3½ inches. Folia, 9. Lines, 8 on a page. Extent, 324 çlokas. Character, Bengali. Date, ? Place of deposit, Brāmhaṇamaṇḍali *via* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

नत्वा सूर्य्यपदद्वन्द्वं गोविन्दानन्दशर्म्मणा ।
क्रिया जातकसारोऽयं क्रियते सद्विदां मुदे ॥
प्राचीनसंज्ञया सर्व्वं प्रकाशीक्रियते मया ।
संज्ञाध्यायमतो वक्ष्ये फलं पश्चात् वितन्यते ॥
देहो द्रव्यपराक्रमौ सुखसुतौ कलत्रं मृतिसंज्ञं ।
राज्यपदं क्रमेण गदितं लाभव्ययौ लग्नतः । इत्यादि

× × × ×

× × × ×

**End.** इत्थं नानाविकारानामपि जनुषि तथा वेचराणां युतेश्च
नाथं श्रीरामसेनादनु मनुपयुक् भार्गवो राजपूज्यः ॥
जातस्य लग्नभवनादयमं प्रकल्प्य नानाश्रयं जातकवद्विचिन्त्यं ।
सर्व्वेषु भावेषु विशेषयुक्ता तेषां सदा दुष्टमदुष्टमार्य्यैः ॥

**Colophon.** इति सर्व्वभावाध्यायः ॥ श्रीदुर्गा शरणम् ।

**विषयः** । अत्र प्रथमं प्राचीनसंज्ञादिकथनम् । ततः शयनांशादिनिरूपणम् । सर्व्वभाव-साधारणफलादिनिरूपणम् । लग्नभावफलादिनिरूपणम् । सर्व्वभावनिरूपणञ्च ।

---

**No. 122.** **जीर्णमञ्जरी.** Substance, country-made paper, $16\frac{1}{2} \times 3$ inches. Folia, 5. Lines, 4 on a page. Extent, 72 çlokas. Character, Bengali. Date, ? Place of deposit, Sonārañga, District Dhākā, Bābu Prabhātacandra Sena. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमो गणेशाय ।
नारिकेलफलेषु तण्डुलमथ क्षीरं रसाले हितं
जम्बीरोत्थरसाद् घृते समुचितः सर्पिस्तु मोचाफले ।
गोधूमेषु च कर्कटी हिततमा मांसात्यये काञ्जिकं
नागरङ्ग (?) गुडभक्तणञ्च कथितं पिण्डीरके कोद्रवाः ॥
पिष्टा द्वे सलिलं पियालफलजे पथ्यः चिता माषजे
खण्डं क्षीरं भवेत्भक्षमुचितं कोष्णाम्बुकोल......... । (?)
मत्स्ये चूतफलञ्च जीर्णशमनं मध्वम्बुपानात्यये
तैलं पुष्करजं कटुप्रशमनं शेषास्तु बुद्ध्या जयेत् ॥ इत्यादि ॥

**End.** शीतोदकं नस्यजरोगहारि नारीपयश्चाञ्जनरोगनाशि ।
उष्णोदकं धूमगदे प्रशस्तं धात्रीफलोत्थोऽतिविरेचनेषु ॥
स्नानस्य मांसं श्रमजेऽनुकूलं प्रभातसुप्तिः सुरतावसाने ।
क्षीरो......सैन्धवसाधितञ्च वामाकमुक्तं सुरतातिरेके ॥
श्रवणपूरणजे तिलतैलतः श्रवणपूरणमेव सुखं विदुः ।
करणजेषु गदेषु च कारयेत् करणमात्रकजाद्रवजं पुनः ॥

**Colophon.** इति जीर्णमञ्जरीग्रन्थः समाप्तः ॥

विषयः । केषु केषु द्रव्येषु कानि कानि द्रव्याणि जीर्णतां गच्छन्ति भवन्तीत्यस्य निरूपणम् ॥

---

**No. 123.** ज्ञानतन्त्रम् . Substance, country-made paper, 15×4 inches. Folia, 16. Lines, 5 on a page. Extent, 286 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Thānā Rāṇīnagar, Paṇḍita Kālīdhana Vidyābhūṣaṇa. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

कैलासशिखरे रम्ये गन्धर्व्वगणसेविते ।
ज्ञानोर्द्ध्वतःस्थिता देवी पृच्छति स्म नगात्मजा ॥
गणेश नन्दि-चन्द्रेश भूतनाथ महेश्वर ।
अनेकतन्त्रमन्त्राणां प्रकाशोद्धरणानि च ॥
भेदश्च कीलकश्चैव शापाद्युद्धार एव च ।
त्वत्प्रसादान्मया नाथ ज्ञातं तत्त्वं न संशयः ॥
नानातन्त्रेषु देवेश विद्यार्णवमयी स्मृता ।
इदानीं श्रोतुमिच्छामि मन्त्राङ्गनामनिर्णयम् ॥
मन्त्रचक्रान्तकं नाम बहुधा मयि सूचितम् ।
यद्यस्ति निर्ज्जने देव यदि स्नेहोऽस्ति मां प्रति ।
तद्वदस्व महादेव नात्र कार्य्या विचारणा ॥
नो चेत् सत्यं वदाम्यद्य पुरस्कृत्य तवाग्रतः ।
प्राणत्यागं करिष्यामि सत्यं सत्यं न संशयः ॥
ईश्वर उवाच ।
साधु पृष्टं त्वया भद्रे यन्मन्त्रं मनसि स्थितम् ।
योषिच्चपलभावत्वात् पुरा नोक्तं त्वयि प्रिये ॥
इदानीं स्थिरतां ज्ञात्वा कथयामि वरानने ।
न प्रकाश्यं महादेवि कदाचिदपि पार्व्वति ॥
प्रकाशिते महामन्त्रे सिध्यन्ति सिद्धयस्तव ।
पुनरुक्तं मया देवि न वक्तव्यं सुनिश्चितम् ॥
विना जपेन होमेन पूजया वा जपान्विते ।
येन विज्ञानमात्रेण मन्त्रसिद्धिः प्रजायते ॥ इत्यादि ।

**End.** मन्त्राश्च वाचका ज्ञेया वाच्यत्वं मनुनोदितम् ।
मन्त्रसङ्केतमज्ञात्वा यो जपेत् कालिकां पराम् ॥
शतलक्षप्रजप्तोऽपि मन्त्रसिद्धिर्न जायते ।
मन्त्राः पराङ्मुखा यान्ति चापदश्च दिने दिने ॥
जपपूजादिकं सर्व्वमभिचाराय कल्प्यते ।
अन्ते निरयमाप्नोति सत्यं सत्यं न संशयः ॥

**Colophon.** इति सर्व्वतन्त्रोत्तमे ज्ञानतन्त्रे कालीमन्त्राङ्गनिर्णयो नाम सप्तमः पटलः ।

विषयः । अथ प्रथमं शिवाशिवयोः संवादेन तत्त्वज्ञानस्वरूपतत्प्राप्त्युपायादिकथनम् । तत्र एकाक्षरादिमन्त्रकथनम् । मन्त्रोद्धारसाधनकथनम् । महाविद्यास्वरूपादिकथनम् । तत्र चक्र-संस्थानादिकथनम् । बालामन्त्रनिरूपणम् । भैरवाङ्गनिर्णयः । भुवनेश्वरीविद्यानिरूपणम् । तन्म-न्त्राङ्गनिरूपणम् । त्रिवर्गसाधनीविद्याकथनम् । त्रिपुराविद्याकथनम् । अन्नपूर्णामन्त्राङ्गनिर्णयः । महात्रिपुरसुन्दरीमन्त्राङ्गनिर्णयः । कालीमन्त्राङ्गनिर्णयश्च ।

---

**No. 124.** ज्ञानतन्त्रम् . (१० म परिच्छेदः) Substance, country-made paper, 19 x 5 inches. Folia, 6. Lines, 9 in a page. Extent, 388 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahar, Khāsvāṭī, Paṇḍita Mahādeva Bhaṭṭācāryya. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।
नारद उवाच ।
यच्चयोक्तं महादेव विस्तारेण श्रुतं मया ।
इदानीं श्रोतुमिच्छामि संक्षेपात् गुरुलक्षणम् ॥
दीक्षाकालसमकालं च तथा चैव पुरश्क्रियाम् ।
मालाभिधानं देवेश नित्यश्च कथय प्रभो ॥ इत्यादि ।

**End.** चतुर्थाश्रमिणो विप्राः पूजा वामरताः सदा ।
गार्हस्थ्याश्रमिणो विप्राः पूजा दक्षरताः सदा ॥ (?)
ब्राह्मणस्तु सुरां पीत्वा ब्राह्मण्यादेव हीयते ।
तस्मात् गृहस्थो विप्रस्तु दक्षिणाचारपूजनम् ।
कुर्य्यात् तथा विना वेश्यां स्त्रियं वा न पूजयेत् ॥

**Colophon.** इति शिवनारदसम्वादे ज्ञानतन्त्रे दशमः परिच्छेदः ।

विषयः । ज्ञानतन्त्रस्य दशमपरिच्छेदेऽस्मिन् प्रथमं गुरुनिरूपणम् । ततो मन्त्रसिद्ध्युपायादिनिरूपणम् । मुक्तिनिरूपणम् । पूजाहोमादिनिरूपणम् । प्रणवभेदनिरूपणम् । न्यासोद्धारादिनिरूपणञ्च ।

---

**No. 125.** ज्ञानभैरवीतन्त्रम् . ( षष्ठः पटलः ) Substance, country-made paper, 12×3 inches. Folia, 2. Lines, 6 on a page. Extent, 27 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamansiñha, Yaçodal, Paṇḍita Kālicandra Bhaṭṭācāryya. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । अथ ज्ञानभैरवीतन्त्रम् ।
शृणु देवि प्रवक्ष्यामि रहस्यं त्रिजटोत्तमम् ।
परं ब्रह्ममयं देवि अद्भुतं वरवर्णिनि ॥ इत्यादि ।

**End.** ब्रह्मचिन्तामणौ तन्त्रे पूर्व्वमुक्तं विशेषतः ।
अधुना कथितं रम्यं रहस्यं त्रिजटात्मकम् ।
पठनात् सर्व्वपापेभ्यो मुक्ता भवति मानवाः ॥

**Colophon.** इति ज्ञानभैरवीतन्त्रे षष्ठः पटलः ।

विषयः । त्रिजटादेव्या रहस्यादिनिरूपणम् ।

---

**No. 126.** ज्ञानमार्जनीतन्त्रं ( योगशास्त्रम् ) . Substance, country-made paper, 10×2½ inches. Folia, 12. Lines, 7 on a page. Extent, 168 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Vikrampur, Teghare, Paṇḍita Içvaracandra Vidyālañkāra. Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ।
नमामि यक्षपुरुषं परं ब्रह्म च सर्व्वदा
शब्दस्पर्शरूपरसगन्धाकारविवर्ज्जितम् ॥
साधकानान्तु चित्तानामेतद्वेदन्तु तद्बुधैः ।
सृष्टिपालनसंहारं कुरुते त्रितयात्मकम् ॥
प्रथमं सर्व्वलोकानां सर्व्वराज्यसुखप्रदम् ।
प्राची + + + स्थापनाय शिवाकारत्वनामयम् ॥

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
पप्रच्छ पार्व्वती देवी भुक्ति ज्ञानं महेश्वर ॥
श्रीदेव्युवाच ।
कुतः शुद्धिर्भवेद्देव कथं शुद्धिर्विनश्यति ।
ब्रह्मज्ञानं कथं देव शुद्धिसंचारवर्ज्जितम् ॥ इत्यादि ।

**End.** अनुपम्यं निराधारं शब्दं तस्य तदुच्यते (?) ।
अचलं निर्म्मलञ्चैव शून्यं वापि निरञ्जनम् ॥
वेदान्तसार + + + समाप्ते शिवभाषितम् ।
सिध्यन्ति सर्व्वयोगानां नात्र कार्य्या विचारणा (?) ॥

**Colophon.** इति योगशास्त्रे उमामहेश्वरसंवादे ज्ञानसाङ्कलीतन्त्रं समाप्तम् ॥

**विषयः ।** शिवाशिवयोः संवादेन ब्रह्मज्ञानोपायकथनम् । अष्टादशविद्याकथनम् । शाङ्करीविद्ययो र्गुप्तत्वकथनम् । अध्यात्मविद्यास्वरूपादिकथनम् । पिण्डादिसिद्धान्तकथनम् । शारीरतत्त्वकथनम् । शरीरे चन्द्रसूर्य्यादीनां क्रमेण स्थाननिरूपणम् । आहारनिद्रासुषुप्त्यादि-कारणकथनम् । नव नव मनसः कर्त्तृत्वकथनम् । शिवशक्तिस्वरूपादिकथनम् । षट्चक्र-निरूपणम् । त्रिगुणत्रिदेवतादितत्त्वकथनम् । ज्ञानदयाशान्तिप्रभृतीनां पितृमातृभगिनीत्वादि-रूपकथनम् । मायामोहस्वरूपादिकथनम् । ब्रह्मज्ञानस्वरूपादिकथनम् । अथ योगलक्षणादि-कथनम् । संयमादीनामावश्यकत्वकथनम् । शून्यलक्षणब्रह्मलक्षणादिकथनञ्च ॥

---

**No. 127.** **ज्ञानलक्षणाविचारः.** Substance, country-made paper, 18 × 3 inches. Folia, 4. Lines, 8 on a page. Extent, 168 çlokas. Character, Bengali. Date, Sk. 1639. Place of deposit, Brāmhaṇamaṇḍali *viâ* Bārasāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः । सप्रकारकज्ञानस्योपनायकत्वमते ज्ञानलक्षणाया घटत्वप्रकारक-प्रत्यक्षं प्रति सप्रकारकघटत्वज्ञानत्वेन न हेतुता । अन्यांशे सप्रकारकात् घटत्वनिर्व्विकल्पकात् घटोपनीतभानापत्तेः । इत्यादि ।

**End.** तादृशबोधे च विशेषणतावच्छेदकप्रकारकज्ञानहेतुतया निर्व्विकल्पकस्य सम्मतेऽपि द्वितीयक्षणेऽपि प्रत्यक्षापत्तिर्न सम्भवति विशिष्टबुद्धावरणे ताका-रणप्रकारस्तु स्वयमेव विचिन्त्यतां विशेषितच्छेदमधिकमन्यत्र इति कृतं प्रपञ्चेन ॥

**Colophon**. इति ज्ञानलक्षणाया विचारः सम्पूर्णः ।

चन्द्रमन्मथशराब्धिकाङ्गिका-

क्षोन्दुसम्मितशकीयवत्सरे ।

× × × ×

× × × × ॥

**विषयः** । न्यायशास्त्रीयज्ञानलक्षणाया विचारः ।

---

**No. 128. ज्ञानद्वयरहस्यम्** । Substance, country-made paper, $18\frac{1}{2} \times 3$ inches. Folia, 6. Lines, 8 on a page. Extent, 402 çlokas. Character, Bengali. Date, ? Place of deposit, Dhānukā, Post office Pālaŋ, District, Pharidpur, Paṇḍita Kālikiŋkara Vidyābhūṣaṇa. Appearance, old Prose. Generally correct.

**Beginning**. ॐ अनुमितिं प्रति साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारतानिरूपितपक्षविशेष्यता-
शालिज्ञानत्वरूपविशिष्टपरामर्शत्वेन न हेतुता किन्तु व्याप्यतावच्छेदकप्रका-
रकव्याप्तिज्ञानत्वेन व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन च हेतुता
द्वयं एवं धूमो वह्निव्याप्यो धूमवान् पर्व्वत इत्याकारकज्ञानान्वयात् तथा-
विध.........इत्यनुमितिरुत्पद्यते न केवलं विशिष्टपरामर्शादेव अतएव
धूमो वह्निव्याप्यालोकवान् पर्व्वत इत्याकारकज्ञानद्वयादनुमित्यापत्तिः ।
धूमत्वालोकत्वयोरुभयोरेव व्याप्यतावच्छेदकत्वादिति तु न शङ्कनीयं यतो
व्याप्यतावच्छेदकत्वेन धूमत्वादिकं कारणतावच्छेदककोटौ निवेश्य न कार्य्य-
कारणभावं कल्पयामः । किन्तु विशिष्टधूमलिङ्गकानुमितिं प्रति धूमत्वाव-
च्छिन्नविशेष्यकव्याप्तिप्रकारकज्ञानत्वेन पर्व्वतत्वावच्छिन्नविशेष्यकधूमत्वावच्छिन्न-
प्रकारकज्ञानत्वेन चेति नोपदर्शितापत्तिप्रसङ्गः ॥ इत्यादि ।

**End**. शाब्दबोधप्रतिबन्धकतायां विशिष्ट...............उत्तेजकत्वापेक्षया तादृश-
प्रतिबध्यप्रतिबन्धकभावस्यैव कल्पयितुमुचितत्वादिति चेदत्वेन तादृशरीत्या उप-
दर्शितानुमितिशाब्दबोधप्रतिबन्धकत्वाधिक्यपरीहारः । तादृशानुमितिशाब्दबोधाः
प्रतिबध्यतावच्छेदकगौरवं दुर्व्वारमेव तथापि मन्मते तादृशशाब्दबोधाः
पर्व्वतविशेष्यकानुमित्यन्यवह्निज्ञानत्वमेव प्रतिबध्यतावच्छेदकं घटप्रत्यक्षादेस्तत्-
प्रतिबध्यतावच्छेदकानाक्रान्तत्वेऽपि क्षतिविरहात् । भवन्मते तु तत्प्रत्यक्षादि-
साधारणवह्निमत्पर्व्वतवृत्तिवह्निव्याप्यधूमप्रकारतानिरूपितधूमवत् पर्व्वतत्वा-

वच्छिन्नविशेष्यताशाब्दानुमित्यन्यज्ञानत्वादेरेव तथात्वमुपेयं । केवलशाब्दानुमि-
त्यन्यज्ञानत्वस्य तथात्वे समानविषयकशब्दबोधादौ व्यभिचारप्रसङ्गात् । एवञ्च
शब्दानुमितिसामग्रीप्रतिबन्धकतायां ..............................

...........................................................................

एकज्ञानविशिष्टापरज्ञानविशेषत्वप्रयुक्तमुपदर्शितगौरवं । मीमांसकमते शाब्द-
त्वीयतादृशानुमितिसामग्रीनियतोपदर्शितसामग्रीणामनन्तानां प्रतिबध्यता-
वच्छेदकगौरवमिति मीमांसकमतमेव साधीयः ॥

**Colophon.** इति ज्ञानद्वयरहस्यम् ॥

**विषयः** । एककालीनं ज्ञानद्वयं सम्भवति न वेति विचारः ।

---

**No. 129.** ज्ञानार्णवः । Substance, country-made paper, 17 × 5 inches. Folia, 50. Lines, 8 on a page. Extent, 1,764 çlokas. Character, Bengali. Date, ? Place of deposit, Mājpāḍā, District Dhākā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमः परदेवतायै ।

श्रीदेव्युवाच ।

गणेशनन्दिचन्द्रेशसुरेन्द्रपरिवारित ।
आनन्दज्ञ ज्ञानाधीश किं त्वया जप्यते सदा ।
अक्षमालेति किं नाम संशयो मे हृदि स्थितः ॥
शब्दातीतं परं ब्रह्म त्वमेव परमार्थवित् ।
कथयानन्दनिःष्यन्दसान्द्रमानसनिश्चयात् ॥

ईश्वर उवाच ।

कथयामि वरारोहे यन्मया जप्यते सदा ।
अकारादि-क्षकारान्ता मातृकावर्णरूपिणी ॥
चतुर्दशस्वरोपेता बिन्दुत्रयविभूषिता ।
चतुर्थारेव देवेशि बिन्दुनैकेन मण्डिता ॥
विसर्गेण च बिन्दुभ्यां संयुताभ्यां विराजिता ।
एतामक्षमालाख्यां शक्तिरूपं महेश्वरि ॥
अकारादि-क्षकारान्ता वर्णास्तु शिवरूपिणः ।
अक्षमालात् सदानन्दे मोक्षारचिता ततः ॥

उच्चरेत् स्वरसंभिन्नांस्तदा देवि न संशयः ।
पञ्चाशद्वर्णरूपेण शब्दाख्यं ब्रह्म उच्यते ॥
अकारः प्रथमो देवि क्षकारोऽन्तिम उच्यते ।
अक्षमालेति विख्याता मातृकावर्णरूपिणी ॥
शब्दब्रह्मस्वरूपेयं शब्दातीतन्तु कथ्यते ।
शब्दातीतं परं धाम गचनारचितं सदा ।
आत्मस्वरूपं जानीहि हंसस्तु परमेश्वरः ॥ इत्यादि ।

**End.** नवचक्रे स्थिता या च चक्रेशी नवकाय च ।
रश्मिवृन्दाय देवेशि प्रत्येकं तारपूर्व्वकम् ॥
पवित्रकं समभ्यर्च्य गुरुं सन्तोषयेत् प्रिये ।
स्वर्णालङ्कारवस्त्रैश्च नानाधनसमुच्चयैः ।
तत्प्रसादपवित्रञ्च धारयेत् तदनन्तरम् ॥
तदन्तहोमं निर्व्वर्त्य पवित्रेण समर्चयेत् ।
कुमारीपूजनं कुर्य्यात् ततः सुवासिनीगणम् ॥
योगिन्यो योगिनश्चैव ब्राह्मणा विविधा नराः ।
पूज्या हि परमेशानि यदीच्छेत् सिद्धिमात्मनः ॥

**Colophon.** इति श्रीज्ञानार्णवे नित्यातन्त्रे पवित्रार्पणविधिर्द्वाविंशतितमः पटलः ॥
सम्पूर्णोऽयं ग्रन्थः ।

**विषयः** । अथ प्रथमं अक्षमालानिर्णयः । ततः त्रिपुराया मन्त्रभेदादिकथनम् । त्रिपुरा-बालामन्त्रादिकथनम् । बालान्यासादिकथनम् । त्रिपुरासाधनविधिः । तत्र नाथवीनिरूपणादिकम् । सन्ध्यादिनिरूपणम् । अन्तर्यागविधिः । चक्रोद्धारविधिः । तद्ध्यानकथनम् । मण्डल-पूजादिनिरूपणम् । मुद्रालक्षणादिकथनम् । त्रिपुरेश्वरीक्रमविधिः । कुमारीक्रमविधिः । यजन-बलिदानादिविधिः । पञ्चसिंहासनविधिः । तत्र प्रथमपञ्चसिंहासनविधिः । द्वितीयपञ्चसिंहा-सनविधिः । महात्रिपुरसुन्दरीद्वादशविवरणम् । षोडशाक्षरीश्रीविद्याविधिः । तन्न्यासपूजा-विधिः । तदभ्यर्चनविधिः । श्रीचक्रादिप्रयोगकथनम् । पञ्चामृत-पीठकथनम् । षोढान्यासादि-विधिः । अन्तर्यागबहिर्यागविधिः । तत्र समाधिनिरूपणम् । रुद्राक्षमालादिविधिः । तत्र तत्र प्रत्येकं फलश्रुतिकीर्त्तनञ्च । रत्नपूजाविधानम् । त्रिपुराबीजसाधनविधिः । त्रिपुराजपहोम-विधानम् । तत्र कुण्डविधिः । ग्रामहोमविधिः । कुमारीपूजाविधिः । दूतीयजनविधिः । तत्र जीवानां जातिभेदादिकथनम् । दीक्षाविधिः । पवित्रार्पणविधिश्च ।

**No. 130.** **ज्ञापकावली,** By **हरगोविन्दः.** Substance, country-made paper, 11 × 2¾ inches. Folia, 21. Lines, 8 on a page. Extent, 829 çlokas. Character, Bengali. Date, Sk. 1763. Place of deposit, Telivini *viâ* Gadvetâ. Pandita Candranâtha Cudâmani. Appearance, new. Prose. Generally correct.

Beginning श्रीरामः ।

श्रीमत्पादाम्बुजमाश्रित्य भवाभावविभेदकम् ।
अस्विष्ट पातु मे स्वान्त त्यक्तान्यत् पेयमुत्तमम् ॥
नत्वा श्रीगुरुचरणं शरणीकृतहरगोविन्दचरणः ।
ज्ञापकवृन्दं तनुते सुबन्तपादे यथाधिषयम् ॥

लुक् ॥ लुगिति अयुक्तं कार्यं नाम एतच्च लुकि औपिश्लिकस्य चेति निर्देशेन बोधितं अन्यथा लुक्षतेः क्विबन्तस्य रूपत्वे लुगीति स्यात् । चिह्नार्थस्येति चिह्नं चिह्नं ज्ञानं तद्वेवार्थः प्रयोजनं कार्य्यं यस्य स चिह्नार्थः तस्य ज्ञानकारणस्य इत्यर्थः एतेन अमादिप्रत्ययादीनां अकारादेः अमादिज्ञानं प्रति कारणत्वात् लुग्विधीयते ॥ इत्यादि ।

End. अनादिष्टस्यैव स्यादेर्ग्रहणं तेनादेशेऽग्रत इत्यत्र न स्यात् एवं ङेरिदृदित्यत्र सुपोऽनुवृत्तिर्ज्ञापकत्वेन बोध्या ।
गुरुपदिष्टज्ञानाध्वा × × × × ।
उत्तीर्णो हरगोविन्दो निर्माय ज्ञापकावलीम् ॥

Colophon इति सुबन्तज्ञापकावली समाप्ता ॥ शकाब्दाः १७६३ ॥

विषयः । सुबन्तपादस्य संक्षेपेण व्याख्यानम् ॥

---

**No. 131.** **ज्ञेयार्थसारः,** By **कृष्णः.** Substance, country-made paper, 19 × 3 inches. Folia, 159. Lines, 5 on a page. Extent, 5,257 çlokas. Character, Bengali. Date, Sk. 1666. Place of deposit, Pañcasâra, District Dhâkâ, Pandita Mahendracandra Kâvyatîrtha. Appearance, old. Prose and verse. Generally correct.

**Beginning.** रामः शरणम् ।

यं ब्रह्मा गिरिशेन्द्रदेवऋषयो वेदोपवेदादिभि
र्मुक्तैर्दिव्यपदैः स्तुवन्ति सभयं मायावनीमर्त्त्यकम् ।

विद्याद्याखिलशक्तयोऽष्टविभवा सत्यन्ययखण्डात्मिना
स्वं लब्धो विधिमीति तारकमसौ ग्रंथार्थसारं नमन् ॥
यस्याग्रे लज्जमाना निवसति सगुणा स्वेच्छयाऽजा गृहीता
सोऽध्यात्मां यत्र विश्वं समुदयविलयं याति येनानुविद्धम् ।
यस्यानामन्दभूतिर्गमयति लघुतां ब्रह्मलोकाधिपत्यं
तादृग् दुःखोर्मिमालाकुलभवजलधेस्तारकं यस्य नाम ॥
स्वामिना लिखितं यद्द्वयमानाख्यानेषु निश्चितम् ।
तदेवैकत्र संगृह्य ग्रंथसारो निरूप्यते ॥
येषां स्त्रीयदृगादृष्टौ नास्त्येव परिवेदना ।
तेषां नातिप्रियो ग्रन्थ निष्क्रियस्येव मन्त्रवाक् ॥
भयापन्नानेषु वियोगरोगाद्यनन्तदुःखां विदुषो दशां स्वाम् ।
ग्रन्थस्य नूनं भवितैष मोदस्तन्निदाघतप्तस्य यथा हिमाम्भः ॥
येन क्रमेण यद्वाच्यं तन्निर्घण्टमनुच्यते ।
प्रथमं शास्त्रसाफल्यं ततो दुःखपरम्परा ॥
तन्नाशौ सुखलाभे च उपायानां प्रदर्शनम् ।
चान्द्रमाष्यां लक्षणानि प्रकाराचारनिर्णयः ॥
तदपत्ते भ्रष्टतायां तद्धर्मातिक्रमे तथा ।
प्रायश्चित्तप्रमाणानि सन्न्यासेऽप्यधिकारिता ॥
भक्तिज्ञानापरीपाके भ्रष्टत्वे मरणेऽपि वा ।
हृत्पद्मगोचरं सिद्धिः प्रायश्चित्तस्य × × × ॥
चातिक्रमेऽथ पातित्यं तीर्थादिषु फलाफलं ।
तत्र देशादिशुद्धिश्चाश्रद्धा नास्तिकता व्रते ॥
तथा हरिपराङ्मुखं फलं × × × केनचित् ।
सर्व्वाङ्गविकलस्यापि फलं पातित्यखण्डनम् ।
भगवद्भक्तिमाहात्म्यात् तच्छास्त्रेषार्थवादता ॥ इत्यादि ।

**End.** चाकाङ्क्षायां स्थितायामेकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेणान्यत्रापि कल्प्यत इति न्यायाद्व्यवस्था । भक्तानान्तु भक्तेः सातत्ये चौत्कट्ये वा तद्देशान्ते तत्क्षणे वा कायव्यूहेन वा सुखदुःखौत्कट्येन प्रारब्धाप्रारब्धभोगो-त्तरं तदभावे ब्रह्मपुराणोक्तरीत्या मोक्ष इति । चन्द्रदेवोपासकानामप्येवम् ।

**Colophon.** श्रीरामः । शकाब्दाः १६६६ ॥

विषयः। अथ प्रथमं शास्त्राणां उत्पत्तिकथनम्। तेषां प्रामाण्यादिकथनम्। अदृष्टार्थ-दृष्टार्थभेदात् तेषां द्वैविध्यादिनिरूपणम्। वेदान्तशास्त्रवैशेषिकादिशास्त्राणां समन्वयादि-कथनम्। अथ जीवस्वरूपादिनिरूपणम्। जीवन्मुक्तिविवेचनम्। सर्व्वेषां शास्त्राणां वास्तवैक-मतत्वनिरूपणम्। आस्तिक्यादिस्वरूपकथनम्। शब्दादिलक्षणकथनम्। कार्य्यकारणयोः स्वरूपादिकथनम्। वैधहिंसाविवेचनम्। वर्णाश्रमधर्म्मनिरूपणम्। अथ प्रवृत्तिमार्गस्य दुःख-जनकत्वकथनम्। अथ दुःखहानिसुखावाप्त्युपायकथनम्। तत्र निवृत्तिमार्गप्रशंसादिकथनम्। आश्रमलक्षणादिकथनम्। आश्रमाणामावश्यकत्वकथनम्। अनाश्रमताजनितपापप्रायश्चित्तकथनम्। सन्न्यासग्रहणान्मुक्तिरिति निरूपणम्। कलौ दीर्घकालं ब्रह्मचर्य्यवानप्रस्थाश्रमयोः प्रतिषेध-कथनम्। सन्न्यासाधिकारितादिकथनम्। भक्तिज्ञानयोर्माहात्म्यादिकथनम्। नित्यकर्म्मा-करणादौ प्रायश्चित्तकथनम्। तदतिक्रमे पातित्यादिनिरूपणम्। तीर्थविधि-तत्तत्फलाफल-कथनम्। भगवद्भक्तिमाहात्म्यादिकथनम्। भागवतधर्म्मप्रतिपादकश्रुत्यादिशास्त्राणां यार्थे-वादत्वशङ्केति निरूपणम्। अपराधक्षालनोपायकथनम्। भक्तस्य दशजन्मोत्तरं कृतार्थता-कथनम्। शिवादीनामपि वैष्णवत्वस्थापनम्। अथ उपास्यदेवतानिरूपणम्। सर्व्वेषां देवानां भगवदंशतादिकथनम्। भगवद्भक्तिस्वरूपादिकथनम्। विस्तरतो भक्तियोगनिरूपणम्। सत्त्वादिगुणधर्म्मकथनम्। प्राकृतिकसृष्ट्यादिनिरूपणम्। सगुणनिर्गुणब्रह्मनिरूपणम्। सत्यादि-लक्षणकथनम्। अणिमादिलक्षणकथनम्। योगसिद्धिलक्षणादिकथनम्। एकानेकजीव-वादकथनादिकम्। लिङ्गदेहादिनिरूपणम्। तीर्थादिमृत्युफलकथनम्। मरणोत्तरगतिनिरू-पणञ्च॥ इति शम्।

---

**No. 132.** **ज्योतिःसागरसारः**, By **विद्यानिधिः**. Substance, country-made paper, 16 × 2½ inches. Folia, 26. Lines, 8 on a page. Extent, 764 çlokas. Character, Bengali. Date, Sk. 1670. Place of deposit, Bharākor, District Dhākā, Bābu Dvārikānātha Dāsa. (Vaidya.) Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।
जगदीशं रविं नत्वा लोकानुग्रहकारकम्।
ज्योतिःसागरसारोऽयं श्रीविद्यानिधिनोच्यते॥
रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः।
एतेषां नामतो वाराः सप्तैते कथिताः क्रमात्॥

शुक्रेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः ।
भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि ॥
नृपाभिषेको नृपतिप्रयाणं
नृपस्य कार्य्यं नृपदर्शनञ्च ।
यच्चाग्निकार्य्यं भुवि किञ्चिदुक्तं
सर्व्वं + मादित्यदिने प्रशस्तम् ॥
भेदादिघातं नगरे पुरे वा
सेनापतिश्च + तथैव राज्ञाम् ।
व्यायामशास्त्रं व्यसनानि चौर्य्यं
कुर्य्याद्दिने भूमिसुतस्य सर्व्वम् ॥ इति वाराः । इत्यादि ।

End. राज्याग्निर्जन्मभे शौर्य्ये सुखं दक्षे जयो गणे ।
नेत्रे भृतिः श्रियो वक्ते पादे पीड़ां विनिर्दिशेत् ॥

Colophon. इति ज्योतिःसागरसारोऽभूत् समाप्तः ॥
प्रणम्य गौर्य्याश्चरणारविन्दं गुरून् गणेशं जनकञ्च देवान् ।
खसप्तषट्चन्द्रगते शकाब्दे लिलेख पुस्तीं स्वकमध्ययनार्थम् ॥ (?)

विषयः । शुभकर्म्मसु वारनिरूपणम् । वारवेलादिनिरूपणम् । कालवेलानिरूपणम् । अमृतयोगादिनिरूपणम् । पापयोगरिष्टादिनिरूपणम् । नक्षत्रदग्धिपादिनिरूपणम् । उत्पातादियोगनिरूपणम् । यमघण्टादियोगकथनम् । राशिनक्षत्रयोगविभागकथनम् । लग्नादिनिरूपणम् । चन्द्रशुद्धिताराशुद्ध्यादिकथनम् । उद्वाहादिसंस्कारेषु रव्यादिशुद्धिकथनम् । पञ्चस्नानादिकर्म्मविवेकः । विवाहयोग्यमासतिथिनक्षत्रादिनिरूपणम् । नववध्वागमनविधिः । द्विरागमनविधिः । प्रथमरजोदर्शने शुभाशुभनिरूपणम् । उपगमनविधिः । जातकनिरूपणम् । नामकरणान्नप्राशनचूड़ोपनयनादिकालनिरूपणम् । अनध्यायकालनिरूपणम् । विद्यारम्भकालनिरूपणम् । नववस्त्रपरिधानकालनिरूपणम् । नवशय्यादिभोगकालकथनम् । आरोग्यस्नानविधिः । नौकागठनादिकालनिरूपणम् । वीजवपनादिकालकथनम् । धान्यच्छेदनकालकथनम् । अम्बुवाचीकालनिरूपणम् । गृहनिर्म्माणयोग्यभूमिनिरूपणम् । गृहस्थाननिरूपणम् । गृहारम्भतत्प्रवेशादिकालकथनम् । नागशयनसमयनिरूपणम् । यात्राकालकथनम् । शयनचक्रादिनिरूपणञ्च । इति शम् ।

---

**No. 133. ज्योतिःसारः,** By **राघवेन्द्रशर्म्मा.** Substance, country-made paper, 17×1 inches. Folia, 44. Lines, 3 on a page. Extent, 783 çlokas. Character, Bengali. Date, ? Place of deposit, Phursāil, District Dhākā, Paṇḍita Jagaccandra Sārbbabhauma. Appearance, tolerable. Prose and verse. Generally correct

**Beginning.** ॐ नमः सवित्रे ।

नत्वा चन्द्रार्थमश्रान्तायाश्रामनमीपथम् ।
तन्यते राघवेन्द्रेण ज्योतिःसारो बुधप्रियः ॥
सितेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः ।
भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि ॥
रवेर्वर्ज्यं चतुःपञ्च सोमे सप्तद्वयं तथा ।
कुजे षष्ठं द्वयं चैव बुधे पञ्चतृतीयकम् ॥
गुरौ सप्ताष्टकञ्चैव त्रिचत्वारि च भार्गवे ।
शनावाद्यञ्च षष्ठञ्च शेषञ्च परिवर्ज्जयेत् ॥ इत्यादि ।

**End.** शनार्क्ककुजयोर्वारे यस्य जन्मदिनं भवेत् ।
चन्द्रयोगसंप्राप्ते विघ्नस्तस्य पदे पदे ॥
अत्र सौरारयोर्द्दिने मुक्ता देयाश्चन्द्रे तु काञ्चनमिति प्रत्येकदोषशान्ति-
दर्शनात् शनार्क्ककुजयोरित्यत्रापि वाक्यद्वयं प्रतीयते ॥

**Colophon.** इति राघवेन्द्रशर्म्मकृतो ज्योतिःसारः समाप्तः ॥

**विषयः ।** वारवेलादिनिरूपणम् । कालवेलानिरूपणम् । नन्दादिनिरूपणम् । मास-दग्धादिनिरूपणम् । दिनदग्धादिनिरूपणम् । रिक्तादिनिरूप । नक्षत्रराश्यादिकथनम् । कर्म्मविशेषे विहिताविहितनक्षत्रादिनिरूपणम् । करकचादियोगकथनम् । चूडाविवाहयात्रादि-दिननिरूपणम् । वस्त्रवर्मादिनिरूपणम् । जातकनिरूपणम् । अथ चौरकर्म्मदिनकथनम् । विद्यारम्भादिदिनकथनम् । गृहारम्भादिदिनकथनम् । देवतागठनादिदिनकथनम् । पुष्करि-ण्यारम्भदिनकथनम् । अथ नक्षत्रादिभेदेषु ज्वरादिभोगकालकथनम् । राजदर्शनादिदिन-कथनम् । योगिन्युदयादिविवेचनम् । यात्रायां शुभाशुभदर्शनफलकथनम् । दिनचर्य्यादि-कथनम् । नवचन्द्रदर्शनादिविधिश्च ॥

**No 134**. ज्योतिःसारसंग्रहः, By हृदयानन्दविद्यालङ्कारः. Substance, country-made paper, $14\frac{1}{2} \times 3$ inches. Folia, 40 (without 14–20). Lines, 3 on a page. Extent, 323 çlokas. Character, Bengali. Date, ? Place of deposit, Sāṃsiddhi, *via* Çrinagar, District Dhākā, Paṇḍita Kṛṣṇakiçora Nyāyavāgiça. Appearance, tolerable. Verse. Generally Correct.

**Beginning**. ॐ नमः श्रीसूर्याय ।

वन्देऽहं परमानन्दमज्ञानतिमिरापहम् ।
भवसागरपाराय गीतं वेदान्तगैर्मुहुः ॥
विद्यालङ्कारविख्यातहृदयानन्दशर्मणा ।
ज्योतिःशास्त्रं समालोक्य क्रियते सारसंग्रहः ॥
पण्डितैर्ज्ञायते सर्व्वं तदर्थं न परिश्रमः ।
संक्षिप्तविषयग्रन्थो बालकैः सङ्गृह्यतां मुदा ॥
अत्र वाच्या विवाहस्तु निषेकनामनी तथा ।
अन्नप्राशनचूडे च कर्णवेधोपवीतके ॥
स्तवस्नानस्तवारम्भो स्तवप्रचार एव च ।
हलयोजनबीजवपनं धान्यकर्त्तनम् ॥
नवान्नं जातको यात्रा विद्यारम्भो ... ... ।
... ... ... एता नौरवाप्नेतरे मताः ॥

अथ विवाहः ।

बुधेन्दुशुक्रजीवानां दिनेष्वेतैर्विवाहिता ।
कन्या सुखमवाप्नोति पुत्रभाग्यधनान्विता ॥ इत्यादि ॥

**End**. नौकाचालना ।

अश्विनुधानिधि-पूर्व्वमित्रधनाच्युतभेषु लग्ने ।
तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे ॥
इति नौकागमनम् ॥ इति ॥
(परिसमाप्तिसूचकं वाक्यं नास्ति ॥)

विषयः । विवाह-गर्भाधान-नामकरणान्नप्राशन-चूडा-कर्णवेधोपवीत-स्तवस्नाननिर्णय-स्तवारम्भ-स्तवप्रचार-हलयोजना-बीजवपन-धान्यकर्त्तन-नवान्न-जातकविवेक-यात्राविवेक-विद्यारम्भ-नौकागमनचालनादिषु कालादिनिर्णयकथनम् । तत्र प्रथमं विवाहप्रकरणम् । तत्र तिथि-

नक्षत्रवारभेदे विवाहस्य शुभाशुभफलकथनम्। तत्र प्रथमं वारनिर्णयकथनं, । चन्द्रशुद्धि-कथनं । रविशुद्धिकथनं । गोचरशुद्धिकथनम्। गोधूलिविवरणदिवाविवाहनिषेध-नाडीनक्षत्र-विवरणकथनम्। ततो गर्भाधानप्रकरणम्। तत्र प्रथमं प्रथमतो मासवारभेदे शुभाशुभफल-कथनम्। ततोचतुर्थ्यादिषोडशान्तदिवसानां मध्ये गर्भोत्पन्नस्य जातकस्य शुभाशुभफलनिर्णय-विवरणम्। गर्भधारणे तिथिनक्षत्रादीनां भेदेन फलभेदकथनम्। नक्षत्राणां चतुर्विंशभुवेति त्रिविधगणभेदे नामकरणस्य फलाफलकथनम्। अथ अन्नप्राशनं। तस्य च षष्ठाष्टमादिमासभेदे फलभेदकथनम्। चूडाकरणस्य शुभवारादिकथनम्। जन्ममासे जन्मनक्षत्रे जन्मदिवसेऽपि चूडाकरणस्यापरिहार्य्यत्वकथनम्। कर्णवेधोपनयन-गृहप्रवेश-हलचालन-बीजवपनानां वार-नक्षत्रतिथिभेदकथनम्। जातकस्य लग्ननिर्णयनं। लग्नस्थराशीनां शुभाशुभनिर्णयकथनञ्च। यात्रायां दिग्भेदे तिथिनिर्णयकथनम्। विद्यारम्भस्य वारतिथिनक्षत्रनिर्णयकथनम्। देवता-प्रतिमागठनस्य कालनिर्णयकथनम्। कालशुद्धिकथनम्। मासदग्धानिरूपनम्। नववध्वागमनस्य कालनिर्णयकथनम्। नौकाचालनस्य वारतिथिनक्षत्रादिकथनम्। कालरात्रिकथनञ्च॥

ग्रन्थकारेणात्र नवांशवचन-रत्नमाला-यामित्रवेध-खर्जूरवेध-खना-वराहमुनि-चिन्तामणि-भीम-पराक्रम-प्रभृतीनामुद्धृतानि वचनानि॥

---

No. 135. शकारभेदः, By पुरुषोत्तमदेवः. Substance, country-made paper, 14 × 2½ inches. Folia, 10. Lines, 5 on a page. Extent, 150 çlokas. Character, Bengali. Date, 1663. Place of deposit, Serpur, Mayamansimha, Paṇḍita Durgāsundar Kṛtiratna. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय।

शब्दाम्भोधेर्यतो + + यतो व्याख्या प्रवर्त्तते।
गुरवे प्रभवे तस्मै नित्यं वामात्मने नमः॥
सरस्वत्याः प्रसादेन कविर्विभाति यत्पदम्।
प्रसिद्धमप्रसिद्धं वा तत् प्रमाणमिहोच्यते॥
शिवं भद्रं शिवः शम्भुः शिवा गौरी शिवाभया।
शिवः कीरः शिवा क्रोष्ट्री भवेदामलकी शिवा॥

**End.** चक्रितत्वात् समाप्तिसूचकं वाक्यं नास्ति।

**Colophon.** इति पुरुषोत्तमदेवविरचितो शकारभेदः समाप्तः। शकाब्दाः १६६३

विषयः। शिवगौर्य्यादिशब्दस्य नानार्थकथनमुखेन वकाराकशब्दानां नानार्थनिरूपणम्।

---

**No. 136.** तत्त्वचिन्तामणिः, By पूर्णानन्दः. Substance, country-made paper, 20 × 4½ inches. Folia, 115. Lines, 6 on a page. Extent, 3,450 çlokas. Character, Bengali. Date, (?). Place of deposit, Kāṇṭhālpārā, *viâ* Naihāṭi, Bābu Hemacandra Bandyopādhyāya. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** अत्र प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम्।
नमात्मानं वन्दे परमसुखसन्तानजिलयम्॥
अथ खलु दुरन्तदुःखमारघोरतरसंसारसागरान्तरदामशोकसन्तानप्रवल्लवाड़-वानलज्वालाजालकवलनविकलसकलपशुजनत्वाकुलतार्थे विश्रामदत्तमनाः परमकारुणिको भगवान् शिवः परदेवताराधनरहस्यप्रतिपादनपरानेकशत कोटिविस्तारतन्त्रसारमुपन्यस्तवान्। तत्र च ............ श्रीमत्परिव्राजक-परमहंसश्रीगुरुश्रीब्रह्मानन्दसुखारविन्दनिष्यन्दमानपरमरहस्यातिरहस्यनिगम-कन्दसन्दोहहेतु-नित्यानन्दश्रीपूर्णानन्दपरमहंसः श्रीतत्त्वचिन्तामणिं चतुर्दश-शताधिकमननमतिशकाब्दे वितनोति॥ ननु किं तावत् चात्मवस्तु परं ब्रह्म विश्वायतनमूलस्थानरहित-नित्यशुद्ध-बुद्धमुक्तस्वरूप-जाग्रत्स्वप्नसुषु-प्त्यादिप्रपञ्चप्रकाशक-गुणत्रयातीत-निराकाराराधिनादिमध्यान्तरहितमेव - मात्मवस्तु तदंशा जीवसंज्ञकाले बनाद्यविद्योपहताः शरीरमाश्रित्य नाना-विधसुखदुःखभोगं कुर्व्वन्तीति। इत्यादि।

**End.** खण्डितत्वात् शेषो नास्ति तेन पञ्चदशाधिकशततपत्रस्य समाप्तिवाक्यं लिखितं यथा,—
यासां प्रसादलाभेन कामरूपो भवेन्नरः।
याभिर्विश्वजयो विश्वधारी विश्वविमोहवान्॥
चक्राचारमध्ये तु यन्त्रं संचिन्त्य पूजयेत्।
चन्दनचन्दनकस्तूरीकुङ्कुमाभिमदोद्भवैः॥
विद्याप्राप्तो भवेद्देवी तेषु सम्यक् विचिन्तयेत्।
पूजोपाये यजेद्देवीं शिवशक्तिविलासितम्।
शिवसंज्ञाय तत्पुष्पैर्जायते मत्स्योपमः॥ अतःपरं खण्डितम्।

विषयः। तत्वज्ञाननिरूपणम्। दीक्षा-दीक्षाख्यान-दीक्षाङ्गादिनिरूपणम्। मन्त्रग्रहण-नियमनिरूपणम्। दीक्षादिनपूर्व्वकृत्यादिनिरूपणम्। षट्चक्रक्रमनिरूपणम्। कुण्डलक्षणनिरूपणम्। होमविधिनिरूपणम्। त्रिपुरासुन्दरीमन्त्र-पञ्चमीविद्या-कौलिकाविद्यादिनिरूपणम्। शुद्धाशुद्धफलमन्त्रादिनिरूपणम्। त्रिपुरार्च्चनादिनिरूपणम्। द्विविधध्यानप्रकारनिरूपणम्। योनिपीठ-मनःपीठ-यन्त्रपीठ-पादुकादिषु पूजननियमनिरूपणम्। यन्त्रोद्धारनिरूपणम्। कवचादिनिरूपणम्। पुरश्चरणोपायनिरूपणम्। ब्रह्महत्यादिदोषप्रायश्चित्तनिरूपणम्।

---

No. 137. तत्वप्रकाशः, (प्रथमकल्पपर्य्यन्तः) By ज्ञानानन्दब्रह्मचारी. Substance, country-made paper, 12×6 inches. Folia, 47. Lines, 6 on a page. Extent, 881 çlokas. Character, Bengali. Date, Sk. 1730. Place of deposit, Krṣṇapurā, Post Vaidyervāzār, District Dhākā, Çrī Madanamohana Bhaṭṭācāryya. Appearance, old. Verse. Generally correct

**Beginning.** ॐ गुरवे नमः।

नत्वा तत् कुलनाथमङ्कमलं नित्यालये चिन्मये
यद् गत्वा कुलकुण्डलीकुलपथं भित्वा सदा क्रीड़ति।
ज्ञानानन्दपरामरेण बहुलज्ञालोक्य तन्त्राणि वै
शाक्तानां हितकाम्यया विरचितस्तत्वप्रकाशो मुदा॥
गुरुपाद कृपां लब्ध्वा साधकः शक्तिसाधनात्।
शिवत्वं येन मार्गेण लभते स प्रकाशितः॥
आत्मतत्वप्रबोधाय ध्यमनाशाय वै सदा।
वक्ष्यामि कुलसंगीतां पश्य प्रथमकल्पके॥

... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ...

आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः।
न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः॥
संप्राप्ते षोड़शे वर्षे दीक्षां कुर्य्यात् प्रयत्नतः।
रसैर्मन्त्रैर्यथा सिद्धमयः सौवर्णतां व्रजेत्।
दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम्॥
सुन्दरीरत्नावल्याम्। शङ्कराचार्य्यं प्रति देवीवाक्यम्।

यथा वा गुरुकारुण्याल्लभते बीजमक्षयम् ।
...... इच्छे समुद्भूते फलभाग् जायते नरः ॥ इत्यादि ॥

End. साम्य इति सम्यक् तत्तत्देवत्वप्राप्तिः साम्यमुक्तिः । तस्मात् कथित् षड्विधा मुक्तिश्च कथ्यते । तन्त्रान्तरे । ...... सालोक्यसारूप्यसायुज्य......
यदुक्तं कुलतन्त्रेण महादेवेन पार्वति ।
आत्मतत्त्वप्रबोधाय तन्मया परिभाषितम् ॥
........................ विदुषां बोधकः ।
भ्रमात्मकानां भ्रमनाशहेतुर्मयोदित + कुलसंगीतायाम् ॥
सिद्धसिद्धैर्विनान्येषां बोद्धव्यो विदुषां क्वचित् ।
ज्ञानकल्पद्रुमिव ग्रन्थो ज्ञानिनां कुलयोगिनाम् ॥
ज्ञानेन लभते मोक्षं ज्ञानेन कुलसाधनम् ।
नित्यानन्दमयं ज्ञानं ज्ञानानन्दमयो गुरुः ॥
ज्ञानानन्दमयं ब्रह्म ज्ञानानन्दमयं जगत् ।
ज्ञानानन्दमयो ग्रन्थो ज्ञानानन्देन भाषितः ॥
इति श्रीज्ञानानन्दब्रह्मचारिणा विरचिते तत्त्वप्रकाशे कुलसंगीतायां पञ्चमो विरामः । सम्पूर्णः प्रथमः कल्पः ॥

Colophon. यद्वाणी यमुनादिजाह्नवीयुतं तीर्थं त्रिवेण्यात्मक
लौहित्यं खलु तस्य पश्चिमतटे ग्रामे जिनार्द्राह्वके ।
काशीमन्दिरसन्निधौ निजपुरे वङ्गे कुले वासरे
विंशत्सप्तविधौ शके हत इव ग्रन्थो रवौ कर्कटे ॥

**विषयः ।** विरचित एव तत्रभवता ज्ञानानन्दब्रह्मचारिणा द्वादशकल्पात्मकतत्त्वप्रकाश-नामास्मिंस्तु प्रथमकल्पमात्रात्मके सन्ति पञ्च विरामास्तत्र प्रथमविरामे शिवत्वप्राप्तिबोधककवच-निरूपणम् । द्वितीये बीजमन्त्रपूर्वकं सृष्टेरुत्पत्तिकारणनिरूपणम् । शरीरं संमन्त्र्य आत्मतत्त्व-निरूपणं । तृतीये आत्मनिरूपणम् । प्रकृतिनिरूपणम् । साकारकल्पनानिरूपणम् । महा-विद्यादिशक्तिनिरूपणम् । कुण्डलीमन्त्रनिरूपणम् । मातृकामन्त्रनिरूपणम् । षट्चक्रभेद-निरूपणं । चतुर्थे गुरुशिष्यसंयोगेन बृहद्ब्रह्मज्ञानमन्त्रनिरूपणम् । पञ्चमे चक्रयागविधि-निरूपणम् ।

**No. 138.** तन्त्रदीपिका, By गोपालन्यायपञ्चाननः. Substance, country-made paper, 18 × 6 inches. Folia, 420. Lines, 12 on a page. Extent, 19,530 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Vikrampur, Mājpārā, Bābu Rāsvihāri Rāya. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** नित्यां प्रणम्य चिद्रूपां नित्यानन्दञ्च निर्गुणम् ।
अखण्डं परमानन्दं गुरुब्रह्ममयं तथा ॥
विलोक्यागमशास्त्राणि विविधान् सङ्ग्रहानपि ।
श्रुतिस्मृत्यविरोधानि ज्ञानस्य कारणानि च ।
आगमवागीशपौत्रेण हरिनाथस्य सूनुना ॥
श्रीगोपालेन विप्रेन कृतेयं तन्त्रदीपिका ॥
दीक्षादिलक्षणञ्चैव मन्त्रयन्त्रादिनिर्णयम् ।
तन्त्रेऽस्मिन् संप्रवक्ष्यामि विदुषां प्रीतिहेतवे ॥
अथ का दीक्षा । यतो दिव्यप्रबोधोदय-दुरितक्षयौ च स्यातां स ... तथा
सारदातिलके ।
दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्षयम्
तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तन्त्रवेदिभिः ॥
इति सम्प्रदायविदः । तत्र ब्रह्मविज्ञान + + सद... नादि-
ष्वतिप्रसक्तेः । बहुसद्गुरूपदेशगम्यादृष्टजनिका तान्त्रिकी क्रिया दीक्षे-
त्याहुः तदपि न पुरश्चरणादावतिप्रसङ्गात् । उच्यते । वैधमन्त्रग्रहणं
दीक्षा । वैधत्वञ्च तन्त्रविबोधितत्वम् । तथा सारावल्यां दीक्षाशेखर-दीक्षा-
दर्शेषु तन्त्रान्तरवचनम् ।
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ।
तस्मात् सर्व्वप्रयत्नेन सदा कुर्य्याच्च तान्त्रिकात् ॥ इत्यादि ।

**End.** कुलार्णवे :
मोदेति नास्तमायाति न वृद्धिं याति सत्क्षणम् ।
स्वयं विभात्यात्य + + + भासते साधनं विना ॥
यथा ध्यानस्य सामर्थ्यात् कीटोऽपि भ्रमरायते ।
तथा समाधिसामर्थ्याद् ब्रह्मभूतो भवेन्नरः ॥
गोतमीये ।

चात्मनो मरणं नास्ति न वा तस्य च जीवनमित्यादि ।
अविश्वासो न कर्त्तव्यो यथाशास्त्रं समीरितम् ।
विधेयस्तस्य मर्म्मज्ञैर्धीरा बद्धोऽयमञ्जलिः ॥

Colophon. इत्यागमवागीशभट्टाचार्य्यपौत्र-हरिनाथभट्टाचार्य्यात्मज-श्रीगोपालपञ्चानन-विरचिता तन्त्रदीपिका समाप्ता ।

विषय: । अथ दीक्षाशब्दार्थविवेचनम् । सर्व्वेषु आश्रमेषु दीक्षाया आवश्यकत्वकथनम् । गुरुपदार्थनिरूपणमुखेन गुरुलक्षणादिकथनम् । दोषयुक्तगुरुमन्त्रयोस्तु त्याज्यताकथनम् । शिष्य लक्षणकथनम् । निषिद्धशिष्यलक्षणकथनम् । मन्त्राविद्याकथनम् । पित्रादिभ्यो मन्त्रग्रहणनिषेध-कथनम् । निर्व्वीजमन्त्रलक्षणादिकथनम् । स्वप्नलब्धमन्त्रे विशेषत्वकथनम् । नक्षत्रचक्रादिविवे-चनम् । वैरिमन्त्रत्यागप्रकारकथनम् । नक्षत्रचक्रकथनम् । राशिकथनम् । अकथहचक्रकथनम् । भौतिकचक्रकथनम् । वर्गचक्रकथनम् । ऋणिधनिचक्रकथनम् । सर्पचक्रकथनम् । अथ दीक्षा-कालनियमादिकथनम् । कालदोषप्रतिप्रसवकथनम् । उपदेशविधिकथनम् । शूद्रादौ प्रण-वादिनिषेधकथनम् । दक्षिणानियमादिकथनम् । पञ्चायतनीदीक्षाविधिकथनम् । प्रसङ्गात् चिविधस्वरूपक्रमकथनम् । नित्यपूजाविधिकथनम् । प्रातःकृत्यविधिकथनम् । अथ सांख्यस्तव-कथनम् । सन्ध्याविधिकथनम् । संक्षेपतः सन्ध्याविधिकथनम् । स्नानविधिकथनम् । गायत्री-कथनम् । यागमण्डपविधिकथनम् । पञ्चशुद्धिविधिकथनम् । सामान्यार्घ्यविधिकथनम् । श्रीविद्या-द्वारपालादिपूजाविधिकथनम् । आसननिरूपणम् । भूतशुद्धिविधिकथनम् । मातृकान्यास-विधिकथनम् । प्राणायामविधिकथनम् । ऋष्यादिन्यासकथनम् । पीठन्यासविधिकथनम् । करा-ङ्गन्यासविधिकथनम् । अङ्गन्यासे अङ्गुलिनियमकथनम् । अङ्गन्यासादेरावश्यकत्वकथनम् । व्यापक न्यासकथनम् । मानसपूजाविधिकथनम् । वाह्यपूजाक्रमकथनम् । अर्घ्यस्थापनविधिकथनम् । अर्घ्यपात्रनियमकथनम् । प्रोक्षणीपात्रादिनियमकथनम् । पीठपूजाविधिकथनम् । गुरुपूजा-विधिकथनम् । तद्ध्यानादिकथनञ्च । गुरुपूजाया नित्यत्वकथनम् । श्रीविद्यायां विशेषगुरुक्रम-कथनम् । पूजाधारनियमकथनम् । शालग्रामे आवाहनविसर्ज्जननिषेधकथनम् । अनुक्तकल्पे यन्त्रविशेषकथनम् । आवाहनादिमुद्राविधिकथनम् । प्राणप्रतिष्ठाविधिकथनम् । षोडशोप-चारादिविधिकथनम् । गन्धादिदानक्रमकथनम् । गन्धदानमुद्राकथनम् । विहितादिहितमुद्रा-कथनम् । दशाङ्गादिधूपकथनम् । नैवेद्यद्रव्यनियमकथनम् । नैवेद्यादिद्रव्याणां निर्माल्यकाल-नियमकथनम् । आदरदपूजाविधिकथनम् । नीराजनाविधिकथनम् । तर्पणविधिकथनम् नित्यपूजाङ्गबलिविधिकथनम् । नित्यपूजायां जपसंख्यानियमकथनम् । रहस्यमालाविधान-कथनम् । मालासंस्कारविधिकथनम् । त्रिविधजपलक्षणादिकथनम् । नित्यहोमविधिकथनम् । अष्टाङ्गप्रणामविधिकथनम् । पञ्चाङ्गप्रणामविधिकथनम् । षडङ्गप्रणामविधिकथनम्

विशेषे प्रदक्षिणादिनियमकथनम् । त्रिकोणादिनमस्कारफलकथनम् । पूजानन्तरं शक्तपूजा-
विधिकथनम् । सर्व्वदेवानां संक्षेपतः पूजाविधिकथनम् । स्नातकानां पूजानित्याह्न-
विधिकथनम् । नैमित्तिकपूजाविधानकथनम् । नैमित्तिकपूजाभङ्गे प्रायश्चित्तकथनम् ।
परमयोगिनां मुख्यपूजाविधिकथनम् । परादिपूजासङ्केतकथनम् । परापूजालक्षणकथनम् ।
तत्र सन्ध्याकथनम् । तर्पणविधिकथनम् । अर्घ्यविधिकथनम् । न्यासविधिकथनम् । षडङ्गादि-
विधिकथनम् । ध्यानविधिकथनम् । आन्तरपूजाविधिकथनम् । जपविधिकथनम् । होमविधि
कथनम् । कुण्डस्थाननिरूपणम् । मण्डपप्रमाणकथनम् । शङ्क्वादिप्रमाणकथनम् । पताकाविधि-
कथनम् । ध्वजविधिकथनम् । तोरणविधिकथनम् । वेदिनिर्म्माणविधिकथनम् । दीक्षाग्ङ्कुराग-
कथनम् । बलिमण्डलविधिकथनम् । अङ्कुरार्पणविधिकथनम् । योनिकुण्डादिविधिकथनम् ।
काम्यहोमार्थं कुण्डविशेषकथनम् । नागशीर्षविवेचनम् । कुण्डमानाज्ञाने दोषकथनम् । शैव-
कुण्डपक्षे योनिविशेषकथनम् । कुण्डसंस्कारादिहोमकथनम् । आज्यस्थालीविधिकथनम् ।
दीक्षाङ्गहोमविधिकथनम् । वह्नेः शमनवर्णनियमकथनम् । स्रुक्स्रुवादिलक्षणकथनम् । कर-
मालानियमकथनम् । तत्र मणिनिरूपणम् । कामनाभेदे मालाविशेषनियमकथनम् । अथ पुर-
श्चरणविधिकथनम् । तत्र स्नानादिनियमकथनम् । भक्ष्याभक्ष्यनियमकथनम् । शय्यादिनियम-
कथनम् । भूतलिपिविधिकथनम् । अथ ग्रहणकालीन-पुरश्चरणविधिकथनम् । मन्त्राणां दश-
संस्कारविधिकथनम् । पुरश्चरणप्रयोगकथनम् । अथ कलावतीदीक्षाविधिकथनम् । तत्र नव
रत्नादिकथनम् । सर्व्वतोभद्रमण्डलविधिकथनम् । पद्मात्मकमण्डलविधिकथनम् । त्रिखोदिनी-
मुद्राविधिकथनम् । मन्त्रसङ्केतकथनम् । अथ गणेशमन्त्रकथनम् । तस्य पूजाप्रयोगकथनम् ।
अथ हेरम्बगणेशमन्त्रकथनम् । तत्र पूजाविधिकथनम् । अथ हरिद्रागणेशमन्त्रकथनम् ।
उच्छिष्टगणेशमन्त्रकथनम् । अथ सूर्य्यमन्त्रकथनम् । तत्र पूजाविधिकथनम् । अथ मार्त्तण्डमन्त्र-
कथनम् । तत्र पूजाविधिकथनम् । अथ शिवमन्त्रकथनम् । तत्र पञ्चाक्षराष्टाक्षरादि-
मन्त्रकथनम् । मृत्युञ्जयमन्त्रकथनम् । दक्षिणामूर्त्तिमन्त्रकथनम् । नीलकण्ठमन्त्रकथनम् ।
अर्द्धनारीश्वरमन्त्रकथनम् । चण्डेश्वरमन्त्रकथनम् । तुम्बुरुमन्त्रकथनम् । चण्डोग्रशूलपाणि-
मन्त्रकथनम् । अथ विष्णुमन्त्रकथनम् । तस्य पूजादिविधिकथनम् । वासुदेवमन्त्र-तत्-
पूजाविधिकथनम् । लक्ष्मीवासुदेवमन्त्र-तत्पूजाविधिकथनम् । दधिवामनमन्त्र-तत्पूजा-
विधिकथनम् । हयग्रीवमन्त्र-तत्पूजाविधिकथनम् । नृसिंहमन्त्र-तत्पूजाविधिकथनम् ।
हरिहरात्मकमन्त्र-तत्पूजाविधिकथनम् । वराहमन्त्र-तत्पूजाविधिकथनम् । उक्तेषु मन्त्रेषु
प्रत्येकं काम्यविधिकथनम् । अथ श्रीकृष्णमन्त्र-तत्पूजाविधिकथनम् । बालगोपालमन्त्रकथनम् ।
कृष्णमन्त्रविषयं काम्यनैमित्तिकयोर्विधिकथनम् । वैष्णवानां द्वादशपुण्ड्रादिविवेचनम् । श्रीराम-
मन्त्र-तत्पूजाविधिकथनम् । लक्ष्मणमन्त्रकथनम् । अथ दुर्गामन्त्रपूजाविधिकथनम् ।
महिषमर्द्दिनीमन्त्र-तत्पूजाविधिकथनम् । जयदुर्गामन्त्र-तत्पूजाविधिकथनम् । शूलिनीमन्त्र-

तत्पूजाविधिकथनम् । वनदुर्गामन्त्र-तत्पूजाविधानकथनम् । कात्यायनीमन्त्र तत्पूजनविधि-कथनम् । अथ दशमहाविद्यामन्त्रविधिकथनम् । तत्र कालीमन्त्र तत्पूजादिविधिकथनम् । विद्याकालीमन्त्र-तत्पूजनविधिकथनम् । श्मशानकालीमन्त्र-तत्पूजाविधिकथनम् । गुह्यकाली-मन्त्र तत्पूजाविधिकथनम् । एकजटाकालीमन्त्र-तत्पूजाविधिकथनम् । भद्रकालीमन्त्र-तत्-पूजाविधिकथनम् । महाकालीमन्त्र तत्पूजाविधिकथनम् । श्यामादिविषये काम्यविधिकथनम् । अथ तारामन्त्र-तत्पूजादिविधिकथनम् । अथ बालकसंस्कारविधिकथनम् । परमयोगिरहस्य-पुरश्चरणविधिकथनम् । परमयोगिवीरसाधनविधिकथनम् । अथ शवसाधनविधिकथनम् । अथ श्रीविद्यामन्त्र-तत्पूजादिविधिकथनम् । महाषोड़शीविद्यामन्त्र-तत्पूजादिविधिकथनम् । स्वप्ना-वती मधुमती-मन्त्रादिविधिकथनम् । पञ्चमीविद्याविधिकथनम् । श्रीचक्रदर्शनादिफलकथनम् । श्रीविद्यायाः काम्यादिविधिकथनम् । अथ भुवनेश्वरीविद्यामन्त्र-तत्पूजादिविधिकथनम् । अथ भैरवीविद्यामन्त्र-तत्पूजादिविधिकथनम् । तत्र सम्पत्प्रदाभैरवीमन्त्रविधिकथनम् । कौलेश-भैरवीमन्त्रादिविधिकथनम् । अघोरभैरवीमन्त्रादिविधिकथनम् । चैतन्यभैरवीमन्त्रादिकथनम् । कामेश्वरीभैरवीमन्त्रादिकथनम् । षट्कूटाभैरवीमन्त्रादिकथनम् । नित्याभैरवीमन्त्रादिकथनम् । रुद्रभैरवीमन्त्रादिकथनम् । भुवनेश्वरीमन्त्रादिकथनम् । तत्र तत्र काम्यविधिकथनञ्च । अथ प्रचण्डचण्डिकामन्त्रादिविधिकथनम् । छिन्नमस्तामन्त्रादिविधिकथनम् । तत्र मन्त्रवासन्मामन्त्रार्थ-कथनञ्च । अथ धूमावतीमन्त्रादिकथनम् । अथ बगलामुखीमन्त्रादिविधिकथनम् । अथ मातङ्गीमन्त्रादिविधिकथनम् । अथ लक्ष्मीविद्यामन्त्रादिविधिकथनम् । महालक्ष्मीमन्त्रादिविधि-कथनञ्च । अथ बालाविद्यामन्त्रादिविधिकथनम् । अथ अन्नपूर्णामन्त्रादिविधिकथनम् । अथ प्रकीर्णकमन्त्रादिविधिकथनम् । तत्र सरस्वतीविद्याविधिकथनम् । पारिजातसरस्वतीमन्त्रादि-विधिकथनम् । परञ्ज्योतिर्मन्त्रविधिकथनम् । अजपाराधनविधिकथनम् । त्वरिताविद्याविधि-कथनम् । त्रिपुटाविद्याविधिकथनम् । अश्वारोहणमन्त्रकथनम् । पद्मावतीमन्त्रकथनम् । नित्या-मन्त्रकथनम् । आपदुद्धारवटुकमन्त्रकथनम् । क्षेत्रपालमन्त्रकथनम् । इन्द्रमन्त्रकथनम् । रुद्र-मन्त्रकथनम् । गायत्रीमन्त्रकथनम् । धनदामन्त्रकथनम् । विशालाक्षीमन्त्रकथनम् । गौरी-मन्त्रकथनम् । ब्रह्माणीमन्त्रकथनम् । हनूमत्कल्पकथनम् । आर्द्रपटीमन्त्रकथनम् । श्मशान-भैरवीमन्त्रकथनम् । ज्वालामालिनीमन्त्रकथनम् । निगड़विमोचणमन्त्रकथनम् । त्र्यम्बकमन्त्र-कथनम् । मृत्युञ्जयविद्याकथनम् । अथ आकर्षणविधिकथनम् । विद्वेषणविधिकथनम् । उच्चाटन-विधिकथनम् । सुखप्रसवमन्त्रकथनम् । अदर्शनप्रकारकथनम् । योगिनीसाधनविधिकथनम् । उच्छिष्टचाण्डालिनीमन्त्रकथनम् । कर्णपिशाचीमन्त्रकथनम् । मञ्जुघोषमन्त्रकथनम् । तारिणी-मन्त्रकथनम् । अथ सारस्वतकल्पकथनम् । कात्यायनीकल्पकथनम् । अथ षट्कर्मादिविधिकथनम् । अथ जपादौ मालानियमकथनम् । तत्र अङ्गुलिनियमकथनञ्च । अथ सेतुनिरूपणम् । नाना-

विघ्नापायकथनम् । मन्त्रसिद्धिलक्षणकथनम् । मन्त्राणां शापोद्धारादिविधिकथनम् । चतुः-षष्ट्युपचारनियमकथनम् । तन्मन्त्रादिकथनम् । वज्राचमाहात्म्यकथनम् । मुद्राप्रकारादिकथनम् । शान्त्युदकस्नानविधिकथनम् । विघ्नाद्युपायकथनम् । वेतालादिसिद्धिकथनम् । छाग छागलादि-बलिनिरूपणम् । वीरभावकथनम् । पशुभावकथनम् । परमयोगिनां कुलाचारकथनम् । महा-चीनचक्रकथनम् । समयाचारविधिकथनम् । तत्र कुलचारादिनिरूपणम् । शिवाबलिविधि-कथनम् । कुलचक्रक्रमकथनम् । अवधूतव्यतिरिक्तानां स्त्रीशूद्रादीनां परान्ननिषेधकथनम् । कलौ तृतीयागादिनिषेधकथनम् । वीराणां पुरश्चरणविधिकथनम् । कुमारीनिरूपणादिकम् । योगप्रक्रियाकथनम् । तत्र चाचमादिनिरूपणम् । योगविशेषेण मोक्षप्राप्तिकथनञ्च । इति शम् ।

---

**No. 139.** तन्त्रप्रदीपः, By जगन्नाथः. Substance, country-made paper. 17 × 7 inches. Folia, 75. Lines, 13 on a page. Extent, 4,509 çlokas. Character, Bengali. Date, Sk. 1735. Place of deposit, Kāṭihālī, Mayamansimha, Paṇḍita Visvanātha Tarkabhūṣaṇa. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो दुर्गायै ।

तत्र प्रथमं दीक्षां विना जपस्य दुष्टत्वात् सा निरूप्यते ।
प्रणम्य त्रिपुरां देवीं संसारार्णवतारिणीं ।
तन्त्रप्रदीपं तनुते जगन्नाथो द्विजोत्तमः ॥
दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्षयम् ।
तस्मात् दीक्षेति संप्रोक्ता मुनिभिस्तन्त्रवेदिभिः ॥
मननं विश्वविज्ञानं त्राणं संसारबन्धनात् ।
यतः करोति संसिद्धिं मन्त्र इत्युच्यते बुधैः ॥ इत्यादि ।

**End.** गगने पवने प्राप्ते ध्वनिरुत्पद्यते महान् ।
घण्टादीनां प्रवाद्यानां सिद्धिस्तस्य न दूरतः ॥
प्राणायामेन युक्तेन सर्व्वरोगक्षयो भवेत् ।
बुद्धिं ध्यात्वा गुरुं भक्त्या तन्त्राणां सारमेव च ।
विलोक्य श्रीजगन्नाथश्चकार तन्त्रदीपकम् ॥
जयाख्यः काश्यपगोत्रेण (?) जगन्नाथेन धीमता ।
नाम्ना तन्त्रप्रदीपोऽयमकारि शास्त्रपारगा ॥

**Colophon.** इति श्रीजगन्नाथचक्रवर्त्तिविरचिते तन्त्रप्रदीपे नवमः परिच्छेदः । ......
शकाब्दाः १७११ ।

**विषयः** । मन्त्रदीक्षाग्रहणयोर्गुरुमुखेन दीक्षादेः फलनिरूपणम् । गुरुलक्षण—शिष्यलक्षणादिनिरूपणम् । दीक्षाकालादिनिरूपणम् । दीक्षाप्रयोगादिनिरूपणम् । पुरश्चरण—ग्रहणपुरश्चरणादिनिरूपणम् । रामविष्णुसूर्य्यादीनां मन्त्रादिनिरूपणम् । तेषां स्तवकवचादिनिरूपणञ्च । यन्त्रसंस्कारनिरूपणम् । नित्यहोमादिविधिकथनम् । कुण्डादिनिरूपणम् ।

---

**No. 140.** तन्त्ररत्नं वा कुलरहस्यं, By आनन्दानन्दनाथः. Substance, country-made paper, 12×3 inches. Folia, 34. Lines, 8 on a page. Extent, 850 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Vikrampur, Mājpārā, Bābu Rāsavihāri Rāya. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो महादेवाय ।

नमामि देवीं कुलवर्त्मगम्यां कुलाङ्गनासेवितपादपद्माम् ।
कुलाङ्गनादानविधानदक्षामालोलघूर्णायतनेत्रपद्माम् ॥
कुलागमज्ञं कुलतत्त्ववित्तं विचारशीलं परिवर्ज्जनज्ञम् ।
श्रीचक्रपूजादिविधानदक्षं नमामि भक्त्या गुरुमीशरूपम् ॥
आनन्दानन्दनाथेन सहजानन्दसूनुना ।
इदं कुलरहस्याख्यं तन्त्ररत्नं विधीयते ॥
बहूनि तन्त्राणि विलोक्य यत्नतः
श्रीचक्रपूजाविधिरेव लिख्यते ।
एवं समासाद्य भवाब्धिनावं
पयान्ति पारं किल कौलिकेन्द्राः ॥
अथ कुलोपनिषत् । अथातो धर्म्मजिज्ञासा । इत्यादि ।

**End.** तथा स्वच्छन्दमाहेश्वरेऽपि ।

अङ्गुष्ठानामिकायोगाद्वामहस्तेन तर्पयेत् ।
अङ्गुष्ठतर्ज्जनीयोगाद्दक्षेण पुष्पपातनम् ॥
अङ्गुष्ठो भैरवो देवो ह्यनामा चण्डिकापरा ।
अनयोर्योगतो द्रव्यं केवलं परमामृतम् ॥
नामस्माद्वं द्वितीयस्य द्रव्यमध्ये विनिक्षिपेत् ॥

Colophon. इत्यन्तं समाप्तम् ।

नत्वा भवानीचरणारविन्दं भक्त्या हृदिस्थं सुखदं नराणाम् ।
रवेर्दिने कर्कटगे च भानौ लिलेख रत्नं द्विजरामदेवः ॥

**विषयः ।** कौलिकोपनिषत्सारकथनम् । कौलिकस्वरूपादिकथनम् । चान्तरहस्यकथनम् । कौलप्रतिष्ठाकथनम् । तत्र शक्तिप्राधान्यकथनम् । कौलिकेश्वरलक्षणादिकथनम् । कौलिकेन्द्र-लक्षणादिकथनम् । पञ्चमकारविधिः । शक्तिभेदनिरूपणम् । गुरुशिष्ययोर्लक्षणादिकथनम् । कौलदीक्षाविधिः । चक्रपूजाविधिः । शक्तीनां लक्षणादिकथनम् । आचार्यलक्षणादिकथनम् । द्रव्योत्पत्तिविधिः । देशभेदे द्रव्यविशेषविधानकथनम् । मांसविवेचनम् । बलिदानविधिः । विजयादग्रहणविधिः । कुलस्त्रीकृत्यनिरूपणम् । पात्रपरिमाणादिकथनम् । कलसादिनियम-कथनम् । आनन्दभैरवीपूजाविधिः । मुद्रादिशोधनविधिः । श्यामादिविद्यायाः कुम्भस्थापनादि-विधिः । तत्त्वशुद्धिविधिः । तर्पणादिविधिश्च । इति ॥

---

**No 141.** तर्कप्रदीपः, By रामहरिः. Substance, country-made paper. 18 x 3½ inches. Folia, 9. Lines, 5 on a page. Extent, 188 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, Paṇḍita Haraprasād Çastri. Appearance old. Verse. Generally correct.

Beginning. ॐ नमः परदेवतायै ।

यस्याः पादनखेन्दुरश्मिततमः संहारयत्यन्तरा-
ध्वान्तं सद्गतचेतसां विषयिणां तद्वर्द्धयत्यन्तरम् ।
तस्याः पादसरोरुहं परिणमंस्तर्कप्रदीपाश्रयं
ग्रन्थं रामहरिर्द्विजो वितनुते श्रीमान् सतां सम्मुदे ॥
गौतमानां मते तत्र पदार्थाः षोडशैव हि ।
सप्रमाणः प्रमेयोऽथ संशयः सप्रयोजनः ॥ इत्यादि

End. संसर्गाभाव एवात्र त्रिविधः परिकीर्त्तितः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥
यस्य नाशः समुत्पन्ने प्रतियोगिनि जायते ।
प्रागभावः स विज्ञेयो ध्वंसो ध्वंसविवर्जितः ।
नित्याभावस्तु विज्ञेयोऽत्यन्ताभाव एव सः ॥
अन्योन्याभाव एवासौ नित्यप्रतियोगिकः ।
× × × × × ॥

**Colophon.** इति तर्कप्रदीपे पदार्थनिर्णयो नाम पञ्चमश्योतिः ॥ ॐ ॥

**विषय:** । न्यायसम्मतानां षोडशपदार्थानामेकैकशो निरूपणम् ।

---

**No. 142.** तर्कभाषाभावार्थदीपिका, By गौरीकान्तभट्टाचार्य्य. Substance, country-made paper, 17½ × 5 inches. Folia, 16. Lines, 12 on a page. Extent, 876 çlokas. Character, Bengali. Date, ? Place of deposit, Roṣadi *viâ* Veltali, District, Dhākā, Paṇḍita Rāsamohana Sārbbabhauma. Appearance, new. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

ॐ तत्त्वदेभिः प्रतिपादिताय
नित्याखिलेच्छाकृतिधीयुताय ।
लीलाघनश्यामकलेवराय
नमोऽस्तु तस्मै जगदीश्वराय ॥
उज्ज्वला तर्कभाषायामियं भावार्थदीपिका ।
भट्टाचार्य्येण धीरेण गौरीकान्तेन तन्यते ॥
मातर्भारति चेत् शिरोमणिवचोव्याख्यानसत्कौशलैः
मात्वङ्कारतयैव केशवकृतिव्याख्यासु किं लज्जसे ।
कर्पूरप्रचुरोल्लसत् खदिरयुक् ... ... ... ...
... ... ... ... ... ... ... का नाम क्षतिः ॥

इह खलु प्रेक्षावन्तो ग्रन्थाभिधेयप्रयोजनसम्बन्धानं प्रतीत्यैव तदध्ययनादौ प्रवर्त्तन्ते । तदुक्तमिद्धार्थं विज्ञसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इत्यतः प्रारिप्सितग्रन्थे प्रेक्षावत्प्रवृत्तये प्रयोजनाभिधेयसम्बन्धान् दर्शयन् शिष्यावधानाय तर्कभाषाप्रकाशनं प्रतिजानीते । बालोऽपीति । बाल इव बालः प्रकृतशास्त्रपरिभाषानभिज्ञ इत्यर्थः । अग्निर्माणवक इतिवत् गौणप्रयोगः अलसः दुरूहभाष्यग्रन्थादिबोधानुकूलभावार्थबहुतरव्याख्या ... ... सामर्थ्यविकलः एवम्भूतोऽपि सन् यो जनोऽल्पेन श्रुतेनाध्ययनेन न्यायः प्रतिज्ञाहेतूदाहरणोपनयनिगमनात् पञ्चावयवसमुदायः तत्सम्बन्धीति न्यायः नीयन्ते निर्णीयन्ते अर्था अनेनेति व्युत्पत्त्या शास्त्रे तर्कविद्यायामिति यावत् । इत्यादि ।

**End** निमित्तत्वमिति नाम्निकव्यवहारात् असमवायिकारणभेदघटितत्वात् निमित्त कारणञ्चेति यावत् सत्यं किन्तु सामान्यसमवायिकारणलक्षणमिदं अतएव कुलालानुरूप ... संयोगादेरपि लक्षणत्वमेव तेषामपि घटकुलालसंयोगादि-रूपसंयोगजसंयोगासमवायिकारणत्वात् । एवमवयवानामादेरपि अवयवासम-वायिकारणत्वात् । परन्तु आत्मादृष्टादेरात्मविशिष्टगुणस्य किञ्चित् कार्य्यम् । इत्यादि ।

**Colophon.** खण्डितशेषत्वात् परिसमाप्तिसूचकं वाक्यं नास्ति ॥

**विषयः ।** केशवमिश्रकृततर्कभाषाया व्याख्यानम् । दूषितवानेन ग्रन्थकारेण तत्रभवान् शिरोमणिः केशवमिश्रस्य ॥

---

**No. 143.** **तर्कसंग्रहचन्द्रिका.** Substance, country-made paper, 18 × 2 inches. Folia, 54. Lines, 8 on a page. Extent, 2,592 çlokas. Character, Bengali. Date, ? Place of deposit, Viṣṇupur *viâ* Vāŋkūrā, Çrī Rūprām Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** (खण्डितत्वात् प्रारम्भवाक्यं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम्) विशेषणं द्विविधं भिन्नमभिन्नञ्चेति भिन्नं यथा घटस्य घटत्वं अभिन्नं यथा घटस्य घट एव । घटस्य घटत्वं यथा ज्ञायमानं तस्य व्यावर्त्तकं तथा घटो-ऽपि घटत्वेन ज्ञायमानः । इत्यादि ।

**End** वेदवाक्यजा बुद्धिः सर्व्वापि सर्व्ववाक्यजापि प्रमा यथा कर्त्तुर्वेदकर्त्तुरीश्वर-स्याप्तत्वात् तद्वाक्यजन्यत्वादित्यर्थः । लौकिकं वाक्यं यदनाप्तोक्तं तदप्रमाणं तज्जनितबुद्धिरप्यप्रमा । बुद्धिप्रकरणमुपसंहरति निरूपितेति ... ... ... ... ... ... ... ... ... ... ... ... ॥

**Colophon.** इति तर्कसंग्रहचन्द्रिकायां प्रमाणप्रकरणं समाप्तम् । अतःपरं खण्डितम् ।

**विषयः ।** आप्तवाक्यार्थानां निरूपणादिमुखेन पदार्थोद्देशादिनिरूपणम् । द्रव्यलक्षणादि-निरूपणम् । गुणलक्षणादिनिरूपणम् । अनुमानादिनिरूपणम् । उपमानादिनिरूपणम् । शब्दादिनिरूपणम् । प्रमाणादिनिरूपणञ्च ॥

---

**No. 144.** **ताजिकसारः,** By **केशवभट्टः.** Substance, country-made paper, 17×1 inches. Folia, 54. Lines, 4 on a page. Extent, 1,013 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Vikrampur, Bayārāgādi, Pandita Rāmasundara Vidyāratna. Appearance, old. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणपतये ।

श्रीरामस्य पदारविन्दयुगलं नत्वाथ वागीश्वरं
हेरम्बं तपनादिकं पशुगुरुं चक्रं यशोदासुतम् ।
वक्ष्ये ताजिकसारमल्पसुगमं रम्यं सुबोधप्रदं
नानाताजिकतो विलोक्य रचितं दैवज्ञहर्षप्रदम् ॥
यत्पूर्व्वार्ज्जितमात्मदेहजनितं दैवं शुभं वाशुभं
तत्सर्व्वं हि विपाकमेति नियतं वर्षादिके निश्चितम् ।
सर्व्वैः सम्मतमत्र जन्मनि परं जन्तोः स्फुटं सूरिभि-
स्तस्मात् तत्परिचिन्त्य वर्षचरितं वक्ष्ये फलं मूर्त्तिमत् ॥
याता वर्षगणा हि जन्मसमयात् खाभ्यस्तुर्दा क्रमात्
पञ्चाङ्गाग्निभिरिन्द्रियेन्दुभिरिनारामैः स्वरामैर्हृतः ।
जन्माद्यर्गणनादिका + न युतः खादिघ्नवर्षादिको
यातोऽ+दिवसः स यो + निदिने यद्रूपत्यतः साधितः ॥ (?)
इत्यादि ।

**End.** लग्नेशां शपतीमिथस्तनुनरेट स्वास्य × पोषोतयोः
सौख्यं सेन्दुदगिन्दुदग् युतिरिहोप्यस्यौ च दृष्टौ तथा ।
देवस्वामिषु सौख्यदौ च विपरीतौ भावदुष्टप्रदा
+ + + + गुणैः प्रकल्प्य + +तो मासेऽत्र वेद्यं फलम् ॥ (?)

**Colophon.** इति केशवभट्टविरचितताजिकोक्तवर्षफलपद्धतिः समाप्ता ॥

**विषयः ।** जातकनिरूपणम् ॥

---

**No. 145.** **तान्त्रिकयात्रापद्धतिः.** Substance, country-made paper, 17×3½ inches. Folia, 3. Lines, 6 on a page. Extent, 45 çlokas. Character, Bengali. Date, ? Place of deposit, Kālikaccha, District, Tripurā. Pandita Rājacandra Sārbbabhauma. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

पार्व्वती परमा सम्या सदा शङ्करवल्लभा ।
उवाच नीलकण्ठं तं भक्त्या मधुरया गिरा ॥
श्रृणु देव जगन्नाथ विशेषेणैव शङ्कर ।
प्रमाणं ज्योतिषे ग्रन्थे यात्रायां बहुकष्टकम् ॥ इत्यादि ।

**End.** पठित्वा च इमं श्लोकं प्रणीत्वा रत्नचन्दनम् ।
प्रदेशिन्या जल ... ... लिपेदुत्तरपश्चिमे ॥

**Colophon.** इति तान्त्रिकयात्रापद्धतिः समाप्ता ॥

**विषयः** । येषु येषु दिवसेषु नास्ति यात्राविधिस्तेषु तेषु दिवसेषु केन केन तन्त्रोक्तविधिना यात्रा शुभा भवेदिति निरूपणम् ।

---

**No. 146.** ताराताम्नम् . Substance, country-made paper, 14×2½ inches. Folia, 8. Lines, 5 on a page. Extent, 180 çlokas. Character, Bengali. Date, ? Place of deposit, Kānṭhālpārā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो भगवत्यै ।

कैलासशिखरे रम्ये देवदेवं महेश्वरम् ।
पप्रच्छ भैरवी देवी शयनीये सुखोषिता ॥
पुरा यो कथितो बुद्धशिष्ठो कुलभैरवो ।
केन मन्त्रेण देवेश सिद्धो तौ वद मे प्रभो ॥
इति पृष्टः स देवेशो भैरवीं वाक्यमब्रवीत् ॥

श्रीभैरव उवाच ।

स एव परमो देवो बुद्धरूपी जनार्दनः ।
उग्रतारामन्त्रमन्त्रं पञ्चार्थं परिजप्य च ॥
वस्त्रादि-कर्म्मकर्त्ता च चराचरामरतां ययौ ।
वशिष्ठोऽप्येनमाराध्य ब्रह्मलोकमागतः ॥ इत्यादि ।

**End.** ताराताम्नं चीनताम्नं कालीताम्नं प्रकृदितम् ।
सर्व्वथा गोपनीयैव शिष्यं भक्तःस्मोऽर्पयेत् ॥

इत्थं शिवाय शान्ताय माधवाय महात्मने ।
विश्वात्मने ह्यनन्ताय गुणानन्ताय सुव्रते ॥
अन्यत् यत् ... ... ... तत्सर्वं गुणकस्तनः ।
विश्वदेवादेऽपि श्रोतव्यं नात्र संशयः ॥

**Colophon.** इति भैरवभैरवीसम्वादे तारातन्त्रं समाप्तम् ॥

**विषयः ।** बुद्धदेवाचरितप्रातःकृत्यादिनिरूपणम् । विविधपूजासु मानसिकबाह्यिकपूजा-विधिनिरूपणम् । कुलाचारादिनिरूपणम् । पुरश्चरणनिरूपणञ्च ।

---

**No. 147.** तारापूजापद्धतिः. (ताराभक्तिसुधार्णवीया) Substance, palm-leaves, 20×2 inches. Folia, 36. Lines, 3 on a page. Extent, 492 çlokas. Character, Bengali. Date, Sk. 1631. Place of deposit, Mayamansimha, Çerpūr, Bābu Haracandra Caudhurī. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीगुरवे नमः ॥ अथ तारापूजा । × × × ज्ञाताज्ञातकृपापं क्षरम् निवारणार्थं ।
देवि त्वं प्राकृतं कर्म्म पापाक्रान्तमभूमम ।
तन्निःसारय चित्तान्मे पापं फट् फट् स्वाहा ॥ इत्यादि ।

**End.** निर्म्माल्यं शिरसि धृत्वा भूषण च पादोदकं भुक्त्वा भक्तेभ्यो नैवेद्यादिकं दत्वा स्वयमपि सुहृद्बान्धवैः सार्द्धं भुक्त्वा स्वात्मानं देवीरूपं ध्यात्वा यथासुखं किञ्चित्कालं विचरेत् ॥

**Colophon.** इति ताराभक्तिसुधार्णवे पूजापद्धतिः समाप्ता ॥ शकाब्दाः । १६३१ ।

**विषयः ।** तारादेव्याः पूजाविधिः प्रयोगश्च ।

---

**No. 148.** ताराहस्यम्, By ब्रह्मानन्दः. Substance, country-made paper, 12×4 inches. Folia, 80. Lines, 8 on a page. Extent, 1,440 çlokas. Character, Bengali. Date, Sk. 1735. Place of deposit, Mayamansimha, Nahāṭā, Paṇḍita Kāçīçvara Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमस्तारिण्यै ।
तारां तारतरां त्रिलोकजननीं सर्व्वार्थसिद्धिप्रदां
सर्व्वाद्यां प्रभदां सदाशिवमयीं देवैः सदा वन्दिताम् ।

नमा राजेसरोजे (?) सकलगुणमयीं तन्त्रवर्त्म तनोति
ब्रह्मानन्दस्त्वनुभवसुतः साधकानां हिताय ॥ इत्यादि ।

End पञ्चरश्मिमयं मन्त्रं ब्रह्मदीपापदं ततः ।
मदीयब्रह्मरक्षार्थं कुलाचारार्थमेव च ।
चाङ्गत्यं मद्वचो बुद्धा गोपयित्वा तु साधयेत् ॥
यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा शारदा
ताराराज्यमनुस्मरन् प्रियतमस्तोमावचः कारणम् ।

+ + + +

+ + + + ॥

Colophon. इति श्रीब्रह्मानन्द-परमहंस-परिव्राजकाचार्यविरचितं ताराहस्यं समाप्तम् ।
शाक १७१५ ॥

विषयः । प्रातःकृत्य-सन्ध्याकृत्यमन्त्रोद्धारादीनां निरूपणम् । शिवलिङ्गपूजादिनिरूपणम् । पूजाहोमादिनिरूपणम् । तत्त्वादिरहस्यनिरूपणम् । पुरश्चरणादिनिरूपणम् । एकजटास्तोत्र-कवचादिकथनञ्च ।

---

**No. 149.** तारिण्यष्टकम्, By रामजय. Substance, country-made paper, $17 \times 2\frac{1}{2}$ inches. Folia, 1. Lines, 6 on a page. Extent, $19\frac{1}{2}$ çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Paṇḍita Candrakānta Nyāyālaŋkāra. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमस्तारिण्यै ।
चण्डमुण्डमुण्डरक्तपानतोषकारिणी
मा कुरुष्व नाम मातरास्तु दैत्यनाशिनी ।
मध्यसङ्गभीतिदानमत्र ते च किं फलं
किङ्करे च तारिणीति मा कुरुष्व निष्फलम् ॥ १ ॥
घोरवैरिनाशचेष्टया च सर्व्वरक्षिणी
धर्म्मवर्त्मदर्शनेन सर्व्वपापनाशिनी ।
चाहवे च भैरवीति नाम ते च भीदकं
किङ्करे च तारिणीति मा कुरुष्व निष्फलम् ॥ २ ॥ इत्यादि ।

**End.** त्वद्गतस्य रोगशोकभीतिनाशकारिणी
तत्कथं न मे भवानि दुर्गतौघनाशिनी ।

अद्यामयीति नाम मे कथय मिदं यं
किङ्करे च तारिणीति मा कुरुष्व निष्फलम् ॥ ८ ॥
तारिण्यष्टकमेतदिह यो भक्त्या पठेत् प्रत्यहं
स श्रीरामजयेन रचितं विश्रेय दुःखापहम् ।
संसारे स पुनर्न पतितो लोको भवेत् सागरे
नश्याभीष्टसनत्सिमिह वै मोक्षञ्च पारत्रिकम् ॥ ९ ॥

विषयः । लोकभाषेन तारिण्या माहात्म्यादिकीर्त्तनम् ।

---

**No. 150.** तिथितत्त्वटीका, By काशीनाथतर्कालङ्कारः. Substance, country-made paper, $17\frac{1}{2} \times 4$ inches. Folia, 33. Lines, 8 on a page. Extent, 1,155 çlokas. Character, Bengali. Date, ? Place of deposit, Pharidpur, Nadiyā. Paṇḍita Çaçibhuṣaṇa Smṛitiratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो रघुनन्दनाय ।
काशीनाथं प्रणम्याथ श्रीकाशीनाथधीमता ।
क्रियते तिथितत्त्वीयकूटार्थस्य निरूपणम् ॥
प्रणम्येति । प्रकर्षेण नत्वेत्यर्थः । नमस्कारस्य ज्ञापकपक्षबोधकत्वापारः ;
धात्वर्थतावच्छेदकफलस्य ज्ञापकर्षं एव । रामस्य नद्वत्ताभावात् धात्वर्थता-
वच्छेदकफलशालित्वं न स्यात् । इत्यादि ।

**End.** पर्वनद्दाहस्तु तत्तिथौ कार्य्यः एवं पर्वनरदाहप्रयुक्तत्रिरात्राशौचं व्यवहृत्य
तदशौचान्ते वृषोत्सर्गादिकं आद्यश्राद्धञ्च कर्त्तव्यम् । एवं पर्वनरदाहं विना
न तथायं व्रत इत्यवधारणात् सपिण्डानां त्रिरात्राशौचं मुख्यमरणानन्तरं
सम्वत्सराभ्यन्तरेऽपि सपिण्डानां तद्विधानात् । पर्वनरदाहे त्रिरात्राशौचन्तु
सपिण्डमात्राणां इति शूलपाणिप्रभृतीनां मतं । वाचस्पतिटीकाकृद्च्युत-
चक्रवर्त्तिमतन्तु दाहकस्यैव त्रिरात्राशौचं नान्येषामिति । यत्र द्वादशाब्दोत्तरं
गमनतिथौ पर्वनरदाहे प्रतिमासे गमनजातीयतिथौ प्रातिमासिकं कर्त्तव्य-
मिति व्यवहारः पतितवत् कृष्णैकादश्यां अमावस्यायाम्वा कार्य्यमित्यनेन यत्र
.. .. .. .. .. .. .. .. तत्र द्वादशाब्दोत्तरतिथौ गमनतिथिं विनापि पर्वनरदाहः
कार्य्यः । यत्र गमनतिथिरपि विस्मृता तत्रापाढाद्यन्यतममासीय कृष्णैका-
दशीममावस्याम्वा आदाय द्वादशाब्दगणनया तदुत्तरं कृष्णैकादशीममा-
वस्याम्वा मृततिथिं मत्वा श्राद्धादिकं कार्य्यमिति ।

भामान्यकाण्डगहनं सहसा प्रविष्टं
नाद्रियुतं सरभसिंहविचक्रमाणाम् ।
वाकपाटवं निजमवेक्ष्य यक्षप्रयत्नै-
र्निर्भ्रममेव बुधा प्रयासः ॥ (?)
सामान्यकाण्डं तिथितत्त्वखण्डं
मत्स्याण्डमध्ये + + + + मूर्खे ।
+ + + + + कृतिनां प्रचण्डं
शाखाप्रकाण्डं स्मृतिशास्त्रखण्डम् ॥

Colophon. कर्कटाम्बरवेर्मानि चचन्द्रे गुरुवासरे ।
वद्नादिमचन्द्रेण लिखिता पुस्तिका मया ॥
टीकेयं तिथितत्त्वस्य सामान्यकाण्डकस्य + ।
+ + + ॥

विषयः । रघुनन्दनभट्टाचार्य्यकृततिथितत्त्वस्य व्याख्यानम् ॥ (सामान्यकाण्डपर्य्यन्तम्)

---

**No. 151.** **तिथिनिर्णयः,** By **रमापतिशर्म्मा.** Substance, country-made paper, $12\frac{1}{2} \times 2\frac{1}{4}$ inches. Folia, 93. Lines, 5 on a page. Extent, 1,424 çlokas. Character, Bengali. Date, Sk. 1633. Place of deposit, Dhākā Hāḍiyā, *viâ* Vaidyervāzār, Çriyukta Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा कृष्णपदद्वन्द्वं श्रीरमापतिशर्म्मणा ।
क्रियते निर्णयस्तिथेर्बालानां सुखबुद्धये ॥
तत्र प्रायशः सङ्कल्पानामेव कर्म्मणामारम्भकत्वात् आदौ स एव निरूप्यते ।
कायवाङ्मनोभी रचितं कर्म्म फलाय समर्थमिति श्रुत्वा तथाषामङ्गलमुक्तम् ।
तत्र केन रूपेण कल्याणत्वमित्यत आह मनसा सङ्कल्पयति वाचा अभिलपति
कर्म्मणा चोपपादयतीति । सङ्कल्पयतीति अमुककामेन मया इदं कर्त्तव्य-
मिति निश्चिनोति । वाचा वाक्येनाभिलपति मनसा निश्चितमर्थं तद्बोधक-
पदैरभिधत्ते । कर्म्मणा कायव्यापारेण उपपादयति यथाविधि समापयती-
त्यर्थः । सङ्कल्पयतीत्यादिषु विध्यर्थे लट् । ननु अमुककर्म्माहं करिष्ये इति

मङ्गलञ्च कर्म्मपदेन साङ्गप्रधानमेव कर्म्मोच्यते । तथाच किञ्चिदपि यङ्ग मङ्गलात् प्रागनाचरणीयं करिष्ये इति प्रतिज्ञाबाधापत्तेः । अथ कर्त्तव्याभिधानसङ्कल्पदेवतावाहनादौ का गतिः न च तत्राङ्गत्वमिति वाच्यं तस्य प्रधानोपकारकत्वाभावे स्वातन्त्र्येण फलवत्त्वाभावेन तत्करणस्य वैयर्थ्यापातात् उच्यते तत्राङ्गपदेन प्रधानप्रयोगान्तर्गतमङ्गमुच्यते । स्नानसन्ध्याशिखाबन्धनादे र्न प्रधानान्तर्गतत्वं × × विशिष्टशिखाबन्धनस्यादृष्टविनाशित्वनादृष्टद्वारा यङ्गत्वम् । पूर्व्वदिनकर्त्तव्यदेवतावाहनादिवारणाय प्रधानेत्यादि प्रधानान्तर्गतत्वञ्च प्रधानकालकर्त्तव्यत्वेन वेदबोधितत्वम् । प्रधानकालश्च सङ्कल्पावधिकर्म्मसमाप्तिपर्य्यन्तो ग्राह्यः । न च शिखाबन्धनस्यादृष्टजनकत्वे तत्पूर्व्वेणैव प्रधानपूर्व्वसिद्धौ कर्म्मकाले मुक्तशिखस्यापि कर्म्म साङ्गं भवत्विति वाच्यं तदानीं शिखामोचनेन पूर्व्वापूर्व्वनाशात् । इत्यादि ।

**End.** ॐ अद्याक्षयतृतीयायां गङ्गातीरे सर्व्वदानसर्व्वयज्ञसर्व्वतीर्थे सर्व्वतपोजन्यफलसहस्रगुणफलप्राप्ति सूर्य्यकोटिप्रतीकाशदिव्यस्त्रीकोटिसंयुतदिव्यरत्न...... विचित्रबहुविमान ... ... कालयकालव्यापि-स्वपितृगणसहित स्वक्रीडनदातव्यग्रामभूप ... ... ... ... ... ... ... ... बहुभोगोपभोगपूर्व्वकयोगिकुलजन्माणिमादिगुणयुक्त ... ... ... ... ... परमब्रह्मलयकाम इमं ग्राम विष्णुदैवतमित्यादि ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... तथाच शास्त्रे ।

सर्व्वदानानि नियमा यमाश्चैव तपांसि च ।
यज्ञो दानं तथा जप्यं श्राद्धन्तु सुरपूजनम् ।
गङ्गायान्तु कृतं पापं कोटिकोटिगुणं भवेत् ॥

**Colophon.** इति श्रीरमापतिसिद्धान्तविरचितं दानाधिकार × × समाप्तम् ।

रामविष्टतुचन्द्रमिते च शाके
नत्वा भवानीचरणारविन्दम् ।
आषाढमासस्य सितानवम्या-
मलेखि यत्ना ...... शर्म्मा ॥

श्रीकृष्णाय नमः ।

भग्नपृष्ठकटीग्रीव ... ... ... रधोमुखः ।
यत्नेन लिखिता चेयं पुत्रवत् परिपालयेत् ।
श्रीमद्गुरवे नमः । श्रीकृष्णाय नमः × गणपतये नमः

विषयः। सङ्कल्पनिरूपणम्। मलमासनिरूपणम्। वैदिककर्म्मसु मासोल्लेखविधानम्। उपवासविधिः। सन्ध्याविधिः। निषेधपर्य्युदासविवेचनम्। विकल्पविवेचनम्। युग्मादिविवेचनम्। सायाह्नादिकालनिर्णयः। आपराह्णिकश्राद्धकालकथनम्। निमित्तोल्लेखे विधिनिरूपणम्। जन्मतिथिव्यवस्थानिर्णयः। शूद्रस्यानुपनीतस्य च पौराणिकमन्त्रपाठनिषेधकथनम्। प्रतिपदादितिथिनिरूपणम्। तत्र कुष्माण्डादिभक्षणनिषेधकथनञ्च। अथ द्वितीयानिरूपणम्। तत्र रथद्वितीयाया भ्रातृद्वितीयायाश्च निर्णयः। अथ तृतीयानिरूपणम्। अथ चतुर्थीनिरूपणम्। तत्र नष्टचन्द्रनिरूपणम्। अथ पञ्चमीनिरूपणम्। तत्र नागपञ्चमी-श्रीपञ्चमीनिर्णयः। अथ षष्ठीनिरूपणम्। तत्र अरण्यषष्ठी-स्कन्दषष्ठीनिरूपणम्। एवं सप्तम्यादितिथीनां तत्तत्तिथिविशेषव्रतानाञ्च निर्णयः। अथ यजमानस्याशौचे पुरोहितेनैव तत्कार्य्यमिति व्यवस्थादिनिरूपणम्। आबोधनात् दक्षिणान्तपर्य्यन्तं दुर्गोत्सवे तत्तत्तिथिकर्त्तव्यादिनिर्णयः। अथ मत्स्यादित्यागफलकथनम्। हरिशयनव्यवस्थाकथनम्। अघोरचतुर्द्दश्यादिव्रतनिर्णयः। कालिकापूजाशिवरात्रिव्यवस्थाकथनम्। कोजागरकृत्यकथनम्। दोलयात्राव्यवस्थाकथनम्। रविसंक्रमणरात्रिसंक्रमण-सन्ध्यासंक्रमणानां निर्णयः। संक्रमणे निषिद्धविहितोभयरूपकर्म्मणां निर्णयः। कार्त्तिककृत्यनिरूपणम्। कार्त्तिकमाघादिमासे प्रातःस्नानविधिः। ग्रहणे पार्व्वणविधिकश्राद्धविधिकथनम्। अमावस्याकृत्यनिरूपणम्। आश्वयुक्कृष्णपक्षश्राद्ध-तिलतर्पण-उल्कादानलक्ष्मीपूजादिकथनम्। अर्द्धोदययोगनिरूपणम्। मन्वन्तरानिरूपणम्। भूम्यादिदानाधिकारकथनञ्चेति ॥

---

**No. 152.** तिथिविवेकः, By शूलपाणिः. Substance, country-made paper, 12×3 inches. Folia, 8. Lines, 6 on a page. Extent, 168 çlokas. Character, Bengali. Date, Sk. 1723. Place of deposit, Bhāṭpāḍā, Paṇḍita Rāmendra Nyāyavāgīça. Appearance, old. Prose. Correct.

**Beginning.** ॐ परमदेवतायै नमः।

वचनद्वैधसंजातसंशयच्छिद्गुरः सताम्।

तनोतु मुदमत्युच्चैर्द्विखण्डतिथिनिर्णयः॥

प्रतिपदादितिथिविशेषविहितानां स्नानदानादिकर्म्मणामखण्डतिथौ निःसंशयमनुष्ठानम्। यदा तु वृद्धिह्रासादिना दिनद्वयेऽपि तत्तत्तिथिप्राप्तिस्तदा कुत्र क्रियते इति संशये कथं निर्णयः तत्र संवत्सरप्रदीपः।

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः।

तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्॥ इत्यादि।

End. अस्तं गते चन्द्रे यथा वायुपुराणम् ।
द्विरात्रौ व्रतं यत्र एकमेव तिथौ यथा ।
तस्यामुभयगामिन्यामाचरेत्तु व्रतं व्रती ॥
तेन प्रतिपद्युक्तापि द्वितीया कर्म्मार्थं द्विरात्रौ च लभ्यते तदा न युग्मादरः कार्य्यः । द्वितीया तृतीया युगादिने द्वितीयाकालस्याभावादित्यर्थः ॥

Colophon. इति माकुड़ियाल महामहोपाध्याय-श्रीशूलपाणिविरचित-तिथिविवेकः समाप्तः ॥ शकाब्दाः । १७२३ ॥

विषयः । तिथिविशेषे कार्य्यविशेषाणां निरूपणम् । तिथिद्वयप्राप्तकर्म्मनिकराणां कर्त्तव्यकालादिनिरूपणञ्च ।

---

No. 153. तीर्थतत्त्वं, By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper. 18×4 inches. Folia, 18. Lines, 6 on a page. Extent, 432 çlokas. Character, Bengali. Date, ? Place of deposit, Vāḍari, Mayamansimha, Paṇḍita Rāmakamala Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमः कालिकायै ।
प्रणम्य सच्चिदानन्दं रामं कामदमीश्वरम् ।
स्मृतितत्त्वे तीर्थतत्त्वं वक्ति श्रीरघुनन्दनः ॥
अथ यात्राविधिः । प्रथमं तीर्थयात्रा । पूर्व्वदिने संयतो भूत्वा यात्रादिने तीर्थयात्रानिमित्तकं वङ्कसर्पिःसमन्वितं वृद्धिश्राद्धं विधाय पार्व्वणश्राद्धं कृत्वा गृहाद्यात्रा कर्त्तव्या ॥ इत्यादि ।

End. ऋणमोचनं तीर्थं + + + + + यमुनाया उत्तरकूले ऋणमोचनस्नाने पितृऋणमोचनपूर्व्वकाभिमतफलप्राप्तिः फलम् । यत्र यत्र यद्यद्फलमुद्दिष्टं तत्र तत्तत्फलकामः कर्म्म कुर्य्यात् । ततः स्वदेशगमने सति यत्कर्त्तव्यं तत्प्रागेव लिखितमिति ॥

Colophon. इति वन्द्यघटीय-हरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचित तीर्थ-प्रयोगतत्त्वं समाप्तम् ॥

विषयः । तीर्थयात्रादिनिरूपणमुखेन गयाप्रयागाद्यादितीर्थकर्त्तव्यकर्म्मनिरूपणादिनिरूपणम् ॥

---

**No. 154.** तुलापुरुषदानपद्धतिः, By नारायणभट्टः. Substance, country-made paper, 10 x 6 inches. Folia, 35. Lines, 10 on a page. Extent, 1,102 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares, Paṇḍita Bindhhyēçvarīprasāda Dube. Appearance, very old. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

विश्वेश्वराख्यौ रघुनाथनाम्नौ
प्रणम्य रामेश्वरभट्टसूनुः ।
नारायणाख्यस्तनुते विचार्य
तुलामहादानविधिप्रयोगः ॥ इत्यादि ।

**End.** ततः पूतेनानेन तुलापुरुषदानेन परमेश्वर' प्रीयतामितीश्वर + + + + मन्त्राग्निपौ गृहीत्वा तान् सानुनयं विसृज्य + + + भुञ्जीतेति ।

**Colophon.** इति श्रीमद्विद्वन्मुकुटमाणिक्य-श्रीरामेश्वरभट्टसुत-नारायणभट्टकृता तुलापुरुष दानपद्धतिः समाप्ता ॥

**विषयः।** तुलापुरुषदाने विधिव्यवस्थादिकथनं तत्प्रयोगश्च ।

---

**No. 155.** त्रिकूटारहस्यम्। Substance, country-made paper, 18 x 5 inches. Folia, 65. Lines, 9 on a page. Extent, 2,100 çlokas. Character, Bengali. Date, ? Place of deposit, Mājpāḍā, Vikramapura, District Dhākā, Bābu Rāsavihārī Rāya. Appearance, fresh. Prose and verse. Incorrect.

**Beginning.** श्रीभैरव्यै नमः ।

अथ त्रिकूटारहस्यम् । तत्र सूर्य्यग्रहणे पूजापद्धतिर्लिख्यते । सूर्य्योदये विधिवत्साधकः स्नात्वा धरण्यां यन्त्रं सिन्दूरेण रक्तचन्दनेन वा विलिख्य स यथा ।

त्रिकोणं बिन्दुसंयुक्तमष्टकोणं महेश्वरि ।
वृत्तमष्टदलं देवि भूगृहेणोपशोभितम् ॥

इति विलिख्य आसनशुद्धिमातृकान्यासं विधाय ऋष्यादिन्यासं कुर्य्यात् । अस्य सूर्य्यग्रहणपूजामन्त्रस्य सदाशिवऋषिः पंक्तिश्छन्दः श्रीभैरवी देवता वाग्भवबीजं तार्त्तीयशक्तिं कामराजकीलकं धर्म्मार्थकाममोक्षार्थे पूजायां विनियोगः । इत्यादि ।

**End.** सर्व्वधर्म्मेषु यद्धर्म्मं सर्व्वशास्त्रेषु यत्फलम् ।
सर्व्ववेदेषु प्रोक्तेषु यत्फलं परिकीर्त्तितम् ॥
तत्पुण्यं कोटिगुणितं सकृज्जप्त्वा लभेन्नरः ।
भुक्त्वा भवेच्च बलवान् पुत्रवान् सर्व्वसम्पदः ॥
देहान्ते परमं स्थानं यत् सुरैरपि दुर्ल्लभम् ।
स यास्यति न सन्देहः स्तवराजप्रकीर्त्तनात् ॥

**Colophon.** इति त्रिकूटारहस्ये महात्रिपुरसुन्दरीसहस्रनामस्तोत्रं सम्पूर्णम् ॥

**विषयः ।** (आदर्शोऽयमाद्यन्तहीन इति विज्ञेयम् ।) अथ प्रथमं सूर्य्यग्रहणकालीनपूजा-पद्धतिः । एवं चन्द्रोपरागे पूजाविधिः । भूमिकम्पादौ पूजाविधिः । अथ चैत्रमासादौ नव-रात्रपूजाविधिः । आश्विने नवरात्रपूजाविधिः । कन्यासंक्रान्तौ पूजाविधिः । अथ स्नानादि-विधिः । दीपदानविधिः । शक्तिपूजाविधिः । अथ श्रीविद्याया मन्त्रोद्धारादिकथनम् । तद्ध्या-नादिकथनम् । त्रिकूटानिरूपणम् । तत्र पुरश्चरणविधिः । कुलाचारविधिः । वामाचार-विधिः । कामेश्वरमन्त्रोद्धारादिकथनम् । तस्य त्रिकूटोद्धारविधिः । त्रिकूटाया नित्यपूजा-विधिः । त्रिकूटागायत्रीकथनम् । अथ समयपूजानिरूपणम् । अथ पञ्चरत्नेश्वरीविद्याकथनम् । अथ वज्रपञ्जरकवचकथनम् । चिन्तामणिकवचकथनम् । जगन्मङ्गलकवचकथनम् । जगदीश-कवचकथनम् । कामिककवचकथनम् । अक्षरनामकवचकथनम् । विक्रमनामकवचकथनम् । त्रैलोक्यभूषणनामकवचकथनम् । विरूपाक्षकवचकथनम् । सर्व्वार्थसाधकनामकवचकथनम् । सर्व्व-सिद्धिप्रदनामकवचकथनम् । वैरिनाशनकवचकथनम् । विजयकवचकथनम् । विषापहकवच-कथनम् । शक्तिसाधनकवचकथनम् । त्रिकूटातन्त्रस्य खण्डे संस्थापनफलकथनम् । अथ महा-शक्तिन्यासकथनम् । कामराजमन्त्रकथनम् । श्रीविद्यापूजापद्धतिः । तत्र जपहोमादिविधिः । अथ काम्यहोमद्रव्यादिकथनम् । अथ श्रीचक्रमाहात्म्यादिकथनम् । पञ्चमीस्तवराजकथनम् । मकरन्दस्तवराजकथनम् । श्रीचक्रसौभाग्यकवचकथनम् । त्रिपुरसुन्दरीसहस्रनामकथनञ्च ।

---

**No. 156.** त्रिपुरान्तकशिवपूजा । Substance, country-made paper, 12 x 4 inches. Folia, 2. Lines, 7 on a page. Extent, 47 çlokas. Character, Bengali. Date, ? Place of deposit, Káṭiháli, District Mayamansimha, Paṇḍita Jagaccandra Smṛtipañcānana. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । पार्व्वत्युवाच ।
वद ईशान सर्व्वज्ञ सर्व्वतत्त्वविदांवर ।
महारोगे महादुःखे महादारिद्र्यसङ्कटे ॥

नानाव्याधिगते वापि नानापीड़ादिसङ्कटे ।
राज्यनाशे राजभये कारागारगते पुनः ॥
राज्ञः गृहे च देवेश तथाच ग्रहपीड़िते ।
केनोपायेन तं नाथ मुच्यते वद शङ्कर ॥

End. सर्व्वाणि सिता कमले लभते नात्र संशयः । (?)
सत्यं सत्यं महेशानि मम वाक्यं वृथा नच ॥

Colophon. इति लिङ्गार्च्चनतन्त्रे त्रिपुरात्मकशिवपूजा समाप्ता ।

विषयः । त्रिपुरात्मकशिवपूजाविधिस्तत्प्रयोगश्च ।

---

**No. 157.** **त्रिपुरासारसमुच्चयः.** By **भट्टनागः.** Substance, country-made paper, $11 \times 2\frac{1}{2}$ inches. Folia, 24. Lines, 6 on a page. Extent, 198 çlokas. Character, Bengali. Date, ? Place of deposit, Kānṭhālpāḍā, Post office Naiháṭi, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Verse. Generally correct.

Beginning. ॐ नमो भैरव्यै ।
प्रश्नः प्राचीनबर्हिःप्रमुखसुरवरालीककोटीरकोटि-
स्निह्यद्यद्येन्द्रनीलामलमपि मधुप ... ... ... ।
श्रीपादाम्भोजयुग्मं नखमुखविलसद्रश्मिकिञ्जल्कपुञ्जम्
सिञ्जन्मञ्जीरहंसीमुखरितमनिशं मङ्गलं वो भवान्याः ॥
भक्त्या गुरोर्भवपयोनिधिपारहेतून्
श्रीपादपद्मधूलिरेणुकणान् प्रणम्य ।
लम्बोदरञ्च कथयामि गुरूपदिष्ट-
माराधनक्रममहं कुलनायिकायाः ॥

End. उर्व्वीभूतशिरोवजानुवरयोर्मुक्तांश्च भीमाहतीन्
भीतीशेन निशाकरार्द्धरचितेनाभ्यर्च्चयेत् साधकः ।
प्रियङ्गुश्यामाङ्गं परिकलितपाणिं मणिमयो-
ल्लसच्चूड़ापीड़ं द्विरदवरसाधिष्ठिततनुम् ॥ ० ॥

Colophon. इति भट्टनागविरचिते त्रिपुरासारसमुच्चयेऽष्टमः पटलः ॥

**विषयः।** अत्र प्रथमं त्रिपुरोत्पत्तिनिरूपणम्। ततो न्यासादिनिरूपणम्। नाड्यादिनिरूपणम्। नाड्यादिस्थितिनिरूपणम्। त्रैपुरयन्त्रादिनिरूपणञ्चेति।

---

**No. 158.** **दक्षिणकालिकास्तवः।** Substance, country-made paper, 13 × 1 inches. Folia, 2. Lines, 2 on a page. Extent, 12 çlokas. Character, Bengali. Date, ? Place of deposit, Vidyākūṭa, District Tripurā. Bābu Kedāranātha Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** अथ श्यामास्तवः।

मद्दामेघप्रभां घोरां बालार्कलोचनत्रयाम्।

रुण्डमालिनीं वन्दे देवीं दक्षिणकालिकाम्॥ इत्यादि।

**End.** मुनीन्द्रैः पूजितामाद्यां सर्व्वदेवैर्नमस्कृताम्।

सर्व्वाशापूरणीं वन्दे देवीं दक्षिणकालिकाम्॥

इति स्तोत्रं पठेत् यो हि सर्व्ववाञ्छाफलप्रदाम्।

तस्य गेहे रमेल्लक्ष्मीः सर्व्वत्र विजयी भवेत्॥

**Colophon.** इत्येकवीरकल्पे दक्षिणकालिकास्तवः समाप्तः।

---

**No. 159.** **दक्षिणकालिकास्वरूपाख्यस्तोत्रराजपश्वाचारटीका।** Substance, country-made paper, 11 × $3\frac{1}{2}$ inches. Folia, 18. Lines, 9 on a page. Extent, 500 çlokas. Character, Bengali. Date, Sk. 1781. Place of deposit, Bhāṭpāḍā 24-Parganas, Paṇḍita Rāmendra Nyāyavāgīça. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमः परदेवतायै॥

कालीं कालहरां परात्परतरां विश्वम्भरां श्रीधरां

पूर्णानन्दपरां पराभयकरां ब्रह्माण्डभाण्डोदराम्।

कालीनाथहृदम्बुजासनकरां स्वर्गापवर्गप्रदां

चन्द्रार्काग्निविनिन्द्यदीपनधरां सर्व्वाश्रयामाश्रये॥

प्रणम्य जगदीशानं कृष्णनाथं शिवं गुरुम्।

टीकेयं सुखबोधाय सदम्बसेन तन्यते॥

अथ श्रीमद्दक्षिणकालिकायाः परमकारुणिक-श्रीमन्महाकालविरचित-कर्पूर-मित्यादिस्वरूपाख्यस्तोत्रस्य वामाचारविहित-नानार्थाख्यामत्वेऽपि दिव्यवीर-मयो भावः कलौ नास्ति कदाचन। इत्यादि।

**End.** एवं च केवलिकलया चेतया प्रतिजन्मः प्रतिजन्मनि भक्तो भवति। स च चिरं चिरकालं जीवन्मुक्तो भवति। एतत् स्तोत्रपठनं यत् यत् फलं तत्तु साधकस्तोत्ररोत्तरमिष्टाभेदेनोत्तरोत्तरं बोद्धव्यमिति तात्पर्य्यार्थः॥

**Colophon.** इति श्रीमन्महाकालविरचित-श्रीमद्दक्षिणकालिकास्वरूपाख्यस्तोत्रराजपञ्चाचारविरचितटीका समाप्ता॥ ०॥ शकाब्दाः। १०८१।

**विषयः।** कर्पूरादिस्तोत्रनाम्ना प्रसिद्धस्य कालिकास्वरूपाख्यस्तोत्रस्य पञ्चाचारविरचिता व्याख्या॥

---

**No. 160.** दत्तकतत्त्वनिर्णयः. By हरिनाथमिश्रः. Substance, country-made paper, 14×3 inches. Folia, 15. Lines, 5 on a page. Extent, 234 çlokas. Character, Bengali. Date, ? Place of deposit, Varasikurā, District Mayamansimha, Paṇḍita Jayanātha Tarkālaṅkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

सशिवस्य शिवस्य शिवस्य पदं
पदमस्तसमस्तमशस्तपदम्।
प्रणिपत्य विगत्य विशेषपद-
स्तनपत्यमपत्यविशेषविधिम्॥
वक्तुं श्रीहरिनाथशर्म्मण इह ग्रन्थे प्रवृत्तिः सता-
मामोदाय विधाय मत्सरमिदं श्रीयन्निधीरायत। (?)
ग्रन्थं दत्तकतत्त्वनिर्णयमिमं शुद्धिः सुलब्ध्या तथा
गाङ्गेयस्य धनञ्जयेन विहिता शुद्धिर्यथा मानवैः॥
न कार्य्यं मात्सर्य्यं परमहत्तिमो ग्रन्थविषये
कृपापारावारा भवत भवतः प्रार्थय इदम्।
न दूष्यं वै दूष्यं निजमपि च यत् कुत्सितवचः
... ... ... मम भवतु मोदाय भवताम्॥

तत्र मरीचिः।

अनपत्यस्य लोकेऽस्मिन् गतिः काच न विद्यते।
तस्मात् तेन प्रकर्त्तव्यः पुत्रः प्रतिनिधिः सदा॥
एतच्च कन्याया अपि अपत्यत्वात् ततृसत्त्वेऽपत्यसामान्याभावरूपानपत्यता विरहात्। इत्यादि।

**End.** स पितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।
पिण्डानोदकदानात् तेषां तस्याभावेऽपि तत्क्रमात् ॥ (?)
पिता कुर्य्यात् तदन्यो वा तस्याभावेऽपि तत्क्रमात् ॥
इति वचनाभ्यां मृतपितृकौरसपुत्रस्येव संस्कार्य्यक्रमेण सपिण्डादिभिः कर्त्तव्या इति ।
विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया ।
तत् क्षमध्वं बुधैरेव दत्तकस्तु भुतमया ॥

**Colophon.** इति हरिनाथमिश्रविरचितो दत्तकतत्त्वनिर्णयः समाप्तः ।

**विषयः ।** दत्तकविध्यादिनिरूपणमुखेन तद्ग्रहणविध्यादिनिरूपणम् ।

---

**No. 161.** दत्तकदीधितिः. By अनन्तभट्टः. Substance, country-made paper, 19 × 4 inches. Folia, 11. Lines, 7 on a page. Extent, 351 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāti, Paṇḍita Haraprasāda Çāstri. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
श्रुतिस्मृतिपुराणादिमीमांसान्यायविस्तरम् ।
विचार्य्यानन्तभट्टेन क्रियते दत्तदीधितिः ॥
तत्रादौ दत्तकग्राह्याग्राह्यविवेचनम् । इत्यादि ।

**End.** ततश्च प्रतिपत्तौवा उपनयनान्तसंस्कृतस्यौरससमानांशभागित्वं दत्तकस्य तत्कर्त्तृकसकलकृतदत्तसंस्काररहितस्य तु विवाहमात्रधनलाभो नान्यधन-लाभः । सत्यौरसे कतिपयसंस्कारलाभे चतुर्थांशलाभ इति व्यवस्था । इति दायादनिर्णयः । दत्तकपुत्राणामपि स्वीकार उक्तविधिना कार्य्यः । वक्ष्यामि पुत्रसंग्रहमित्यादिगतपुत्रपदस्य पुमान् पुत्र इत्यादिविवक्षाभावात् इति-हासपुराणेषु कन्यादत्तकोक्तेश्च पत्न्यभावे सा रिक्थं लभते दुहितृत्वादिति शिवम् ।
सतां सन्तोषसिद्ध्यर्थमिति दत्तकदीधितिः ।
व्यकार्य्यनन्तभट्टेन तेन तस्य सुदेऽस्तु सा ॥

**Colophon.** इति महामहोपाध्याय श्रीमदनन्तभट्टविरचिता दत्तकदीधितिः सम्पूर्णा ।
* श्रीरस्तु मयि लेखके ॥

विषयः। अथ प्रथमं दत्तकपात्रापात्रत्वादिविचारः। ततो दत्तकग्रहणयागहोमादिनिर्णयः। दत्तकानां विवाहाद्युपयोगिगोत्रादिनिर्णयः दत्तकसापिण्ड्यविवेचनम्। धनविभागनिर्णयश्च॥

---

**No. 162.** दत्तकोज्ज्वलः. By वर्द्धमानः. Substance, country-made paper, 20×3 inches. Folia, 7. Lines, 5 on a page. Extent, 408 çlokas. Character, Bengali. Date, ? Place of deposit Naihāṭi, Paṇḍita Haraprasāda Çāstri. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय॥

निधाय हृदये कालीचरणं सर्व्वसिद्धिदम्।

विप्रश्रीवर्द्धमानेन क्रियते दत्तकोज्ज्वलः॥

मन्वादिवाक्यमाश्रित्य परस्परविरोधिनाम्।

विदुषां संशयच्छित्त्यै सिद्धान्तोऽत्र प्रकाश्यते॥

इह यद्यपि प्रथमपुत्रोत्पादनेनैव पितॄणामनृणत्वं मन्वादिभिरभिहितं तथापि तत्पुत्रमरणे प्रपौत्रपर्य्यन्तरहितस्याजातपुत्रस्य च पिण्डोदकक्रियार्थं पुनः पुत्रकरणमावश्यकं यदाह मनुः। इत्यादि।

**End.** दत्तकस्य उपरितनपुरुषत्रयसन्ततिजनने मरणे वा त्रिरात्राशौचमिति। दत्तकस्य जनककुले सम्बन्धाभावतया अशौचं नास्तीति। अशौचदत्तकस्य प्रतीत्वकुले सम्पूर्णाशौचमिति कश्चित्. दत्तकपुत्रस्य औरसतया सम्पूर्णाशौचं पार्व्वणाधिकारित्वञ्च इति। दत्तकस्य पुनरुत्पन्नपश्चादौरसेन सार्द्धं चतुर्थांशभागित्वमिति। दत्तकस्य पुनरुत्पन्नपश्चादौरसेन सार्द्धं समांशित्वमित्यपि कश्चित्।

**Colophon.** इति महामहोपाध्याय-श्रीवर्द्धमानकृत दत्तकोज्ज्वलः समाप्तः॥ श्रीगुरवे नमः।

विषयः। दत्तकग्रहणविध्यादयः संक्षेपेण प्रकाशिताः। मतभेदाश्च प्रदर्शिताः। औरसपुत्रेण सार्द्धं दत्तकस्य धनविभागश्च सम्यक् विचार्य्य विवेचितः।

---

**No. 163.** दानकौमुदी, (क्रियाकौमुदीग्रन्थीया). By गोविन्दानन्दकविकङ्कणाचार्य्यः. Substance, country-made paper, 13×2½ inches. Folia, 119. Lines, 5 on a page. Extent, 2,231 çlokas. Character, Bengali. Date, Sk. 1533. Place of deposit, District Vāñkuḍā, Viṣṇupura, Rāmavallabha Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

Beginning. (अस्य प्रथमपत्रत्रयं नास्ति तेन चतुर्थपत्रप्रारम्भवाक्यं लिखितम् ।)
छन्दोगस्तु कइदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविशत् कामेन त्वां प्रतिगृह्णामि कामैतत्ते इति पठित्वा अमुकद्रव्यं अमुकदैवतमिति वदेत् । इदमत्र विचार्य्यते । मनसा सङ्कल्पयति वाचाभिलपति कर्म्मणा चोपपादयतीति हारीतवचनादमुककामनया मयेदमनुष्ठातव्यमिति सङ्कल्पितस्य कर्म्मणो वाचाभिलापे कर्त्तव्ये एकयुगबद्धवाहिन्यायेन फलस्याभिलापो दुर्निवारः । तथाच गोतमः ।

अन्तर्जानुकरं कृत्वा सकुशं सतिलोदकम् ।
फलं समभिसन्धाय प्रदद्यात् श्रद्धयान्वितः ॥ इत्यादि ।

End. ॐ पूर्णादर्व्वीत्यन्तं ॐ सप्तते इत्यन्तं ॐ पुनस्त्वे इत्यन्तं स्वाहान्तेन मूलमन्त्रेण च पूर्णाहुतिं समाप्य ब्रह्मदक्षिणां दत्वाग्निं विसर्जयेत् । ॐ समुद्रं गच्छ स्वाहेतिमन्त्रेणाग्निं विसृजेत् । ॐ दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः पृथिवीं भस्मना पृण स्वाहा इति त्वग्निं शीतलयेत् । इत्यग्निसंस्कारविधिः ॥
अग्नेर्नामान्युक्तानि कपिलपञ्चरात्रे ।

लौकिके पावको ह्यग्निः प्रथमः परिकीर्त्तितः ।
अग्निस्तु मारुतो नाम गर्भाधानेऽभिधीयते ॥
पुंसवने चन्द्रनामा शुङ्गात् (?) कर्म्मणि शोभनः ।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्म्मणि ॥
नाम्नि वै पार्थिवो नाम प्राशने च शुचिस्तथा ।
सत्यनामाथ चूड़ायां व्रतादेशे समुद्भवः ॥
गोदाने सूर्य्यनामेति केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः ॥
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे च पावकः ॥
पूर्णाहुत्यां मृड़ो नाम शान्तिके वरदस्तथा ।
पौष्टिके बलदश्चैव क्रोधोऽग्निरभिचारिके ॥
प्रायश्चित्ते विधुश्चैव पाकयज्ञे हुताशनः ।
देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः ॥
वश्यार्थे कामदो नाम वनदाहे तु दूतकः ।
कोष्ठे तु जठरोऽग्निस्तु क्रव्यादमृतके तथा ॥

समुद्रे वाड़वो वह्निः चये सम्बर्त्तको भवेत् ।
लचहोमे च वह्निः स्यात् कोटिहोमे हुताशनः ॥
मत्स्यसूक्तप्रतिष्ठायां कोच्चितच प्रकीर्त्तितः ।
... ... ... वास्तुयागे प्रजापतिः ॥
जलाशयप्रतिष्ठायां वरुणः समुदाहृतः ।
एतानि होमे नामानि ज्ञातव्यानि चविभुजः ॥
चाऊय चैव होतव्यं यो यत्र विहितोऽनलः ॥
गणपतिभट्टतनुजो गोविन्दानन्दपण्डितः श्रीमान् ।
समकृत सन्तोषार्थं सत्त्ववतां दानकौमुदीमेताम् ॥
सर्व्वान्तर्यामिने तस्मै गोविन्दाय नमो नमः ।
चत्रानुरागं धास्यन्ति यत्कृपाभिर्विपश्चितः ॥ * ॥

**Colophon.** इति गोविन्दानन्दकविकङ्कणाचार्य्यविरचितायां क्रियाकौमुद्यां दानकौमुदी नाम द्वितीयो खामः समाप्तः ॥ श्रीकृष्णाय नमः ॥ शक १५११ मल्लाब्द ९१९ ॥ * ॥

**विषयः।** विवाहादिप्रयोगादिनिरूपणम् । दानवाक्यविचारमुखेन दानविध्यादिनिरूपणम् । विचारमुखेन चान्द्रमासादिपदोल्लेखसार्थक्यादिकथनम् । रजतकाञ्चनधेनुदानादिविधिप्रयोगादिनिरूपणम् । कूपजलाशयादिप्रतिष्ठादिप्रमाणप्रयोगनिरूपणम् । होमादिनिरूपणञ्च ।

---

**No. 164.** दानकेलिकौमुदी । Substance, country-made paper, 13×4 inches. Folia, 33. Lines, 9 on a page. Extent, 847 çlokas. Character, Bengali. Date, ? Place of deposit, District Vāñkuḍā, Kuncekol, Bābu Yogīndranātha Siṃha Deva. Appearance, old. Verse and prose. Incorrect.

**Beginning.** नमो गोपीजनवल्लभाय ।
अन्तः स्मेरतयोज्ज्वला जलकणव्याकीर्णपक्ष्माङ्कुरा
किञ्चित् पाटलिताञ्चला रसिकतोत्सिक्ता पुरोऽकुञ्चती ।
रुद्धायाः पथि माधवेन मधुरव्याभुग्नतारोत्तरा
राधायाः किलकिञ्चितस्तवकिनी दृष्टिः श्रियं वः क्रियात् ॥
अपि च ।
विभुरपि कलयन् सदाभिवृद्धिं
गुरुरपि गौरवचर्य्यया विहीनः ।

मुकुरपचितनखशिमापि मुग्धो
जयति मुरद्विषि राधिकानुरागः ॥
नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण । समस्मादवलोक्य जम कथं
मदीयनान्दीचन्द्रिकासन्दीपितभावबन्धुरा नन्दीश्वरगिरेरुपत्यकायां घूर्णते
सतां मण्डली । इत्यादि ।

End. राधाकुण्डतटीकुटीरवसतिस्त्यक्तान्यकर्मा जनः
सेवामेव समस्तमत्र युवयोर्यः कर्त्तुमुत्कण्ठते ।
वृन्दारण्यसमृद्धिदो द्रुतपदक्रीडाकटाक्षच्युते
सर्वाचलवरस्य माधवपणौ नूनं विधेयस्तया ॥
कृष्णः सहर्षमभ्युपगमम् । भगवति तथास्तु तद्देवि प्रातिस्विकाभीष्टवती
यः प्रयाथ इति निष्क्रान्ताः सर्व्वे ::

Colophon. इति दानकेलिकौमुदी नाम भाणिका समाप्ता ॥
कथिता सुमनःसुखदा यस्य निदेशेन भाणिकात्र ।
गेयं तस्य मम प्रियसुहृदः कण्ठतटीं चणमलङ्कुरुताम् ॥
गते मनुशते (?) शाके चन्द्रस्वरसमन्विते ।
नन्दीश्वरे निवसता भाणिकेयं विनिर्म्मिता ॥

. विषयः । राधाकृष्णयोर्वृन्दावनकुञ्जविहारादिवर्णनात्मकं दृश्यकाव्यमिदम् ॥

---

**No. 165.** दानसागरः. By वल्लालसेनः. Substance, country-made paper, 18 x 5 inches. Folia, 242. Lines, 9 on a page. Extent, 11,434 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Viçvakoṣa office, Bābu Nagendranātha Vasu. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ॥
ये साक्षादवनीतलामृतभुजो वर्णाश्रमज्यायसां
येषां पाणिषु निःक्षिपन्ति कृतिनः पाथेयमामुष्मिकम् ।
यद्दत्तोपनताः पुनन्ति जगतीं पुण्याश्रिवेदीगिर
स्तेभ्यो निर्भरभक्तिसम्भ्रमनमन्मौलि द्विजेभ्यो नमः ॥
छन्दोभिश्चैलरत्नैर्ण श्रुतिनियमगुरुब्रह्मचारिव्रचर्या-
मर्य्यादागोत्रशैलः कलियुगकिमसदाचारसञ्चारसीमा ।

भङ्गन स्वच्छवंश्यादेवपुरुषगुणाच्छिन्नसन्तानधारा-
वर्षैर्मुक्तामरश्रीनिवास मद्मालभूषणं सेनवंशः ॥ (?)
तत्रालङ्कृत-सपेथः (?) स्थिरघनच्छायाभिरामः सतां
स्वच्छन्दगाथोपभोगसुलभः कल्पद्रुमो जङ्गमः ।
हेमन्तः परिपन्थिपङ्कजसरः सर्गस्य नैसर्गिके
वंशे तः स्वगणैवदान्यमहिमा हेमन्तसेनोऽजनि ॥
तदनुजविजयसेनः प्रादुरासीद्वरेन्द्रो
दिशि विदिशि भजन्ते यस्य वीरध्वजत्वम् ।
शिखरविनिहिताज्ञा वैजयन्तीं वहन्तः
प्रणतिपरिगृहीताः प्रांशवो राजवंशाः ॥
सर्व्वाशाः परिपूरयन्नुपचितश्रीदानवारां घनै-
रासारैरभिषिक्तनिर्म्मलयशाः शालेयभूमण्डलः ।
दैन्योत्तापभृतामकालजलदः सर्व्वान्तरः क्ष्माभृतां
श्रीवल्लालनृपस्ततोऽजनि गुणाविर्भावगौडेश्वरः ॥
वेदार्थस्मृतिसंग्रहादिपुरुषः श्लाघ्यो वरेन्द्रीतले
निस्तन्द्रोज्ज्वलवीचिनाशनयनः सारपूतं ब्रह्मणि । (?)
षट्कर्म्मा भवदार्य्यशीलनिलयः प्रख्यातसत्यव्रतो
हवारैरिव गोष्पतिर्नरपतेरस्यानिरुद्धो गुरुः ॥
आध्यातसकलपुराणस्मृतिसारः श्रद्धया गुरोरस्मात् ।
कलिकल्मषो वदान्यं (?) दाननिबन्धविधाकाभोऽपि ॥
दुरधिगमधर्म्मनिर्णयविषयाध्यवसायसंशयस्तिमितः ।
नरपतिरयमारेभे ब्राह्मणचरणारविन्दपरिचर्य्याम् ॥ इत्यादि ।

**End.** अत्र धान्याद्यर्पितं द्रव्यं विष्णवे देयम् । तथाच विष्णवे दानान्निवृत्तौ विष्णुधर्म्मोत्तरे ।

यत्किञ्चिद्देव देवाय दद्याद्भक्तिसमन्वितः ।
तद्देवाक्षयमाप्नोति स्वर्गलोकञ्च गच्छति ॥

**Colophon.** इति महाराजाधिराज निःशङ्कशङ्कर श्रीमद्बल्लालसेनदेवविरचिते श्रीदान-सागरे वासुदेवसम्प्रदानकदानावर्त्तः ॥

धर्म्मस्याभ्युदयाय नास्तिकपदोच्छेदाय जातः कलौ
श्रीकान्तोऽपि सरस्वतीपरिवृतः प्रत्यक्षनारायणः ।

पादाम्भोजनिषण्णविश्ववसुधासाम्राज्यलक्ष्मीयुतः
श्रीवल्लालनरेश्वरो विजयते सद्वृत्तचिन्तामणिः ॥
दाराणामरिरैत्य सम्भ्रमपरित्यक्तान्नपानाशनै-
र्वक्त्रोदीरितकाकुकातरगिरां प्राणेशभिक्षाञ्जली ।
येनाच्छिद्य यशांसि दुर्जयजरद्वंशार्जितावेक्षणा-
दोर्लीलादलितो रणे करुणया त्यक्तः स गौड़ेश्वरः ॥
विद्वद्भिः शम्भुकामैः कलिकलुषमलच्छेदिनो दानधर्म्मा-
नन्योन्यामर्षदोषप्रणिहितमतिभिस्तैर्नियुक्ता द्विजाग्र्यैः ।
व्यराचीदेनमेषां मतमनतिरम्यमभ्यङ्निबन्धं
सद्बल्लालसेनामलकुलकुमुदामोदचन्द्रो नरेन्द्रः ॥
तस्यैष कर्म्म नियताखिलजीवलोक-
तापत्रयोपशमनः पुरुषोत्तमस्य ।
(?) सुम्भेनापगतां कलिपङ्कनोदी
श्रीदानसागरमयः पयसां प्रवाहः ॥
यद्यद्विचितमैहिकं सुकृतिनां श्रेयो यदामुष्मिकं
सर्व्वं तत्तदिहाश्रमेण सुलभं निर्णीय निःसंशयः ।
श्रीवल्लालनरेन्द्रवर्णित मन्त्वगं सर्व्वार्थद- (?)
मेतं संप्रति दानसागरमविश्रद्धैकभाजो जनाः ॥

Colophon. इति परममाहेश्वरनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितः श्रीदानसागरः समाप्तः ॥ ० ॥

**विषयः ।** अत्र प्रथमं ब्राह्मणप्रशंसा । दानप्रशंसा । पात्रप्रशंसा । ततो दानपात्रापात्र-निरूपणम् । सात्त्विकराजसादिदानफलम् । दानकालादिनिरूपणम् । अथ तीर्थनिरूपणमुखेन तत्प्रशंसादिकथनम् । देयस्वरूपनिरूपणम् । दानापवादः । दानविधिः । नक्तपरिभाषा । होमपरिभाषा । द्रव्यगणपरिभाषा । मानपरिभाषा । तुलापुरुषादिनिरूपणम् । हिरण्यगर्भ महादानादिनिरूपणम् । ब्रह्माण्डमहादानम् । गोसहस्रदाननिरूपणम् । कामधेनुमहादानम् । हिरण्याश्वमहादानम् । अश्वरथदानम् । हेमहस्तिरथमहादानम् । पञ्चलाङ्गलमहादानम् । धरादानम् । विश्वचक्रमहादानम् । महाकल्पलतामहादाननिरूपणम् । रत्नधेनुमहादानम् । महाभूतघटदानम् । प्रथमावर्त्ते एते विषयाः सन्ति । अथ द्वितीयावर्त्तप्रारम्भः । अत्र च दश-प्रकारमेरुदाननिरूपणम् । तृतीयावर्त्ते अलङ्कृतगवीदानादिनिरूपणम् । चतुर्थावर्त्ते अलङ्कृत-वद्धगवीदाननिरूपणम् । पञ्चमावर्त्ते अलङ्कृतवृषदानादिनिरूपणम् । षष्ठे गवाह्निकदाननिरू-

षष्ठम् । सप्तमावर्ते भूमिदाननिरूपणम् । अष्टमे आसनदानम् । नवमे वारिदानप्रशंसा । दशमे तैजसदानादि । एकादशे जलपात्रदानम् । द्वादशे अन्नदानादि । त्रयोदशे भक्ष्य-दानम् । चतुर्दशे लवणदानम् । पञ्चदशावर्ते घृतदानम् । षोडशसप्तदशयोः दधिक्षीर-दानादि । अष्टादशोनविंशयोः मन्त्रदानादिनिरूपणम् । विंशैकविंशयोः मधुवनस्पतिदान-निरूपणम् । द्वाविंशे अभ्यङ्गदानम् । २३ शे गन्धदानम् । २४ शे धूपदानम् । २५ शे अनु-लेपनादिदाननिरूपणम् । २६ शे पुष्पदानम् । २७ शे वस्त्रदानम् । २८ शे यज्ञोपवीतदानम् । २९ शे सुवर्णदानम् । ३० शे रौप्यदानम् । ३१ शे दीपदानम् । ३२ शे पुराणदानम् । ३३ शे कल्पदानम् । ३४ शे प्रैष्यदानम् । ३५ शे शय्यादानादयः । ३६ शे तिलदानम् । ३७ शे छत्रदानादि । ३८ शे सम्भारदानम् । ३९ शे कृष्णाजिनदानम् । ४० शे वनदानम् । ४१ शे पादुकादानम् । ४२ शे यानदाननिरूपणम् । ४३ शे त्रिचत्वारिंशद्दावर्ते गजदानादि-निरूपणम् । ४४ शे महिषदाननिरूपनम् । ४५ शे आरोग्यदानम् । ४६ शे अभयदानम् । ४७ शे मासोपलक्षितनियतदानम् । ४८ शे अनियततिथिदानम् । ४९ शे नक्षत्रादिदाननिरूपणम् । ५० शे मासव्याप्तिदानम् । ५१ शे संक्रान्तिदानादिनिरूपणम् । ५२ शे वत्सरे दाननिरूपणम् । ५३ शे प्रकीर्णदानादिनिरूपणम् । ५४ शे सामान्यदेवतासम्प्रदानकदानादि । ५५ शे सूर्य्यसम्प्रदानक-दानादि । ५६ शे महेश्वरसम्प्रदानकदानादि । ५७ शे वासुदेवसम्प्रदानकदानादिनिरूपणमिति ।

---

**No. 166.** दायकारिका. By मोहनचन्द्रवाचस्पतिः. Substance, country-made paper, 20 × 4 inches. Folia, 3. Lines, 7 on a page. Extent, 19 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Vikramapura, Ichhāpurāgrāma, Paṇḍita Vrajanātha Vidyāratna. Appearance, tolerable. Verse. Correct.

**Beginning.** नत्वा गुरून् समासेन दायभागस्य सारतः ।
द्विजमोहनचन्द्रेण कारिका लिख्यते मया ॥
अथ स्त्रीधनाधिकारक्रमनिर्णयः ।
कन्याधनेऽधिकारः स्यात् सोदरभ्रातुरग्रतः ।
तदभावे मातुरेव पितुः स्यात् तदनन्तरम् ॥
वरदत्तातिरिक्ते तु वाग्दत्ताकन्यकाधने ।
एवं क्रमेणाधिकारो ज्ञातव्यः पण्डितैः सदा ॥ इत्यादि ।

**End.** वामप्रश्नो नयदेकतीर्थसेवी च नापरः ।
प्रायश्चात्र यतिश्रमं मच्छिष्यो नापरः क्वचित् ॥

स नैष्ठिकब्रह्मचारी धनमाचार्य्य आप्नुयात् ।
उपकुर्व्वन् ब्रह्मचारिधनं पित्रादि वा नयेत् ॥

**Colophon.** इति श्रीमोहनचन्द्रविद्यावाचस्पतिविरचिता दायभागकारिका समाप्ता

**विषय: ।** संक्षेपतो दायाधिकारक्रमकथनम् ।

---

**No. 167.** दायभागसिद्धान्तकुमुदचन्द्रिका. By श्रीमदच्युतचक्रवर्त्ती. Substance, country-made paper, 16 × 4 inches. Folia, 35. Lines, 10 on a page. Extent, 875 çlokas. Character, Bengali. Date, Sk. 1693. Place of deposit, Viṣṇupura, District Vā̃kuḍā, Paṇḍita Mahendranātha Bhaṭṭācāryya. Purchased by Government of India, Calcutta. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ कृष्णाय नमः । अपरे ब्रह्मशासनमिति मनुनैव ब्रह्मावतारत्वमुक्तमिति तद्वाचकं मनुपदमतः प्रणम्य मङ्गलमाचरन्नर्थमाविष्करोति मन्वादीनि । स्वशब्दनिर्द्देशेन मनोरादिपदनिर्द्दिष्टेतरविधात्र्यो गौरवमावेदयद्यादितर-स्मृतिविरोधात् तत् स्मृते ... ... मभिन्नितं अविरुद्ध यथार्थतात्पर्य्य-याभिसन्धाय विवादः अपुत्रधनं प्रथमं पितुरेव भ्रातुरेव पत्न्या एवेत्यादि परस्परविरुद्धवाद इत्यर्थः । बुधानां विवादो विरुद्धार्थवाक्यं संशयः तेषां प्रबोधाय यथार्थतात्पर्य्यनिश्चयार्थं संशयनिरासार्थं वा एवं दुरूहविषया-कर्णने सुमतयोऽवहिताः केवलमधिकुर्व्वन्तीति उक्तं सुधिय इति अर्थः स्वर्ग-नरकाभावसाधनत्याग्रेयनिष्टनिमूलसंशयविषमस्खलनतद्भावान्यतरनिर्णयो ज्ञेयः । उद्देशानन्तरं लक्षणेन दायभागशब्दार्थं निर्वक्तुं प्रतिजानीते अर्थेति । विभागोऽर्थस्येति विभागः स्वत्वनिर्णयानुकूलो व्यापारः अर्थस्यान-वच्छिन्नधनस्य यत्रावच्छेदे तदवच्छिन्नधनरूपं यद्वा अर्थस्येति सप्तम्यर्थे षष्ठी आर्षत्वात् तेन यस्मिन्नर्थे इति सामानाधिकरण्येनान्वयः । इत्यादि ॥

**End.** यथा चोक्तम् ।

अनुमानाद् वरः साक्षी साक्षिभ्यो लिखनं गुरु ।
अविरुद्धा त्रिपुरुषी भक्तिस्तेभ्यो गरीयसीति ॥
पाकधर्म्माः वैश्वदेवधर्म्मादयः । आगमो धनागमनोपायः क्रमादिभ्यो द्रव्यविनियोगः प्रातिभाव्यं लग्नकात्वम् । ... ... ... ... ... ... ... न्यायस्येति न्यायो व्यापारस्तानयाप्यमानयोः कार्य्यकारणभावः । भाचार्य्येति

श्रीधराचार्य्यैर्यदुक्तं तदेव शास्त्रार्थो मान्यो ... । यथा, ये दायभागप्रकरणे प्रकृतज्ञान ...... तेषां रञ्जनमनुरागोऽत्र ग्रन्थे नास्माभिः कर्त्तुं शक्य इत्यर्थः । तर्हि किमर्थं प्रयास इत्यत आह किञ्चिति प्रमाणाधीनज्ञानानां प्रमाणदर्शिनां मुनीनां सम्वादमात्रकृतये वाक्यविरोधपरिहाराय कृतिनः पण्डितस्य मम यत्न इत्यर्थः । ... ... ... ... ... ... ... ... ...
इति बहुविधेति सुबोधम् ॥

**Colophon.** इति श्रीमदच्युतचक्रवर्त्तिविरचिता दायभागसिद्धान्तकुमुदचन्द्रिका समाप्ता ॥ शकाब्दा १६९२ । श्रीहरिः शरणम् ।

**विषय:** । जीमूतवाहनकृतदायभागस्य व्याख्यानम् ।

---

**No. 168.** दायभागार्थदीपिका. By रघुरामशिरोमणिः. Substance, country-made paper, 12 × 5 inches. Folia, 8. Lines, 8 on a page. Extent, 232 çlokas. Character, Bengali. Date, ? Place of deposit, Halisahar, Valdeghātā, Bābu Giriça Candra Gaṅgopādhyāya. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

विद्याभूषणविख्यातः श्रीमान् रघुमणिः सुधीः ।
सर्व्वदेशेषु विख्यातः सर्व्वशास्त्रविशारदः ॥
विप्रश्रीरघुरामेण तच्छात्रेणातियत्नतः ।
क्रियते दायभागार्थदीपिका दृष्टिदीपिका ॥
जीमूतवाहनकृते दायभागेऽब्धिदुस्तरे ।
अर्थमालोच्य बहुधा संक्षेपेण प्रकाशिता ॥
सर्व्वव्यवस्थापद्यानां प्रणालीपरिपूजिता ।
विदुषामपि चान्येषां सुखबोधाय कल्पिता ॥
गुणणा तेन कृतिना मन्मुखेन विवेचिता ।
लुईष श्रीनन्निमिति कीर्त्तितः साहेब सुधीः
विद्याब्धिरस्तु विनमो व्यवहृतौ दाने च शीले वरः ।
तेनादिष्टतया मया विरचिता स्वार्थे परार्थे परा
योऽयमन्वय सुफुल्लमागरकुले रामेश्वरस्यान्वयः ॥

मातवगं बहुविधं निपुणं विभाव्य
या भाविता कृतिरियं सुधिया भवद्भिः
किञ्चित् कृपाञ्चितमनोऽत्र निधेयमेव
श्रीमत् सुखं मम तदा सफलप्रयासः ॥
पित्रादीनां स्वत्वनाशे यद्धनं स्यात् सुतादिगम् ।
पुत्रत्वादिकसम्बन्धात् तत् दायः परिकीर्त्तितः ॥

End. विभागज्ञानं विभागधर्म्मनिर्णयो लिखितेन च साक्षिणा व्यवहारेणापि तथा क्रयविक्रयादिना यत्नया विभक्तता ज्ञेया । पृथगायव्ययादिभिः ।
तत्र साक्षी सपिण्डोऽतः सम्बन्धी तत् परः परः ।
देशजातिकुलश्रेणी-धर्म्मान् वीक्ष्य महीपतिः ।
तेन तेनैव धर्म्मेण तत्र तत्र विनिर्णयेत् ॥

Colophon. इति श्रीरघुमणिविद्याभूषणभट्टाचार्य्याधीतशास्त्र श्रीरघुरामशिरोमणिभट्टाचार्य्यकृता दायभागार्थदीपिका पद्यावली समाप्ता ।

विषयः । संक्षेपेण दायभागार्थनिरूपणम् ।

---

**No. 169.** दीपिकावली. By हरिकृष्णः. Substance, country-made paper 14 × 2 inches. Folia, 49. Lines, 5 on a page. Extent, 796 çlokas. Character, Bengali. Date, ? Place of deposit, Candrakīrtigrāma, Post office Vaidyervāzār, District Ḍhākā, Paṇḍita Bhavānikānta Nyāyaratna. Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
कर्णपूरीकृताखण्डनमेन्दनवपल्लवम् ।
नन्दीश्वरमहं वन्दे पार्व्वतीप्राणनायकम् ॥
को विद्वामो ... ... बालानां ज्ञानदायिनी ।
हरिकृष्णेन धीरेण क्रियते दीपिकावलिः ॥
सर्व्वकर्म्मसुपादेया विशुद्धिश्चन्द्रतारयोः ।
तच्छुद्धा चैव सर्व्वेषां ग्रहाणां फलदायिता ॥
अस्यार्थः । सर्व्वकर्म्मणि विवाहादौ चन्द्रतारयोः शुद्धिरुपादेया ग्राह्या तत् शुद्धा सर्व्वेषां ग्रहाणां फलदायिता फलदायित्वम् ॥ यतः सर्व्वे ग्रहास्तदशुद्धौ शुद्धा अपि न शुभफलदा इत्यर्थः ।

चन्द्रताराशुद्धिप्रशंसा ।

सप्तमोपचयाद्यस्तश्चन्द्रः सर्व्वत्र शोभनः ।

शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ॥

अस्यार्थः । सर्व्वत्र शुक्लपक्षे कृष्णपक्षे च शोभनः शुक्लपक्षे पुनः द्वितीय-पञ्चमनवमस्थोऽपि शुभः ॥ आद्यस्य इति । अत्र जन्मनक्षत्रगतादपि नाड़ीनक्षत्रदोषो नास्ति । तथाच वराहः ।

जन्मनक्षत्रगतश्च प्रशस्तः सर्व्वकर्मसु ।

... ... ... ... ... ... ... ... ॥

चन्द्रशुद्धिः ।

सितशनिकुजजीवार्कास्त इन्दुर्नराणां

व्यय ...... नवमस्थो ... ... ... ।

सुसुतनिधनगस्तेन्मृत्युपुत्रार्थगोऽपि

प्रचुरशुभफलं स्याद्रामवेधेन शुद्धिः ॥ इत्यादि ।

End. अथ वर्षाज्ञानम् ।

पञ्चम्यादिषु पञ्चसु कुम्भार्के भवति यदि रोहिणीयोगः ।

अधमतमाधमाधम ...... मद्दद्भशं पातः ॥

अस्यार्थः । कुम्भार्के फाल्गुने यदि शुक्लपक्षस्य कृष्णपक्षस्य वा पञ्चम्यादिषु यदि रोहिणीयोगो भवति एतदुक्तं भवति पञ्चम्या रोहिणीयोगे अधमतमा वर्षा ज्ञेया षष्ठ्या योगे अधमा सप्तम्या योगे मध्यमा एवं यथासंख्येनान्वयः ॥

Colophon. इति श्रीहरिकृष्णकृतिना कृता दीपिकावलिः समाप्ताः ॥ शुभमस्तु शकाब्दाः । १६३२ ॥

**विषयः ।** अत्र प्रथमं चन्द्रताराविशुद्धिनिरूपणम् । चन्द्रताराशुद्धिप्रशंसा । अथ जन्मादिसंज्ञानिर्णयः । राशिविभागनिर्णयः । लग्ननिर्णयः । राशिभोगनिर्णयः । दिगधिपति-निर्णयः । नक्षत्रनामनिर्णयः । योगनिर्णयः । योगानां वर्जनीयभागकथनम् । नन्दादिसंज्ञा-निर्णयः । शुभाशुभप्रश्नफलनिर्णयः । वारवेलानिर्णयः । उत्पातयोगनिर्णयः । अमृतयोग-निर्णयः । नक्षत्रामृतयोगनिर्णयः । अमृतयोगनिर्णयः । अमृतयोगप्रशंसा । उषादिसप्तगण-निर्णयः । कालशुद्धिनिर्णयः । वर्जनकालनिर्णयः । अभिचारवादनिर्णयः । विवाहादियामिक-वेधसंधिप्तनिर्णयः । वारनिर्णयः । वैवाहिकतिथिनिषेधनिर्णयः । गोधूलिनिन्दा । गणफल-निर्णयः । नाड़ीनक्षत्रयोगे मरणनिर्णयः । षड्ष्टकदोषनिर्णयः । नवबध्वागमननिर्णयः

पुनर्विवाहनिर्णयः । निषेकनिर्णयः । पञ्चामृतनिर्णयः । नवान्ननिर्णयः । विद्यारम्भनिर्णयः । उपनयननिर्णयः । हलप्रवाह-बीजवपन-गृहारम्भ-गृहप्रवेशनिर्णयः । श्रवणादिविचारनिर्णयः । गण्डस्थाननिर्णयः । यात्राविधिनिर्णयः । योगिनीफलनिर्णयः । नक्षत्रशूलनिर्णयः । काल-निर्णयः । विषुवादिसंक्रान्तिनिर्णयः । धान्यमूल्यज्ञाननिर्णयः । वर्षाज्ञाननिर्णयादिसूचकवचन-समूहसंग्रहः तेषां व्याख्यानञ्च ॥

---

**No. 170.** दुर्गापूजापद्धतिः । (वल्लिनारायणीया) Substance, country-made paper, 14 × 3 inches. Folia, 57. Lines, 8 on a page. Extent, 1,995 çlokas. Character, Bengali. Date, Sk. 1774. Place of deposit, Vakadi, Teliveni, District Medinipura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ॥ अथ वल्लिनारायणीयदुर्गापूजापद्धतिः ॥ तत्र शुक्ल-षष्ठ्यां सायं समये निर्वर्त्तितनित्यक्रियः विस्फोटक-वल्मीकाद्यनुपहत-सफल-बिल्ववृक्षसमीपं गत्वा तन्मूलस्थानं गोमयेनोपलिप्य प्राङ्मुख उदङ्मुखो वा उपविश्य ॥ ॐ कर्त्तव्येऽस्मिन् वार्षिकशरत्कालीनायाः श्रीजयदुर्गा-भट्टारिकायाः शुभबोधनामन्त्रणकर्म्मणि ॐ पुण्याहमित्यादि पुण्याहवाचनं कृत्वा स्वस्ति प्रवाच्य यथा अयं च्चणः शुभच्चणोऽस्तु तत्र तारावारप्रसन्नेन्द्रता-चामस्तेन योगोऽस्तु ... ... ... ... सङ्कल्पं कुर्य्यात् । यथा ॐ अद्या-श्विने मासि शुक्ले पक्षे षष्ठ्यां तिथौ अस्मिन् विशिष्टभारतभूप्रदेशे गणपति-दुर्गाभट्टारिकायाश्चरणसरोजसन्निधौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा अशेष-शत्रुक्षयोत्तरोत्तरोज्ज्वलश्रीवृद्धिपुत्रपौत्रधनधान्याद्यवच्छिन्नसम्पत्त्यपेक्षितसिद्धि विपच्छान्तिकामः यः कर्त्तव्यश्रीदुर्गाभट्टारिकागृहप्रवेशनपूर्व्वकभगवत्पुरा-णान्तर्गत ब्रह्मविहितशरत्कालीनसप्तम्यष्टमीनवमीपूजानिमित्तं गणपत्यादि-देवतापूजापूर्व्वकं वृन्दारकवृन्दवन्दितचरणारविन्दायाः वार्षिकशरत्काली-नायाः श्रीजयदुर्गाभट्टारिकायाः शुभबोधनामन्त्रणकर्म्माहं करिष्ये ॥ इत्यादि ।

**End.** ततो गृहमागत्य अच्छिद्रावधारणं कृत्वा कथानच्छिद्यैति शान्तिं कृत्वाशीर्व्वादं दत्वा ब्राह्मणेभ्यः सुहृद्भ्यश्च भोजनवस्त्रताम्बूलानि प्रदाय । देवी जयदुर्गा प्रचण्डा कालरात्री प्रीयतामित्युक्त्वा ते ब्राह्मणादयः प्रीयतामिति प्रति-वचनं दद्युः ॥

**Colophon.** इति वल्लिनारायणीये दुर्गापूजा समाप्ता ॥ • ॥ शकाब्दाः । १७७४ ॥

**विषयः ।** अथदुर्गाभद्रारिकायाः पूजाविधिः प्रयोगादिश्च ।

---

**No. 171.** दुर्गार्चातत्त्वम्. By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, 14×3 inches. Folia, 30. Lines, 6 on a page. Extent, 652 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur, District Mayamansiṃha, Paṇḍita Harasundara Tarkaratna. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ॥

प्रणम्य जगदीशानीं दुर्गां तत्प्रीतये बुधः ।
शरदर्चाविधिं तस्याः वक्ति श्रीरघुनन्दनः ॥
व्यवस्थायाः प्रपञ्चस्तु विज्ञेयस्तिथितत्त्वतः ।
पूजाविधेश्च सम्यक्त्वं ज्ञातव्यं कोविदैरिह ॥
अथ दुर्गार्चातत्त्वम् ।
शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ इत्यादि ।

**End.** चाशुभं चाद्भुतं दृष्ट्वा दैवमाज्ञायपूजनम् ।
दानं कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधिजले ॥

**Colophon.** इति वन्द्यघटीय-श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यविरचितं दुर्गार्चातत्त्वं समाप्तम् ॥ * ॥

**विषयः ।** शरत्कालीनदुर्गापूजाव्यवस्था तत्र प्रमाणादिश्च ।

---

**No. 172.** दुष्टजलाशयप्रतिष्ठाविधिः । Substance, country-made paper, 13×3 inches. Folia, 3. Lines, 6 on a page. Extent, 54 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodal, District Mayamansiṁha, Kālācā̃d Bhaṭṭācāryya. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमः शिवाय । अथ दुष्टजलाशयप्रतिष्ठाविधिः लिख्यते ।
वापीकूपतडागेषु विपन्ने पञ्चमानुषे ।
तस्य शुद्धिं प्रवक्ष्यामि सपूर्व्वोक्ति यथाविधि ॥

End. ततः पूर्णां दद्यात् (?) नाख्युयं विहस्य दक्षिणां कृत्वा शान्त्युदकं दत्वाच्छिद्रावधारणं कुर्य्यात् ।

Colophon. इति वष्टिवपयवरावीकादुर्गात्स्यप्रतिष्ठाविधिः समाप्तः ॥ ० ॥

विषयः । वापीकूपतडागादिषु पद्मानुषादिस्मवसंसर्गे सति तस्य पुनः संशोधनविधिः तत्प्रयोगश्च ।

---

**No. 173.** देवविवाहपद्धतिः । Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 5. Lines, 6 on a page. Extent, 92 çlokas. Character, Bengali. Date, SK. 1690. Place of deposit, Serpur, Mādhavapura, District Mayamansimha, Paṇḍita Gaṅgādhara Tarkasiddhānta. Appearance, old. Prose. Correct.

Beginning. श्रीकृष्णाय नमः । अथ देवविवाहपद्धतिर्लिख्यते ।
उदीच्यां संस्थिते सूर्य्ये माघे वा मधुमाधवे ।
विवाहं कारयेद्देवा गृहस्थेन विपश्चिता ॥
सुयोगे सुदिने वाथ तृतीयायां विशेषतः ।
वैशाखस्य सुरश्रेष्ठ विवाहं कारयेत् गुरुः ॥ इत्यादि ।

End. ततो दक्षिणां दत्वाच्छिद्रावधारणं कुर्य्यात् । ततः सगरुं देवं नीत्वा खट्टायां स्थापयित्वा षोड़शोपचारैस्तस्मिन् मिथुनं सम्पूज्य नानाविधमहोत्सवं कुर्य्यात् ।
एवं विधानतः कृत्वा कन्यादानफलं लभेत् ॥

Colophon. इति देवविवाहपद्धतिः समाप्ता । शुभमस्तु शकाब्दाः । १६९० ॥

विषयः । विष्णुप्रतिकृतिविवाहनिरूपणमुखेन तत्फलनिरूपणम् ।

---

**No. 174.** देवीगीता । Substance, country-made paper, $15 \times 3$ inches. Folia, 5. Lines, 6 on a page. Extent, 94 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodal, District Mayamansimha, Kālicandra Bhaṭṭācāryya. Appearance, old. Verse. Correct.

Beginning. ॐ नमः शिवायै ।
न पीनं नापीनं न हि परिमितं नापरिमितम् ।
न रक्तं नारक्तं न हि धवलितं नाधवलितम् ॥

निराकारं नित्यं चिन्मुखरचितं देवमजडम्
तमात्मानं वन्दे परमसुखसत्मानमनिशयम् ॥
कूर्म्म उवाच ।
एवं सर्व्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम् ॥ इत्यादि ।

**End.** तेषां नित्याभियुक्तानां मया तत्त्वं समर्पितम् ।
नाशयामि ततः क्षिप्रं ज्ञानदीपेन चाचिरात् ॥

**Colophon.** इति कूर्म्मपुराणे द्वादशाध्याये देवीगीता समाप्ता ।

**विषयः ।** आत्मज्ञानादिनिरूपणमुखेन देवीमाहात्म्यनिरूपणम् ।

---

**No. 175.** देवीमाहात्म्यकौमुदी. By रामकृष्णः. Substance, country-made paper, 16 × 3 inches. Folia, 23. Lines, 8 on a page. Extent, 793 çlokas. Character, Bengali. Date, Sk. 1687. Place of deposit, Sātbheyepāḍāgrāma, Post Office Vaidyervāzār, District Ḍhākā, Paṇḍita Nilakamala Smṛtibhūṣaṇa. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो दुर्गायै ।
भगवन्तं नमस्कृत्य देवीं भगवतीमपि ।
तन्यते रामकृष्णेन देवीमाहात्म्यकौमुदी ॥
अथ तमेव विदित्वेति श्रुतेस्तत्त्वज्ञानस्य मोक्षसाधनत्वं सिद्धं तत्त्वज्ञाने च महामायाऽकर्णधारो कर्णधारादिज्ञानद्वारा ... ... ... भगवत्प्रीतिं विना तत्त्वज्ञानं न सम्भवति । प्रीतिश्च माराधनं विना आराधना च प्रभावज्ञानं विना । तत्प्रभावः सुरथाय राज्ञे मेधोमुनिना उभयोः सम्वादो मार्कण्डेयेन उक्त इति भगवान् श्रीकृष्णद्वैपायनस्तदुक्तं मार्कण्डेयवाक्यमवतारयति मार्कण्डेय उवाचेति । एवं कथा मार्कण्डेयेन पुरा क्रौष्टुकिमुनिं प्रति पुराणं कथितं ... ... ... ... ... ... ... ... ... ... ... ... सावर्णिरित्यादि । सूर्य्यस्य पत्नीद्वयं संज्ञा सवर्णा च तत्र सवर्णाया अपत्यं सावर्णिर्वादित्यादिश्च । पितृनामज्ञानार्थमाह सूर्य्यतनय इति । अष्टानां पूरणोऽष्टमः तथाहि स्वायम्भुवः स्वारोचिषः ... ... ... ... ... ... चाक्षुषः वैवस्वतः सावर्णि ... ... ... ... ब्रह्मसावर्णिरुद्रसावर्णिर्मेरुसावर्णयश्चतुर्दशमनवः तथाष्टमः सावर्णिः । ननु अष्टमपदं व्यर्थं तस्य वक्ष्य एवाष्टमत्वादिति चेन्नहि

अन्यथा व्याख्येयं अष्टभिरणिमादिभिर्मानो ... ... अष्टेति अष्टमः । श्लोके-
ष्वेवं योजना योऽष्टमो मनुः सावर्णिः पुराणे कथ्यते तदुत्पत्तिं मम मत्तः
विस्तीर्य्यं महतः निशामय शृणु उत्पद्यतेऽनेनेति उत्पत्तिर्महामायानुभावश्च
शृणु ॥ इत्यादि ॥

**End.** प्राज्ञः स वैश्यः ज्ञानं कीदृशं ममेत्यहमिति मतः बोधः तस्य विच्युतिकारकं
अयं भावः धनादौ ममेति बुद्धिः देहे अहमिति बुद्धिश्च संसारहेतुः
तच्युतिकारकं तत्त्वज्ञानमेवेति । अतोभिरित्यनेन ... ... ... ... ... ...
सम्पन्नं नित्यमेव तेन त्रिभिः । स्वनयति भुवि ... ... जन्म तदर्थं अतः
अन्यथा देवीदर्शनात् कथं पुनर्जन्म ... ... इत्यस्य वैरर्थ्यादपि च तेन
जन्मविना न मन्वन्तराधिकारः तेन तस्य जन्मार्थमेव मरणम् । सावर्णिरिति
... ... ... सावर्णिकः ... ... मन्वोभवनं संसारनिवृत्तिं दृष्ट्वापि तुल्यत्वात्
... ... तव ज्ञानं भविष्यतीत्यादौ कालो मोक्षस्तेन तत्त्वयादित्यभिप्रायः ।
इत्युक्तं अभिलषितं तयोस्ताभ्यां अन्तर्हिता अदृश्या बभूव । महामाया-
नुभावेन यथा मन्वन्तराधिप इत्यनेन यदुक्तं तत् स्मारयति एवं देव्या इति
सूर्य्याज्जन्म समासाद्य प्राप्य सावर्णिर्नाम मनुर्भविता भविष्यति इति देवी-
माहात्म्यं समाप्तम् ॥

**Colophon.** वेदव्यासेन करुणासागरेण विनिर्म्मिता ।
पतितानां जीवनाय चण्डी विजयते चिरम् ॥
व्याख्याता रामकृष्णेन चण्डिकेयं यथामति ।
सर्व्वेषानां हि तात्पर्य्यं कोऽन्योविज्ञातुमीश्वरः ॥
इति महामहोपाध्याय उदीच्य-श्रीरामकृष्णभट्टाचार्य्यविरचिता चण्डिका-
टिप्पनी समाप्ता ॥ समाप्तेयं पुस्तिका शकाब्दाः । १६८७ ॥

**विषयः ।** मार्कण्डेयपुराणान्तर्गतस्य सप्तशतीनामकस्य देवीमाहात्म्यस्य व्याख्यानम् ॥

---

**No. 176.** देवीमाहात्म्यचन्द्रिका. By शिवाचार्य्यः. Substance, country-made paper, 12×2½ inches. Folia, 52. Lines, 7 on a page. Extent, 1,456 çlokas. Character, Bengali. Date, ? Place of deposit, Kā̃ṭhālpāḍā, Post Office, Naihāti, Rāmatāraṇa Thākura. Appearance, old. Prose. Correct.

Beginning. ॐ नमः शिवाय ।

प्रणम्य परमां देवीं कुमतिध्वंसकारिणीम् ।
शिवाचार्य्यो वितनुते देवीमाहात्म्यचन्द्रिकाम् ॥
यच्चतुर्भुजमिश्रेण प्रतिदाशादिनाथ यत् ।
लिखितं तत्समालोक्य रच्यते तत्समासतः॥
प्राक्किल जैमिनिर्महाभारतकथां श्रोतुमिच्छन् मार्कण्डेयमहर्षिमुपगम्य पृष्टवान् नायमस्माकं कथालाघव इति । इत्यादि ।

End. खण्डितत्वात् शेषो नास्ति ।

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य व्याख्यानम् ।

---

No. 177. देवीमाहात्म्यटीका, सिद्धान्तमञ्जरीनाम्नी. By कृष्णानन्दः. Substance, country-made paper, 11 × 2½ inches. Folia, 8. Lines, 10 on a page. Extent, 250 çlokas. Character, Bengali. Date, Sk. 1752. Place of deposit, District Vā̃kuḍā, Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, fresh. Prose. Generally correct.

Beginning. श्रीश्रीरामः । ॐ चण्डिकायै नमः ।

भवानीचरणाम्भोजं प्रणिपत्य प्रणीयते ।
सिद्धान्तमञ्जरी चण्ड्याः कृष्णानन्देन धीमता ॥
चण्डिकायाः पूर्व्वपक्षं कृत्वा नत्वा शिवापतिम् ।
राद्धान्तः क्रियते तस्य मुग्धोपकृतये मया ॥
षट्सम्वादः ॥ आदौ पक्षिमुनिगणसम्वादस्तत्र मार्कण्डेयक्रौष्टुकिसम्वादस्तत्र मेधःसुरथसम्वादः ॥ निशामय तदुत्पत्तिमिति ॥ इत्यादि ॥

End. ननु चात्र शब्दे चलोपो भवति कथमेतत् क्वचिदपवादविषयेऽप्युत्सर्गो विधिर्निविशत इति चाद्धि चकारलोपप्राप्तेऽपि वृद्धिः ॥ उपैषीति क्वचित् ॥ यद्वा चकारादिति रचि पक्षालोपः । च इति सुरथसम्बोधनम् । तथाच

छश्चो सम्बोधनेऽप्यपे शोभायामः प्रकीर्त्तितः ।
नत्वा देवीपदद्वन्द्वं कृष्णानन्देन भिक्षुणा ॥
संक्षिप्य रचिता चैषा देवीमाहात्म्यकौमुदी ॥ * ॥

Colophon. इति कृष्णानन्दविरचिता सिद्धान्तमञ्जरी समाप्ता ॥ शुभमस्तु शक १७५२ ।

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य संक्षेपेण व्याख्यानम् ।

---

**No. 178.** देवीमाहात्म्यटीका. By गोपालः. Substance, country-made paper, 13 x 2¼ inches. Folia, 12. Lines, 8 on a page. Extent, 288 çlokas. Character, Bengali. Date, ? Place of deposit, Visṇupura, District Vākuḍā, S'ri Rūparāma Bhaṭṭācāryya. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ॥

यस्याः कोटि जगन्ति सन्ति कतिधा नो सन्ति वाह्यं
चिद्यन ब्रह्मगवेन्द्रशङ्करमुखाः कोकनद्य भावते । (?)
यत्पादाम्बरजःकणाद्यघियिवालद्भमस्य यत्पाश्रया
तां वन्दे जगदीश्वरीं भगवतीं सच्चिन्मयीमम्बिकाम् ॥
श्रुतिं स्मृतिं चापि पुराणजातं
विलोक्य तन्त्राणि शिवोदितानि ।
गोपालनामा विबुधो विधत्ते
टीकामिमां सप्तशतीस्तवस्य ॥
यद्यस्ति टीका प्रचुरा कवीनां
निवेशितास्तत्र च सत्प्रमेयाः ।
तथापि टीका मम दर्शनीया
बुधैरयं मुद्धि कृतोऽञ्जलिर्मे ॥
सन्ति चेत् बहवो दोषा गुणलेशोऽपि कुत्रचित् ।
अनुगृह्णन्तु गृह्णन्तु सन्तो गुणकणं मम ॥ इत्यादि ।

**End.** अपिहितत्वात् शेषो नास्ति ।

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यव्याख्यानम् ।

---

**No. 179.** देवीमाहात्म्यविवरणम्. By गोपालमिश्रः. Substance, country-made paper, 12 x 3½ inches. Folia, 88. Lines, 7 on a page. Extent, 2,233 çlokas. Character, Bengali. Date, Sk. 1618. Place of deposit, Hālisahar, Caudhuripāḍā, Vecārāma Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

सुविचार्य्य बहुमतान् श्रीकृष्णव्याख्यानकाङ्क्षिणा ।
श्रीमद्गोपालमिश्रेण चण्डीव्याख्या वितन्यते ॥
पुरा किल भगवद्बादरायणशिष्येण महाभारतविषयकथाकाङ्क्षिणा जैमिनिना मार्कण्डेयमुनिः पृष्टः ॥ इत्यादि ।

**End.** एवं अनेन प्रकारेण चण्डिवर्णभः चण्डिश्रेष्ठः । यथा स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः सिंहशार्दूलनागाद्या इत्यमरः । देव्याः सकाशात् वरं लब्ध्वा सूर्य्यात् जन्म समासाद्य सावर्णिर्मनुर्भविता इत्यन्वयः । एतत् द्विपाठः कर्त्तव्यः इति ॥

**Colophon.** इति श्रीगोपालमिश्रकृतायां चण्डीटीकायां देवीमाहात्म्यविवरणं समाप्तम् ॥

**विषयः ।** मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्य व्याख्यानम् ।

---

**No. 180.** देवीमाहात्म्यवृत्तिः. By गोविन्दरामसिद्धान्तवागीशः. Substance, country-made paper, 16 × 4 inches. Folia, 62. Lines, 7 on a page. Extent, 1,736 çlokas. Character, Bengali. Date, ? Place of deposit, Naḍiyā-grāma, Post Office Lonsing, District Pharidpur, Paṇḍita Çaçibhūṣaṇa Smṛtiratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

यत्पादपद्ममनिशं परिचिन्त्य भक्त्या
योगीन्द्रवृन्दपरिवन्द्यपदो हरोऽभूत् ।
तत् देवमानुषसुरारिगणैः प्रपूज्यं
भक्त्याप्यनन्यमतिकः सततं नमामि ॥
यस्याः प्रसादात् बलभृत्प्रधानाः
सुराश्चभागांऽप्यभवन् दिगीशाः ।
तस्याः स्तुतेर्वृत्तिरियं प्रकाश्यते
गोविन्दरामेण विपश्चितां मुदे ॥
यद्यप्यत्र बहुभिरेव निबन्धकृद्भिर्विविधं व्याख्यातं तथाप्यस्य स्वरूपविशेषविज्ञानायैतद्विद्वद्भिरालोकनीयम् ॥ पुरा किल भगवद्बादरायणान्तेवासी जैमिनिर्भारतीयकथानन्तरं सावर्ण्युत्पत्तिं भगवन्तं मार्कण्डेयं पृष्टवान् कार्य्यान्तरव्यासङ्गेन तेन कथां कथयितुं मम नायं समयः किन्तु विन्ध्यपर्वत-

वाग्मिनः सर्व्वशास्त्रार्थतत्त्वज्ञा मच्छिष्याश्चत्वारः पक्षिणः सुतान् पृच्छेत्युप-
दिष्टोऽसौ गत्वा तान् पृष्टवान् ते च साक्षाद्मात्मभाग्यं वर्णयन्तो मेधः-
सुरथसम्वादात्मिकां भागुरये मार्कण्डेयेन कथितामिति चामकथामुपवर्ण-
यितुमारभमाणा ऊचुर्मार्कण्डेय उवाचेति । मृकण्डोरपत्यं मार्कण्डेयः ...
... ... ... ... ... पूर्व्वस्वरस्य वृद्धिः । ... ... ... ... इत्युकारलोपः ।
यद्यपि जैमिनिमुनिस्थाने पक्षिणामेव वचनकर्त्तृत्वं अतः पक्षिण ऊचुरित्येव
वक्तुं युज्यते तथापि मार्कण्डेयेनोपदिष्टाः कथाः पक्षिभिर्वच्यन्ते इति मार्क-
ण्डेय उवाचेति । सावर्णिरिति । योऽष्टमो मनुः कथ्यते स सावर्णिस्तदु-
त्पत्तिं मम स्थाने निशामय शृणु मम किम्भूतस्य विस्तराद्वदतः प्रपञ्चात्
कथयतः सावर्णिरिति ... ... दित्वादन् । अष्टमो मनुः किम्भूतः सूर्य्य-
तनयः सूर्य्यतनय इति पदेन समुद्रकन्यायाः सवर्णाया अपत्यत्वाद्वृत्तिः ।
सावर्णिरिति पदेन सूर्य्यपत्न्याश्छायाया अपत्यत्वाद्वृत्तिरिति । ननु निशा-
मयेत्यत्र शमोऽदर्शन इत्यनुशासनात् कथं तमानुबन्धानां ह्रस्वः सत्यं संज्ञा-
पूर्व्वकत्वात् ह्रस्व इति केचित् । वस्तुतस्तु द्वयोरपि ज्ञानवचनादित्यनुशासनात्
ज्ञानातिरिक्तबोधन ... ... ... ... ... ... एतस्य सानुबन्धत्वं यथा
उपशमयति रोगानिति प्रकृते तु श्रवणं ज्ञानं शमोऽर्थः ॥ इत्यादि ॥

End. मार्कण्डेय उवाच । इतीति । देवी इति एवं प्रकारेण तयोर्यथाभिलषितं
वाञ्छितं वरं दत्त्वा भक्त्या ताभ्यामभिष्टुता सती सद्यस्तत्क्षणं अन्तर्हिता
अदृश्या बभूव । एवमिति । एवं प्रकारेण देव्या देवीसकाशाद् वरं लब्ध्वा
क्षत्रियश्रेष्ठः सुरथः सूर्य्यात् जन्म समासाद्य संप्राप्य सावर्णिर्मनुर्भविता ।
श्लोकमेतत् वारद्वयं केचित् पठन्ति तदिदमप्रमाणं वचनाभावात् । प्राचीन-
व्यवहाराभावाच्च ॥

Colophon. वेदाग्निरेतोनयनानि (?) श्वी-
गते शकाब्दे गिरिजापदाब्जम्
सञ्चिन्त्य चण्डीस्तुतिटिप्पणिमेतां
गोविन्दरामो विततान विप्रः ॥
मयोक्तमिह यत्किञ्चित् विरुद्धसम्मतं भवेत् ।
तत् क्षन्तव्यं विपश्चिद्भिः क्षमासारा हि साधवः ॥
इति श्रीगोविन्दरामसिद्धान्तवागीशभट्टाचार्य्यकृतायां देवीमाहात्म्यवृत्तौ देवी-
माहात्म्यं समाप्तम् ॥

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य व्याख्यानम् ॥

---

**No. 181.** देवीमाहात्म्यवृत्तिः. By नरसिंहचक्रवर्त्ती. Substance, country-made paper, 14 × 1 inches. Folia, 112. Lines 3 on a page. Extent, 1,407 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurāgrāma, Paṇḍita Hariprasāda Tarkālaŋkāra. Appearance, old. Prose. Incorrect

**Beginning.** ॐ नमो गणेशाय । ॐ नमश्चण्डिकायै ।

देव्याः पादयुगं मनोज्ञमतुलं ब्रह्मादिभिः सेवितं
भीतेर्भीतिहरं भयं सुररिपोर्मुक्तिप्रदं योगिनाम् ।
नत्वा कोषमशेषमब्दगहनं ज्ञात्वा च तत्त्वं मुने-
र्व्याख्याः श्रीनरसिंह एष तनुते माहात्म्यतत्त्वं क्रमम् ॥

पुरा किल भगवद्बादरायणशिष्येण भारतकथाकाङ्क्षिणा जैमिनिना मार्कण्डेयमुनिः पृष्टो नायं कथासमय इत्युपेक्षमाणो विन्ध्याचलनिवासिनश्चतुरः पक्षिणः प्रक्ष्यसीति तमादिदेश । तदनन्तरं जैमिनिना पृष्टास्ते मार्कण्डेयभागुरिसंवादात्मकमितिहासमनुवर्णयन्तस्तत्कथामारभमाणास्ते ऊचुर्मार्कण्डेय उवाचेति । इत्यादि ।

**End.** नाभ्यामित्युभयत्रान्वयः । नाभ्यां दत्त्वा नाभ्यामभिहुतेति एवं वरं देव्याः सकाशात् लब्ध्वा क्षत्रियर्षभः क्षत्रियश्रेष्ठः सुरथः सूर्य्याज्जन्म समासाद्य सम्प्राप्य सावर्णिर्मनुर्भविता ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्यं समाप्तम् । माहात्म्यमिति महात्मनोभावः माहात्म्यं ष्यञ् । एवं सर्व्वत्रैव योध्यम् ॥

**Colophon.** इति श्रीनरसिंहचक्रवर्त्तिकृता देवीमाहात्म्यटीका समाप्ता ॥

विषयः । मार्कण्डेयपुराणीयदेवीमाहात्म्यस्य व्याख्यानम् ॥

---

**No. 182.** देवीमाहात्म्यमञ्जरी. By नरसिंहचक्रवर्त्ती. Substance, country-made paper, 12 × 2½ inches. Folia, 58. Lines, 7 on a page. Extent, 1,573 çlokas. Character, Bengali. Date, Sk. 1595. Place of deposit, Áriyādaha 24-Parganas, Paṇḍita Haripada Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** अत्र प्रथमपद्यं नास्ति तेन द्वितीयपद्यप्रारम्भवाक्यं लिखितम् ॥ सूर्य्यतनयः तदुत्पत्तिं निशामय शृणु जानीहि चेत्यर्थः । समानः वर्णो यस्याः स सवर्णा तस्या अपत्यं सावर्णिः इत्यादि ।

**End.** एवं अभिलषितं वरं देव्याः सकाशाल्लब्ध्वा क्षत्रियर्षभः सुरथः सूर्य्याज्जन्म समासाद्य संप्राप्य सावर्णिर्मनुर्भविता ।

**Colophon.** इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्यं समाप्तम् ।
कृता श्रीनरसिंहेन द्विजेन चक्रवर्त्तिना ।
सतां चित्तविनोदाय देवीमाहात्म्यमञ्जरी ॥ ० ॥
बाणाङ्केन्दुविधौ शाके मासे च श्रावणाह्वये ।
पूर्णीकृता पुस्तिकैषा राजेन्द्रेण द्विजन्मना ॥

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यटीका ।

---

**No. 183.** देवीमाहात्म्यवृत्तिः, (तत्त्वावबोधिनी). By विद्याविनोदाचार्य्यः. Substance, country-made paper, 14 × 4½ inches. Folia, 50. Lines, 10 on a page. Extent, 1,750 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahar Valdeghāṭā Bābu Giriça Candra Gaṅgopādhyāya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।
नत्वा जगज्जया (?) गूढं भान्तमेकमनेकवत् ।
विद्याविनोदाचार्य्यश्च चण्डीटीकां करोत्यमूम् ॥ इत्यादि ।

**End.** विवस्वतो जन्म उत्पत्तिं समासाद्य सावर्णिर्मनुर्भविता सावर्णिरभूत् मनुर्भविष्यति इत्यर्थः । अद्यतने लुङ् अतएव स बभूव महाभाग इति प्रथममपि सङ्गतम् ।

**Colophon.** इति विद्याविनोदाचार्य्यकृतायां चण्डीटीकायां तत्त्वावबोधिन्यां देवीमाहात्म्यं समाप्तम् ॥ ० ॥

विषयः । मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य व्याख्या ।

---

**No. 184.** देवीमाहात्म्यवृत्तिः, (तात्पर्य्यकौमुदीनाम्नी). By रघुनाथचक्रवर्त्ती. Substance, country-made paper, 14½ × 2¼ inches. Folia, 61. Lines, 8 on a page. Extent, 2,653 çlokas. Character, Bengali. Date, Sk 1617. Place of deposit, Sātbheyepāḍagrāma, Post Office Vaidyerbāzār, Parganā Sonargā, Paṇḍita Tārākānta Vācaspati. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । ॐ नमः सरस्वत्यै ।

मङ्गल्यं सर्व्वकर्म्मादौ ... ... प्रणम्यते ।

माहात्म्यादृशं सिद्धौ चेरम्बमवलम्बते ॥

आनन्दैकनिकेतनं सुकृतीनां ... ... ...

ब्रह्मेन्द्रादिनमस्कृतं ... ... ... ... ।

न सद्भावबोधानां ... ... ... ...

तद्वन्दे जगदम्बिकापदयुगं रक्ताम्बुजाभप्रभम् ॥

मत्कुलद्विजराजेन सन्मनोहारिवर्त्मना ।

श्रीमता रघुनाथेन कौमु ... ... ... ॥

... ... ... ... ... न तत्त्वप्रदायिनी ।

तात्पर्य्यकौमुदी धीरा यथावदवधीयताम् ॥ १ ॥

इह तु देवीमाहात्म्यव्याख्यावसरे प्रथमं तत्पाठविधिर्यो लिख्यते । ॐ नारायण ... ... ... कस्य नारायणादिनामपट्कनिरूपितदेवता नमस्कृत्य ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।

देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

तत्र नारायणप्रलयकालीन सागरशय ... ... ... ... नरः कृतरामादिशरीरपरिग्रहोऽवतारविशेषः । नरोत्तमः पुरुषोत्तमः श्रीकृष्ण इति यावत् । कृष्णस्तु भगवान् स्वयमिति भागवतश्रवणात् । देवी भगवती आद्या शक्तिः । यदनुग्रहात् स ... ... मांसु शक्त्यधिकं भवति । सरस्वती सर्व्ववाङ्मयाधिकृतदेवता वाग्देवतेति यावत् । व्यासः पुराणेतिहासादीनि शास्त्राणि वेदायनि वा (?) व्यासो वादरायणः कवीन्द्र इति व्याख्यायते । एतान् प्रणम्य जयं उदीरयेत् पठेदित्यर्थः । तत इत्यस्य वाक्यालङ्कारप्रयोजनमात्रमर्थः । आनन्तर्य्यस्य यवन्तपदेनोपलब्धेः । जयमिति कृष्णद्वैपायनप्रणीतपुराण-भारत भागवतादि । एतस्य देवीमाहात्म्यग्रन्थस्य विजयमन्त्ररूपत्वात् । ... ... तदादौ तदन्ते च प्रणवं कृत्वा पठेत् इति शास्त्रार्थः ।

तस्यातङ्कच नाद्दशसहस्रपसमाविततपुस्तकमध्यर्थेद्रासने स्थापयित्वा पठे-
दित्यासां विस्तरः । इत्यादि ।

**End.** एवमिति एवंप्रकारेण सुरथः देव्या वरं लब्ध्वा क्षत्रियर्षभः क्षत्रियश्रेष्ठः सूर्य्याज्जन्म समासाद्य ...... पुनराहृत्तिः समाप्तिं द्योतयति । तथा चाया-दिति धातुर्भुक्ती ॥ ० ॥

**Colophon.** इति श्रीरघुनाथचक्रवर्त्तिकृतायां तात्पर्य्यकौमुद्यां देवीमाहात्म्यटीकायां देवीमाहात्म्यव्याख्यानं समाप्तम् ॥

**विषयः ।** मार्कण्डेयपुराणान्तर्गत देवीमाहात्म्यस्य व्याख्यानम् ।

---

**No. 185.** देवीमाहात्म्यवृत्तिः, (विद्वन्मनोरमा). By गौरीवरः. Substance, country-made paper, 13 × 3½ inches. Folia, 55. Lines, 10 on a page. Extent, 2,681 çlokas. Character, Bengali. Date, Sk. 1515. Place of deposit, Kāṭhālpāḍā *viâ* Naihāti, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

पान्तु वां चण्डिकाचण्डकोदण्डखण्डनिखनाः ।
दुरितौघतमस्काण्डे खण्डनैकान्तपण्डिताः ॥
संक्षिप्तसारविदुषा श्रीगौरीवरशर्म्मणा ।
क्रियते सप्तशतिकाटीका विद्वन्मनोरमा ॥

... द्वैपायनाभिधानमहर्षिवेदव्यासप्रोक्तजयाख्यमार्कण्डेयपुराणान्तर्गतसाव-र्णिकमन्वन्तरीय सावर्णिः सूर्य्यतनय इत्यादि सावर्णिर्भविता मनुरित्यन्तस्य देवीमाहात्म्यप्रकाशकस्य ग्रन्थसन्दर्भस्य यथाशक्ति व्याख्यानमारभ्यते ॥

**End.** एवमनेन प्रकारेण क्षत्रियर्षभः क्षत्रियश्रेष्ठः तथाच स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचरा इत्यमरः । सुरथः देव्याः सकाशात् वरं लब्ध्वा सूर्य्याज्जन्म समासाद्य सावर्णिर्मनु-र्भविता इति ॥ ० ॥

**Colophon.** इति श्रीगौरीवरकृतायां विद्वन्मनोरमायां सप्तशतिकाटीकायां देवीमाहात्म्यं समाप्तम् ॥ ० ० ॥ ० ० ॥

बाणेन्दुपक्षेन्दुमिते शकाब्दे प्रणम्य गौरीश्वरपादविन्दम् ।

**विषयः ।** मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य व्याख्यानम् ।

---

**No. 186.** देवीमाहात्म्यटीका, (सप्तशतीविवेकः). By रामचन्द्रवाचस्पतिः. Substance, country-made paper, 11 × 4 inches. Folia, 120. Lines, 7 on a page. Extent, 2,250 çlokas. Character, Bengali. Date, (?) Place of deposit, Bhāṭpāḍā, 24-Parganas, Paṇḍita Rāmendra Nyāyavāgīça. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

यामाक्षरार्थां प्रकृतिं मुनीन्द्रा
यामेव धात्रीं प्रतिपालनेन ।
अन्ते तु हन्त्रीं हरहपधात्रीं
अथाञ्जगत् पर्व्वतनन्दिनी सा ॥
प्रणम्य चण्डीचरणारविन्दं
श्रीरामचन्द्रो गुतमग्रजन्मा ।
सुबोधिनीं सज्जनतोषिणीञ्च
चकार चण्डीमहिमैकसाराम् ॥
... ... ... सप्तशतीविवेकां
तनोति सन्तोषकरीं कवीनाम् ।
पुरा किल भगवन्नारायणशिष्येण भारतविषयकौर्त्तिना जैमिनिना दृष्टो मार्कण्डेयो मुनिः । इत्यादि ॥

**End.** देवी इति वरं तयोरभिलषितं दत्त्वा ताभ्यां वैश्यसुरथाभ्यां अभिष्टुता सती सद्यस्तत्क्षणात् अन्तर्हिता बभूव । अन्तर्दधौ । एवमिति एवं देव्याः सकाशात् वरं लब्ध्वा क्षत्रियर्षभः क्षत्रियश्रेष्ठः सुरथः सूर्य्याज्जन्म समासाद्य प्राप्य सावर्णिर्मनुर्भविता ॥

**Colophon.** इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्यं समाप्तम् ॥ इति रामचन्द्रवाचस्पतिकृता चण्डीटीका समाप्ता ॥ ० ॥

**विषयः ।** मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यस्य व्याख्यानम् ।

---

**No. 187.** दोलयात्राप्रमाणतत्त्वम्. By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, 14×2½ inches. Folia, 4. Lines, 8 on a page. Extent, 132 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur, District Mayamanasimha, Paṇḍita Harasundara Tarkaratna. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीहरिः। फाल्गुणपौर्णमास्यां दोलयात्रामाह तीर्थचिन्तामणौ ब्रह्मपुराणम्।
फाल्गुण्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्।
नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम्॥ इत्यादि।

**End.** पश्यन् द्वितीयं हरति गोहत्यादुपपातकम्।
चिरजन्यशेषपापानि तृतीये च न संशयः॥
इमां यात्रां कारयित्वा चक्रवर्त्ती भवेन्नरः।
ब्राह्मणस्य चतुर्व्वेदे ज्ञानञ्च जायते ध्रुवम्॥ * ॥

**Colophon.** इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं दोलयात्राप्रमाणतत्त्वं सम्पूर्णम्॥

**विषयः।** श्रीकृष्णस्य दोलयात्राप्रकरणादिनिरूपणम्।

---

**No. 188.** दोलयात्रामृतम्. By नारायणतर्काचार्य्यः. Substance, country-made paper, 18×3½ inches. Folia, 3. Lines, 8 on a page Extent, 123 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā Vikramapura Vajrayoginīgrāma Paṇḍita Kālikānta Çiromaṇi. Appearance fresh. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय।
नत्वा गोविन्दपादाब्जं दृष्ट्वा च स्मृतिसङ्ग्रहान्।
नारायणो वितनुते दोलयात्रामृतं सुधीः॥
स्कन्दपुराणे।
फाल्गुने मासि राजेन्द्र चर्षसङ्क्रान्ति ...ग्निमे। (?)
गोविन्दं दोलयेद्द् यो वै स वैकुण्ठपुरं व्रजेत्॥
कृत्तिकायां भ्रजोत्थानं श्रेष्ठायां शयनं तथा।
दोलं उत्तरफल्गुण्यां यात्रामेतां सुदुर्लभाम्॥
ब्रह्मवैवर्त्ते।
अधिवासः चपान्ते च फाल्गुण्यां स्वपोत्तम।
गोविन्दं दोलयेद्द् यो वै स वैकुण्ठपुरं व्रजेत्॥ इत्यादि।

**End.** दोलिकां कारयेद् यस्तु पौर्णमास्यां नरोत्तम ।
सपत्नी कुलमादाय विष्णोर्लोके महीयते ॥
इत्याकरविधानेन पूजयेच्च जनार्द्दनम् ।
होमं कृत्वा विधानेन ततो यात्रां समापयेत् ॥

**Colophon.** इति नारायणतर्काचार्य्यविरचितं दोलयात्राकृतं समाप्तम् ।

**विषयः ।** फाल्गुनपौर्णमास्यां भगवतो दोलयात्राविधिविवेचनम् ॥

---

**No. 189.** द्रव्यगुणसङ्ग्रहटीका. By शिवदासः. Substance, country-made paper, 16×3 inches. Folia, 77. Lines, 7 on a page. Extent, 2,194 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā Bhagavān Candra Dāsa Kavirāja, Appearance, old. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
इत्याननादितिमिरपरिभूतमिदं जगत् ।
प्रसादाद् यतस्तस्मै कस्मैचिन्महसे नमः ॥
कणादसांख्यागुर्व्वेदतन्त्राणां पारदृश्वनः ।
तातस्यानन्तसेनस्य वन्दे चरणपङ्कजम् ॥
महदादिनिकायोऽयं यस्याः प्रादुरभूत् किल ।
सतीं गुणमयीं भक्त्या भैरवीं जननीं भजे ॥
रचितश्चक्रदत्तेन यो द्रव्यगुणसङ्ग्रहः ।
श्रीमता शिवदासेन तस्य व्याख्या विधीयते ॥
नोक्ताश्चक्रेण ये द्रव्यगुणा विस्तरभीरुणा ।
तेऽपि प्रसङ्गतो लेख्याः शिष्यव्युत्पत्तये मया ॥ इत्यादि ।

**End.** इदानीमस्य सङ्ग्रहग्रन्थस्योपादेयतां दर्शयितुमाह ।
तन्त्राणां सारमाहृत्य द्रव्याणां गुणसङ्ग्रहः ।
भिषजामुपकाराय रचितश्चक्रपाणिना ॥
आसीत् सभायां शिखरेश्वरस्य
लब्धप्रतिष्ठः किल लावसेनः ।
वाणीविलासं कविसार्व्वभौमं
विजित्य यः प्राप यशो दुरापम् ॥

व्याकुलत्वमेतस्य ततस्ततोऽभूत्
तस्यापि लक्ष्मीधरसेननामा ।
तस्माच्च भूतस्ववचस्वभूत-
मस्माप्यनन्तसमयोऽथ जज्ञे ॥
योऽमरत्नपदवीं दुरवापां
चममप्यतुलकीर्त्तिरवाप ।
गौड़भूमिपतितोऽपि कथाच- (?)
चतुसुतस्य कृतिनः कृतिरेषा ॥

**Colophon.** समाप्तोऽयं ग्रन्थः ॥

**विषयः ।** अमरपाविदत्तनतद्रव्यगुणवक्तृत्वाभिधानवैद्यकग्रन्थस्य व्याख्यानम् । तद्ग्रन्थांश-पूरणञ्च ।

---

**No. 190.** द्वात्रिंशत्सिंहासनकथा. By वररुचिः. Substance, country-made paper, 17×3 inches. Folia, 46. Lines, 8 on a page. Extent, 1,472 çlokas. Character, Bengali. Date, Sk. 1719. Place of deposit, Naihāti, District 24-Pargaṇās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose. Incorrect.

**Beginning.** (अस्य प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम् ।) ततश्च भूखननादिभिरनेकप्रकारैः कनकरत्नमयद्वात्रिंशत्पुत्तलिकाभिरुपेतं चन्द्र-कान्तमणिमयं चाष्टहस्तोच्छ्रयं तेजसा जाज्वल्यमानं सिंहासनं प्रादुरभूत् । इत्यादि ।

**End.** त्रिलोकी जेतव्या जड़तनुरमात्यः शशधरो
वसन्तः पर्य्यायोऽस्तत्वाक्रमणकुचा कुरे ।
रथत्कष्ठामन्दमोघश्रगौ घना सुवदना श्यामा मनोहारिणी । (?)
ईषत्कुञ्चितमध्यभागललिता सुन्दरलोमावली ।
धूनामेव ... ... ... ... ... ..नौ कुरम् ॥ ० ॥

**Colophon.** इति वररुचिकृत द्वात्रिंशत्कथनं सम्पूर्णम् । शाके १७१९ लिखितमेतत् ।

**विषयः ।** द्वात्रिंशत्पुत्तलिकाभिर्विक्रमादित्यस्य गुणवर्णनम् ।

---

**No. 191.** द्वादशयात्राप्रयोगः. By विद्यानिवासः. Substance, country-made paper, 16 × $2\frac{1}{2}$ inches. Folia, 22. Lines, 5 on a page. Extent, 469 çlokas. Character, Bengali. Date, ? Place of deposit, Vāḍari, Mayamanasiṁha, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीदुर्गायै नमः ।

ब्रह्मास्वादसहोदरनिर्भररसमाधुरीभाजि ।
विद्यानिवाससनुते यात्राकर्म्माणि सहस्रो भक्तुः ॥
कोऽत्र विधिनिषेधो नीलमणिर्यथा तथा सेव्यः ।
तदपि विधेरनुगत्या सत्यास्वान्दं निराकुर्म्मः ॥

इह खलु भगवद्दर्शनादुपक्षितप्रेमाकलितस्येन्द्रद्युम्ननरपतेर्भक्तियोग एवो-द्देश्यत इति ब्रह्मविज्ञापितेन प्रतिमारूपिणा भगवता वरप्रदानेन यात्रा प्रवर्त्तिता । इत्यादि ।

**End.** तस्मिन् काले तु ये भक्त्या कृष्णं पश्यन्ति मानवाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
विष्णोः स्वरूपमासाद्य विष्णुलोके वसन्ति ते ।

ततः काञ्चनादिदक्षिणां दद्यात् एवमेव मत्स्यसञ्ज्ञा चतुर्द्दशीपर्य्यन्तं श्रीजगन्नाथं पूजयेत् ।

**Colophon.** इति विद्यानिवासीयद्वादशयात्राप्रयोगः समाप्तः ॥ * ॥

**विषयः ।** श्रीमज्जगन्नाथदेवस्य द्वादशयात्राप्रयोगादिनिरूपणम् ।

---

**No. 192.** धर्म्मदीपिका. By चन्द्रशेखरः. Substance, country-made paper, 18 × 5 inches. Folia, 33. Lines, 8 on a page. Extent, 1,056 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganas, Paṇḍita Haraprasāda Çāstri. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा शिवपदद्वन्द्वं तातततातसेवितम् ।
तत्प्रभाववद्धिंताशाभिः क्रियते धर्म्मदीपिका ॥
विद्याभूषणविख्यातः षड्दर्शनमते सुधीः ।
तत्सुतकाशमो धीमान् ततोऽधीती च तत्सुतः ॥

श्रीचन्द्रशेखरो नाम्ना ख्यातो वाचस्पतिः सुतौ ।
सुतीनाञ्च प्रकाशार्थं तनोतीमां प्रदीपिकाम् ॥
तत्र मीमांसातर्क एव वेदतन्मूलकशास्त्रार्थप्रकाशकः । तथाच भट्टमीमांसा-
संज्ञकस्तर्कः सर्ववेदसमुद्भवः । सर्वेषां वेदानां समुद्भवः प्रकाशो यस्मादिति
विग्रहः । इत्यादि ।

**End.** अशक्यार्थे विध्यसम्भवात् अस्यार्थः अशक्यार्थे असम्भवार्थे विध्यसम्भवात्
विधेरेव प्रवृत्तेः अतो विधेर्यथासम्भवं विधेयं व्यवस्थापयति । तथाचोक्तम् ।
इत्यादिषु श्रवादीनां त्याकोषस्य च शक्तुषु ।
अर्थापत्तिवशात् तस्मात्व्यवस्थैवेत्यवस्थितिः ॥

**Colophon.** प्रथमपादस्य शेषः ॥ * ॥ श्रीश्रीगुरवे नमः । ॐ हरये नमः ॥ श्रीरामः ॥

**विषयः ।** अत्र प्रथमं विधिनियमपरिसंख्यादीनां यथासम्भवं मीमांसा । ततोऽधिकरण-
निर्वृत्तिः । यत्राधिकरणनिरूपणम् । खादिरन्यायनिरूपणम् । विकल्पनिरूपणम् । कपालाधि-
करणनिरूपणम् । प्रतिनिध्यधिकरणनिरूपणम् । तदादितदन्तन्यायनिरूपणम् । सर्वशक्त्यधि-
करणनिरूपणम् । योगसिद्ध्यधिकरणनिरूपणम् । तन्त्रप्रसङ्गन्यायौ । श्रुतशक्ताधिकरणञ्च ।

---

**No. 193.** धर्म्मविवेकः. By हलायुधः. Substance, country-made paper, 8 x 3 inches. Folia, 3. Lines, 7 on a page. Extent, 36 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Kerāṇigañja, Sāktāgrāma, Paṇḍita Trilocana Tarkālaṃkāra. Appearance, fresh. Verse. Correct.

**Beginning.** श्रद्धावीजो वेदविप्रांशुसिक्तः
शाखाविद्यासाञ्चलतो दशापि ।
पुण्यान्यर्थौ द्वे फले स्थूलसूक्ष्मे
मोक्षः कामो धर्म्मवृक्षोऽयमीक्षः ॥
यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
शक्रप्रश्नविसर्ज्जनात् स च मुनिः स्वर्गं समारोपितः ।
आवाल्यादसतीं सतीं सुरपुरीं कुन्तीं समारोपयत्
या सीता पतिदेवतागमदधो धर्म्मस्य सूक्ष्मा गतिः ॥ इत्यादि ।

**End.** अस्यन्ति शत्रवः सर्व्वे धर्म्मो रक्षति धार्म्मिकम् ।
एतज्ज्ञानबलस्यैव निधनं च भविष्यति ॥
जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः ।
यतः कृष्णस्ततो धर्म्मो यतो धर्म्मस्ततो जयः ॥

**Colophon.** इति महाकविचक्रायुधविरचितं धर्म्मविवेकाख्यकाव्यं समाप्तम् ॥

**विषयः ।** कतिपयप्रश्नपूर्वकश्लोककथनम् ।

---

**No. 194. धर्म्मेतिहासः .** Substance, country-made paper, 16 × 3 inches. Folia, 115. Lines, 6 on a page. Extent, 2,932 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamanasiṁha, Serapura, Paṇḍita Candrakāṇta Tarkālaṇkāra. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
एकदा ब्राह्मणः कश्चित् पुत्रदारादिपोषणे ।
धनी मतमभिप्राय चिन्तामाप दुरत्ययाम् ॥
धर्म्मो हि परमो बन्धुः परलोकसुखावहः ।
श्रुतः कदाचित् साधुभ्यामिति गाथा सनातनी ॥
स मया न श्रुतो धर्म्मो न कृतो नानुचिन्तितः ।
अधुना स्वल्पमेवायुरवशिष्टं हि मे मतम् ॥
इति चिन्ताकुलो विप्रो धर्म्मशुश्रूषणे रतः ।
स्थितः पुत्रमित्राभ्यां ... ... सदैव सः ॥
सूतं गत्वा महात्मानं विनयानतकन्धरः ।
कृताञ्जलिपुटः सम्यक् प्रोवाच सममोमतम् ॥ इत्यादि ।

**End.** धन्याश्च पञ्चमे वै तथा भवसमुत्सुकाः ।
केवलं गर्भदुःखाय ये गता न गता नराः ॥
महाभारताख्यमेतद्धि यः पठेत् विष्णुसन्निधौ ।
सभायां वापि विप्रेन्द्राः शृणुयाद्वापि भक्तितः ॥
महाभारतफलं प्राप्य सुखभोगैकसन्निधिः ।
चिरायुः पुत्रपौत्रैश्च ततो दिवमथाव्रजेत् ॥

हित्वा जगुः ।
धर्म्मेतिहासका कथा विचित्रा
मया श्रुताखगुरुपदाब्जाद् गुरौ ।
नानाविधं सम्प्रत्यनघरं देवं
यथा जरानो हि यथाच कुर्व्वे ॥
उपनयतु मङ्गलं वः सकलजनमनङ्गलायः श्रीमान् ।
दिनकरविबोधितनवनलिनविभेचणो विष्णुः ॥ ॐ ॥

**Colophon.** इति श्रीपद्मपुराणोद्धृते धर्म्मेतिहासे सप्तविंशतितमोऽध्यायः ॥ ॐ ॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः ।** पितृपूजा पतिसेवा सर्व्वजनेषु समता ।
मित्राद्रोहो विष्णुभक्तिश्च एते पञ्च महामखाः ॥

इत्यादिनिरूपणमुखेन एतदनुष्ठानफलनिरूपणम् । पतिव्रताद्युपाख्यानप्रदर्शनेन च नाचकोपाख्यानम् । तडागवननादिफलनिरूपणम् । वृक्षादिरोपणपुण्यनिरूपणम् । अश्वत्थादिवृक्षच्छेदनदोषकथनम् । गोप्रचारदानपुण्यनिरूपणम् । विष्णुप्रासादादिदानफलकथनम् । रुद्राक्षमाहात्म्यकथनम् । रुद्राक्षरूपविवेचनम् । रुद्राक्षधारणमन्त्रनिरूपणम् । धात्रीफलमाहात्म्यादिकथनम् । तुलसीमाहात्म्यकथनम् । मन्त्राशौचमाहात्म्यादिनिरूपणञ्च ।

---

**No. 195.** धातुघोषा वा धातुसाधनम्. By रामकान्तः. Substance, country-made paper, 12 × 2½ inches. Folia, 48. Lines, 8 on a page. Extent, 1,392 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Kerāniganja, Sāktāgrāma, Paṇḍita Trilocana Tarkālaṇkāra. Appearance, fresh. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा गुरुपदद्वन्द्वं रामकान्तेन यत्नतः ।
बालानामवबोधाय क्रियते धातुसाधनम् ॥
अथ धातवः । यद्यपि बहवो धातवस्तथापि ग्रन्थगौरवभयात् कतिचित् सर्व्वधातुसाधनानुसन्धानबीजमनकमात्र इहसम्पाता दर्शनाय लिख्यन्ते ॥
यदुक्तं हरैः ।
भू-स्था-गम-हनोऽपि दा-हृ-ज्ञा-मच-चिनायः ।
इमेते पुरतो ज्ञेया श्रीमज्ञानाय धातवः ॥ इति ।

तवादौ भूधातुरुच्यते । भूसत्तायामिति सत्तार्थे वर्त्तमानस्य भूशब्दस्य क्रियाभावो धातुरिति धातुसंज्ञायां पश्चात् त्यादिप्रत्ययः । एवमेव सर्व्वधातुसम्बेयं । सम्प्रत्यर्थे वर्त्तमाना भवति भवतः भवन्ति । भवसि भवथः भवथ । भवामि भवावः भवामः ॥ इत्यादि ।

End. यङ् लुग्वा सर्व्वस्माद्धातोरिति रत्नमालाव्याकरणसूत्रम् । तथा लुगधिकारे यङो बहुलमिति चान्द्रः । तथा सर्व्वधर्म्मणापि चर्करीतमाहुरतये + + थितान्तादित्यवान्तमपचयमुपात्तं । तेन बोभवीतीत्यादिसिद्धम् ॥

Colophon. इति धातुघोषा समाप्ता ।

विषय: । भू-स्था-गम इत्यादि दा-कृ-ज्ञा-प्रच्छ-चिन्तिरूपदशधातूनामाख्यातलुदन्तयोः सर्व्वत्र रूपकथनम् । तत्र तत्र धात्वर्थादिविवेचनञ्च ।

---

**No. 196.** धातुमाला. By जुमरनन्दी. Substance, country-made paper, 14 × 3 inches Folia, 13. Lines, 6 on a page. Extent, 273 çlokas. Character, Bengali. Date, Sana, 1293, Sāla. Place of deposit, Parganā Vagḍi, Teliveni, District Medinīpura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, new. Verse. Generally correct.

Beginning ॐ नमः शिवाय ॥

धातौ शम्भुमुखोद्भूते भ्रान्त्या वैकल्यमागते ।
क्रियते तस्य शुद्ध्यर्थं यत्नो जुमरनन्दिना ॥
भ्वाद्यदादि जुहोत्यादि दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः ॥
भू सत्तायां । चथ तवर्गान्ताः । चिती संज्ञाने चत सातत्यगमने च्युतिरासेचने । इत्यादि ।

End. चट स्फिट पुट पुथि हिंसायां शठ श्वठ गतिसंस्कारयोः शुठ चालस्ये शुठि शोषने वठ् नुठ् उपघाते जुड् प्रेरणे नड् भ्रंशे चड् उपसेवायां नड् चाघाते परस्मैपदिनः ॥ चुरादयः समाप्ता ॥

Colophon. समाप्ता चेयं धातुमाला सन १२९३ साल ॥

विषय: । भ्वादिदशगणीयधातूनामर्थकथनं तेषामनुबन्धादिकथनञ्च ।

---

**No. 197.** धातुमाला. By महेश्वरः. Substance, country-made paper, 12 x 2 inches. Folia, 14. Lines, 5 on a page. Extent, 184 çlokas. Character, Bengali. Date, ? Place of deposit, Vākuḍā Viṣṇupura, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ नमः शिवाय ।

राधाख्यं नमस्कृत्य महेशदेवशर्मणा ।

लिख्यते धातुमाला च श्रीदुर्गायाः प्रसादतः ॥

अथ भ्वादिगणि-षट्प्रकरण धातवः संक्षेपेण लिख्यते । भू सत्तायां भूधातुः परस्मैपदी । भवति भवतः भवन्ति ।

**End.** अनिट्त्वात् शेषो नास्ति ।

विषयः । अर्थनिरूपणमुखेन धातूनां रूपनिरूपणम् ।

---

**No. 198.** धातुमाला. By षष्ठीदासविशारदः. Substance, country-made paper, 12 x 3 inches. Folia, 24. Lines, 7 on a page. Extent, 504 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अज्ञानध्वान्तसंहन्त्रीं भारतीमिन्दुसन्निभाम् ।

गुरुञ्च ज्ञानदं भक्त्या प्रणमामि पुनः पुनः ॥

मनोरमादिमालोक्य धातुटीकां गुणाधिकाम् ।

करोमि धातुभिर्मालां शिशूनां कण्ठभूषणम् ॥

भ्वाद्यदादिकाराद्यो दिवादिः स्वादिकस्ततः ।

तुदादिश्च रुधः प्रोक्तो तुधादिस्तदनन्तरम् ॥

क्यादिकतनादिश्च क्रियादिः चुरादिकः ।

एते दश गणा ज्ञेया अथ क्रमतस्तताः ॥ इत्यादि ।

**End.** कण्ड्वादयो धातवो ये सुधुराद्या अपि ये स्मृताः ।

परस्मै वचने तेषां प्रयोगः परिकीर्तितः ॥

एतत् संक्षेपतः प्रोक्तं यन्नविस्तारभीतितः ।
अन्येऽनेकगणस्था ये विशेषास्ते प्रयोगतः ॥
मध्यमध्याः समीपस्थो आकवीचेन्दशिवो ।
गोपालपुरस्थोऽकार्षीत् धातुमालां विशारदः ॥

**Colophon.** इति वैदिककायस्थकुलावतंसश्रीगोपालदासविशारदविरचिता धातुमाला समाप्ता ॥ * ॥

**विषयः ।** भ्वादिचुरादिप्रभृतिधातुनिकराणां विशदार्थनिरूपणम् ।

---

**No. 199.** धातुलक्षणम्. By दर्गोकाचार्य्यः. Substance, country-made paper, 13 × 3 inches. Folia, 33. Lines, 5 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Tripurā, Vidyākūṭa, Paṇḍita Jagadbandhu Bhaṭṭācāryya, Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
शिवं प्रणम्य बोधाय बालानां स्मृतये सताम् ।
आचार्य्य-श्रीदर्गोकेन क्रियते धातुलक्षणम् ॥
भू-सत्ता मन-हसो ... ... क्ष-मा-मन-चिन्तयः । इत्यादि ।

**End.** अचिन्तयेपत्वात् समाप्तिरूपकं वाक्यं नास्ति ।

**विषयः ।** भ्वादिदशगणीयधातूनामर्थकथनम् ।

---

**No. 200.** धातुसंग्रहः. Substance, country-made paper, 18 × 3½ inches. Folia, 11. Lines, 9 on a page. Extent, 396 çlokas. Character, Bengali. Date, ? Place of deposit, Parganā Vagḍi, Teliveni, District Medinipura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः शिवाय ॥
केन च बालजनानां निर्णयबोधाय चाश्रुतोपाय ।
संग्रह इह धातूनां विधीयते प्रयोगलक्षणानाम् ॥
भू सत्तायां पा पाने घ्रा गन्धोपादाने ध्मा शब्दाग्निसंयोगयोः ष्ठा गति-
निवृत्तौ । इत्यादि ।

End. भाज प्रथमप्रकरणे तभाजा प्रीतिविषययोः परस्मैपदिनः प्रूर वीर विक्रान्तौ चूर्ण परिहंसने चात्मनेपदिनः इति चुरादि ।

Colophon. इति चुरादिगणीयाः ॥ समाप्तश्चायं संग्रहीतः प्रयुक्तधातुगणः ॥

विषय: । धातूनामर्थकथनं तेषामनुबन्धादिनिरूपणेनात्मनेपदादिविवेचनञ्च ।

---

**No. 201.** नाड़ीप्रकाशः. (कणादसंहितायाम्) Substance, country-made paper, 16×3 inches. Folia, 8. Lines, 6 on a page. Extent, 144 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamanasimha, Serapura, Bābu Haracandra Caudhurī. Appearance, tolerable. Verse. Generally correct.

Beginning. नमः शङ्कराय ।

यदङ्गेभ्यः पञ्चसंख्यागतेभ्यो
वेदा जाता ऋग्यजुःसामभेदाः ।
अथर्व्ववेदश्चायुर्व्वेदश्च तस्मि-
न्नार्व्वां प्रभौ नीलकण्ठश्च भक्तिः ॥
चाद्ये वेदः पञ्चमो वैद्यकाख्यो
वेत्ता कश्चित् तस्य नाद्ये मदेशात् ।
तस्माच्चात्माख्येन तस्मात्तु राजा
तस्मात्प्राप्ता नम्रमस्मीति शास्त्रम् ॥
प्रथमे नाड़िकाज्ञानं द्वितीये रोगनिश्चयः ।
तृतीये च कषायः स्यात् चतुर्थे पारदादिकम् ॥
पञ्चमे तु महाविद्या रसजारणमारणम् ।
यस्य प्रभावाद्रोगाश्च नश्यन्ति सच भूतलः ॥ इत्यादि ।

End. भस्मनाशो (?) न जीवेच्च वातशोथी न जीवति ।
धन्वाकृतिश्छिन्ननेत्रो न जीवेद्विकलेन्द्रियः ॥
इत्युक्तं नाड़िकाज्ञानं निदानं कथ्यतेऽधुना ॥ ... ॥ * ॥

Colophon. इति कणादसंहितायां नाड़ीप्रकाशः समाप्तः ॥ श्रीदुर्गाचरणे भक्तिरास्ताम् ॥

विषय: । नाड़ीज्ञानकथनेन रोगादिनिरूपणम् ।

---

**No. 202.** **निकुञ्जरहस्यम्.** Substance, country-made paper, 12½ × 5 inches. Folia, 3. Lines, 11 on a page. Extent, 78 çlokas. Character, Bengali. Date, ? Place of deposit, Tripurā, Mahārāja's Library. Appearance, *tolerable*. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।
द्रुतकनकसुगौरस्निग्धमेघौघनीला
... ... रखिलवृन्दारण्यमुद्भासयन्तौ ।
मधुरननवदुकुले नीलपीते दधानौ
स्मर निभृतनिकुञ्जे राधिकाकृष्णचन्द्रौ ॥ इत्यादि ।

**End.** परमरसरहस्यामन्द ... ... वृन्दा-
विपिन-नवनिकुञ्जे दिव्यदिव्यैर्विलासैः ।
निरवधि रममाणौ राधिकाकृष्णचन्द्रौ
भज सकलमुपेक्ष्य ... ... ... ... ॥
स्तवमिममतिरम्यं राधिकाकृष्णचन्द्र-
प्रमदरसविलासैरद्भुतं भावयुक्तम् ।
पठति य इह ... ... मच्चपचित्तो
विजनमनु स राधाकृष्णयोः सख्यं लभेत ॥

**Colophon.** इति श्रीनिकुञ्जरहस्यस्तोत्रं सम्पूर्णम् ॥

**विषयः ।** निकुञ्जे रममाणयोः श्रीकृष्णराधिकयोः स्तुतिः ॥

---

**No. 203.** **निगमतत्त्वसारः** Substance, foolscap paper, 8 × 3 inches. Folia, 12. Lines, 10 on a page. Extent, 297 çlokas. Character, Nāgara. Date, ? Place of deposit, Ḍhākā, Ramanā's Kālimaṭha. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
कैलासशिखरे रम्ये नानारत्नविभूषिते ।
आनन्दभैरवो देवः पप्रच्छानन्दभैरवीम् ॥
श्रीआनन्दभैरव उवाच ।
निगमागमशास्त्राणि मया त्वयि प्रकाशितम् ।
तेषां मध्ये सारभूतं वद कान्ते कृपाकरि ॥

पुरा श्रीलम्मुखाम्भोजात् श्रुतं तन्त्रावधं मया ।
श्रीदक्षयामलाख्यञ्च तथाश्रीतारतन्त्रकम् ॥
प्रश्रियामलमाख्यातं तथान्यद्विस्तरं प्रिये ।
योगसारं तत्त्वसारं तथा गुह्यं वदस्व मे ॥ इत्यादि ।

**End.** श्रीआनन्दभैरव उवाच ।
एतदद्भुतमाख्यातं त्वन्मुखात् संश्रुतं मया ।
अद्य प्रभृति देवेशि तव दासो भवाम्यहम् ॥

**Colophon.** इति निगमतत्त्वसारे एकादशः पटलः ॥ समाप्तोऽयं ग्रन्थः ।

**विषयः ।** शिवया सह शिवसंवादेन योगसारतत्त्वसारयोर्निरूपणम् । तत्र पञ्चतत्त्व-माहात्म्यादिकथनम् । पञ्चतत्त्वादिशुद्धिविधिः । योगविधिः । मन्त्रादिसाधनविधिः । स्त्र्यादि-शोधनविधिः । कवचविधिः । चण्डीपाठक्रमः । मद्यमांसादिशोधनविधिः । कुम्भिदाकल्प-कथनम् । कामाख्यायां पञ्चतत्त्वविधिविशेषकथनञ्च ।

---

**No. 204.** निगमलता . Substance, country-made paper, 19 x 5 inches. Folia, 34. Lines, 6 on a page. Extent, 637 çlokas. Character, Bengali. Date, ? Place of deposit, District, Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Incorrect

**Beginning.** ॐ नमः परदेवतायै ।
कैलासपर्व्वते रम्ये यामाशेन्ते च शङ्करी (?) ।
स्पृष्ट्वा तु चरणौ देवा भगवान् शङ्करोऽब्रवीत् ॥
श्रीशङ्कर उवाच ।
मातर्दुर्गे महामाये कृपां कुरु दयामयि ।
हृदि शूलं समुद्धृत्य पाहि मां परमेश्वरे ॥
श्रूयतां शुभगे देवि यच्छूलं वर्त्तते हृदि ।
त्वन्मया कथितं भद्रे यथा ज्ञाता न शुद्धति ॥
तव वक्त्रे श्रुतं पूर्व्वं भगरूपा सदैव हि ।
वाक्येनाख्यापनं नैव कथं कुर्य्याच्छुभेश्वरी ॥
इदं चैकं द्वितीयञ्च मरद्यामी कथञ्चन ।
क्लीवं परमेशानि श्रीचक्रे गतिर्न च ॥

जीवच्छिवे सदा सत्योगैममं केन वा कृतम् ।
इति चिन्तापरो भूत्वा चातुस्तोऽभूत्र संशयः ॥

श्रीपार्वत्युवाच ।

नाहं वदामि खलु पामरेषु रतिं त्यजामि पशुवादिनेषु । (?)
नाहं त्यजामि कुलकर्मचारिणे सदा त्यजामि किल चम्पकेषु ॥

श्रीशङ्कर उवाच ।

देवि विश्वेश्वरि त्वं हि लक्षितिल्यकारिके ।
कथं मां पशुरूपेण स्थापितासि रतिप्रिये ॥

श्रीपार्वत्युवाच ।

पुरा मोचयपुरुषाद्दोराचारं भवान् कृतः ।
तथापि पशुभावत्वं न मुञ्चति कथञ्चन ॥ इत्यादि ।

**End.** निगमं मत्कृतं नाथ त्वतारं निश्चितं प्रभो ।
इति ज्ञात्वा त्वावचिता न प्रकाश्यं कदाचन ॥
यः पाति पुस्तिकामेतां गृहे रचति नित्यशः ।
तस्य स्थाने ध्रुवं वत्स सर्व्वदा मत्पुरे यथा ॥
पठनं वा तदर्थं वा तदर्थं वा महेश्वर ।
जानाति स गुरुः साक्षात्तत्समतत्समोऽपि वा ॥

**Colophon.** इति निगमकल्पतायां पार्व्वतीश्वरसंवादे चतुर्व्विंशतिः पटलः । सम्पूर्णोऽयं ग्रन्थः ॥

विषयः । शङ्करं प्रति शङ्कर्य्या उक्तिरूपोऽयं प्रबन्धः । तत्र पञ्चमकारेषु प्राधान्यतः पञ्चमकारस्यैव प्रपञ्चः प्रयोगादिविधिः । लतासाधनविधिः । दिव्यवीरादीनां लक्षणादिकथनम् । पञ्चममकारसाधनेनैव मोक्षप्राप्तिकथनम् । भैरवीचक्रे प्रवर्त्तमाने वर्णभेदराहित्यादिकथनम् । पञ्चमकारशोधनादिविधिः । पुनः पुनः पानविधिः । योनिपूजाविधिः । तत्र ध्यानादिकथनञ्च । तत्र कालिकापूजाविधिः । तारापूजाविधानम् । उग्रतारादिविधानकथनम् । अभिषेकविधिकथनञ्च ।

---

**No. 205.** नित्यानन्दाष्टकम् **. By** श्रीकृष्णदासगोस्वामी **.** Substance, country-made paper, $10 \times 4\frac{1}{2}$ inches. Folia, 3. Lines, 4 on a page. Extent, 24 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalā, Vṛddhanagara, Tripurā, Paṇḍita Mineçvara Sārbbabhauma. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीनित्यानन्दाय नमः ।

शरच्चन्द्रभ्रान्तिं स्फुरदमलकान्तिं गजगतिं
हरिप्रेमोन्मत्तं धृतपरमसत्त्वं स्मितमुखम् ।
सदाघूर्णन्नेत्रं करकलितवेत्रं कलिभिदं
भजे नित्यानन्दं भजनतरुकन्दं निरवधि ॥ इत्यादि ।

**End.** ... ... ... ... ... ...
... ... ... ... ... ... ॥
परं नित्यानन्दाष्टकमिदमपूर्वं पठति य-
स्तदङ्घ्रिद्वन्द्वाब्जं स्फुरति नितरां तस्य हृदये ॥

**Colophon.** इति श्रीनित्यानन्दाष्टकं श्रीवृन्दावनदासगोस्वामिविरचितं सम्पूर्णम् ॥

**विषयः ।** अष्टभिः श्लोकैर्नित्यानन्दस्य स्तवकथनम् ।

---

**No. 206.** निरुत्तरतन्त्रम् . Substance, country-made paper, 18 × 5 inches. Folia, 26. Lines, 8 on a page. Extent, 750 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihāri Rāya. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमो जगन्मोहिन्यै ।

श्रीदेव्युवाच ।

सिद्धविद्या पुरा प्रोक्ता मन्त्रयन्त्रादिकानि च ।
नानाभावप्रभेदेन संशयो जायते प्रभो ॥
भावभेदेन कथय लोकनिस्तारकारक ।
सर्व्वेषां शरणं तत्त्वं सिद्धान्तनिष्णुस्थानम् ॥
चासामाराधना केन भावेन परिजायते ।
तासां वः प्रकृतिः कापि तत्र वा कीदृशी क्रिया ॥
तत् प्रकाशय सम्यङ्मे येन यामि निरुत्तरम् ।

श्रीशिव उवाच ।

सर्व्वासां सिद्धविद्यानां प्रकृतिर्दक्षिणा प्रिये ।
दिव्यो वीरो वरारोहे चिन्तयेद्दक्षिणां शुभाम् ॥
दिव्यो वीरश्च देवेशि कालीकुलं विचिन्तयेत् ।
श्रीकुलञ्च त्रिभिर्भावैश्चिन्तयेत् सुरसुन्दरि ॥

काली तारा भद्रकाली भुवना महिषमर्दिनी ।
त्रिपुटा त्वरिता दुर्गा विद्या प्रतिशिवा प्रिये ॥
कालीकुलं समाख्यातं श्रीकुलञ्च ततः परम् ।
सुन्दरी भैरवी बाला बगला कमला तथा ॥
धूमावती च मातङ्गी विद्या स्वप्नावती प्रिये ।
मधुमती महाविद्या श्रीकुलं परिभाषितम् ॥
लतायां पूजयेत् कालीं नीले नीलसरस्वतीम् । इत्यादि ॥

**End.** काली तारा तथा छिन्ना मातङ्गी भुवनेश्वरी ।
अन्नपूर्णा तथा दुर्गा महिषासुरमर्दिनी ॥
त्वरिता त्रिपुरा भद्रे भैरवी बगला तथा ।
त्रिपुटा च तथा नित्या कमला च सरस्वती ॥
जयदुर्गा तथा भद्रे तारा त्रिपुरसुन्दरी ।
अष्टादश महाविद्यास्तन्त्रादौ कथिताः प्रिये ॥
नात्र कालविशुद्धिः स्यात् समयासमयादिकम् ।
न वारतिथिनक्षत्रं न योगः करणस्तथा ॥

**Colophon.** इति निरुत्तरतन्त्रे देवीश्वरसंवादे पञ्चमः पटलः ॥

**विषयः ।** शिवाशिवयोः संवादेन भावभेदनिरूपणम् । कालीकुलकथनम् । श्रीकुलकथनम् । पञ्चाम्नायनिरूपणम् । कालीपूजायां गुरुमन्त्रादिनिरूपणम् । कलानिरूपणम् । दक्षिणकालिकामन्त्रतद्ध्यानपूजादिविधिः । महाकालध्यानकथनम् । कुल्लुकादिनिरूपणम् । कालीस्तवकथनम् । कालीकवचकथनम् । अजपानिरूपणम् । अथ पुरश्चरणविधिः । दिव्यवीरपशुभावभेदात् पुरश्चरणप्रकारभेदकीर्त्तनम् । प्राणायामविधिः । निर्गुणसगुणभावचिन्तनविधिः । रात्रौ पूजाविधिः । महानिशादिनिरूपणम् । अथ वीराभिषेकविधिः । तत्र अभिषेकमन्त्रादिकथनम् । शिवमन्त्रलक्षणम् । शक्तिसाधनं विना निर्व्वाणाभावकथनम् । मात्रादिपञ्चकन्याव्याख्यानम् । शक्तिचक्रादिलक्षणकथनम् । पञ्चचक्रविधिः । कुसुमानुकल्पादिकथनम् । चक्रे वर्ज्जनीयकथनम् । गोप्यकर्म्मकथनम् । राजचक्रे देवचक्रे च विशेषकथनम् । योगिनां साधनादिविधिः । साधिकालक्षणादिकथनम् । कुलाचारादिसाधनकथनम् । विद्याविशेषे शक्तिविशेषविधानम् । अथ वेश्यालक्षणादिकथनम् । पञ्चद्रव्यनिरूपणम् । तेषां शुद्धिकथनम् । कुलकन्यानिरूपणम् । तर्पणे मुद्रादिविधिः । पञ्चीकरणविधिः । अष्टादशमहाविद्याकीर्त्तनञ्च ।

**No. 207.** निर्णयसिन्धुः. By कमलाकरभट्टः. Substance, country-made paper, 15×7 inches. Folia, 270. Lines, 13 on a page. Extent, 104,364 çlokas. Character, Bengali. Date, Sk. 1772. Place of deposit, Kāṭihāli, District, Mayamanasiṁha, Paṇḍita Navakiçora Tarkacūḍāmaṇi. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । श्रीरामाय नमः । श्रीकृष्णाय नमो नमः ।

कारुण्यैकनिकेतनं रामं सीतालताशोभितम् ।

विश्वामित्राध्वरायव्रततीसमालम्बनशाखिनं वन्दे ॥

लक्ष्मीसहायं कल्पद्रुतलावर्जितगोकुलम् ।

बर्हापीडं घनश्यामं महः किञ्चिदुपास्महे ॥

देवार्थधर्मरक्षार्थे मायामानुषरूपिणम् ।

पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥

यत्पादसंस्थितिः सर्व्वमङ्गलप्रतिभूर्मता ।

तान् भट्टरामकृष्णाख्यान् श्रीतातचरणान्नुमः ॥

सर्व्वकल्याणसन्देहनिदानं यत्पदद्वयम् ।

उमादीपोदरीमम्बामम्बाख्यां नौमि सादरम् ॥

विन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम् ।

ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥

हेमाद्रिमाधवमते प्रविचार्य्य सम्य-

गालोक्य तत्त्वमथ तीर्थकृतं परेषाम् ।

श्रीरामकृष्णतनयः कमलाकराख्यः

काले यथामति विनिर्णयमातनोति ॥

सन्ति यद्यपि विद्वांसस्तन्निबन्धाश्च कोटिशः ।

तथाप्यमुष्य वैदग्धीं केचिद्विज्ञातुमीशते ॥

तत्र संक्षेपतः कालः षोढ़ाब्दोऽयनमृतुर्मासः पक्षो दिवस इति । तत्राब्दो माधवमते पञ्चधा सावनः सौरश्चान्द्रो नाक्षत्रो बार्हस्पत्य इति । इत्यादि ।

**End.** प्रेतक्रियैकोद्दिष्टनिषेधेऽपि सिद्धे पुनःस्तद्ग्रहणमाब्दिकपरं तेन तत् पार्व्वणमेव । चिदग्निनो द्वादशनारायणवलिः तद्विधिरन्यत्र विशेषः प्रागुक्त इत्यलं बहुना ॥

एवं निरूपितमिदं गहनन्तु धर्म्म-

तत्त्वं विचार्य्य वचनैस्तुलयैः सुसम्यक् ।

महोषधमिवपथ्याय विवेचनीयं
विद्वद्भिरित्यवरतं प्रयतोऽस्मि वैद्यः ॥ * ॥

**Colophon.** समाप्तोऽयं निबंधशिरोमणिरिति शक १७०९ ।

**विषयः ।** प्रयागस्नानादिविधिः । कम्मलधूमव्यादिदानविधिः । संक्रान्तिविचारः । धन्वन्तरिव्रतस्नानदानादिविधिः । महामाघीयोगादिकथनम् । कौशिकापौर्णमास्यादिकृत्यनिरूपणम् । रजोदर्शनतिथिरात्र्यादिफलनिरूपणम् । रक्षविधानदानादिपूजानिरूपणम् । षष्ठीदृष्ट्यादिपूजानिरूपणम् । कोजागरलक्ष्मीपूजनादिनिरूपणम् । कार्त्तिकप्रातःस्नानाकाशप्रदीपोत्सर्गादिविधिः । चातुर्मास्यव्रतसमाप्तिबोधनादिविधिः । धनुःसंक्रान्तपुष्पकालादिनिरूपणम् । अर्द्धोदययोगादिनिरूपणम्। माघस्नानविधिर्माघे मूलकभक्षणादिनिषेधः । विष्णुपवित्रारोपणादिविधिः । शयनीयोत्सवादिनिरूपणम् । शक्रध्वजारोपणादिविधिः । वामनपूजादिविधिः । महालयापार्व्वणादिश्राद्धविधिः । कपिलषष्ठीकृत्यादिविधिः । गजच्छायादिकथनम् । दैवीपूजाचण्डीपाठादिविधिः । चैत्रादिशुक्लचतुर्दश्यां नृसिंहव्रतादिनिरूपणम् । बेतुपत्नरामेश्वरपूजादिनिरूपणम् । कोकिलव्रतादिनिरूपणम् । मासविचारादिनिरूपणम् । व्रतारम्भकालादिनिरूपणम् । ग्रहणादिनिरूपणम् । जीवित्पुत्रानादिविधिः । अभिषेकविधिः । गर्भाधानादिसंस्काराभावदोषकथनम् । सीमन्तोन्नयनादिसंस्कारकर्म्मनिरूपणम् । विवाहादिविधिः । देवप्रतिष्ठादिविधिः । षट्षष्टिशूद्राणां व्यवस्था । स्त्रियुक्ताशालग्रामस्पर्शपूजनादिनिषेधः । होमादिनिरूपणम् । श्राद्धादिनिरूपणम् । क्रयविक्रयादिनिरूपणम् ।

---

**No. 208.** निर्व्वाणतन्त्रम्. Substance, country-made paper, 12 × 2½ inches. Folia, 18. Lines, 8 on a page. Extent, 432 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahara Khāsvāṭī, Mahādeva Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।

कैलासपर्व्वते रम्ये नानारत्नोपशोभिते ।
विपरीतरतासक्ता चण्डी पप्रच्छ शङ्करम् ॥
श्रीचण्डिकोवाच ।
निराकारं निर्गुणञ्च स्तुतिनिन्दाविवर्जितम् ।
सुनित्यं सर्व्वकर्त्तारं वर्णातीतं सुनिश्चलम् ॥
संज्ञादिरहितं शान्तं निराकारं प्रतिष्ठितम् ।
तस्मादुत्पत्तिर्देवेश निराकारेण जायते ॥ इत्यादि ।

**End.** यदि भक्तियुतो मर्त्यो मनसा चिन्तयन् सदा ।
ते नरा नहि गच्छन्ति कदाचिद्यम मन्दिरे ॥
इति ते कथितं नत्वं वैष्णवस्य सुरेश्वरि ।
यज्ज्ञात्वा च नरस्तत्र मुच्यते नात्र संशयः ॥

**Colophon.** इति श्रीनिर्व्वाणतन्त्रे विष्णोः स्तोत्रकथनं नाम द्वादशः पटलः ॥

**विषयः ।** ब्रह्मनिरूपणम् । ब्रह्माण्डोत्पत्तिनिरूपणम् । नराणां जन्मस्थलाद्रिनिरूपणम् । गायत्रीनिरूपणम् । गायत्रीमाहात्म्यनिरूपणम् । षडङ्गन्यासमन्त्रादिनिरूपणम् । वृषद्वन्द्वाश्व-लक्षणनिरूपणम् । योगाचरणनिरूपणम् । सत्यादिलोकनिरूपणम् । विष्णुस्तवकथनञ्च ।

---

**No. 209.** नीतिसारः, (गारुड़ीयः). Substance, country-made paper, 12×3 inches. Folia, 13. Lines, 7 on a page. Extent, 366 çlokas. Character, Bengali. Date, Sk. 1636. Place of deposit, Brāmhaṇamaṇḍalī *viâ* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ नीतिसारः ।
उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाम् ।
अलुब्धैः सह मित्रत्वं कुर्व्वाणो नावसीदति ॥
परवादं परद्रव्यं परिवादं परस्त्रियाः ।
परवेश्मनिवासञ्च न कुर्व्वीत कदाचन ॥ इत्यादि ।

**End.** प्रदेशे चाल्पसारे द्रव्यं जातुचित् तु दृश्यते ।
अद्येयं वरणीयञ्च विद्या न ह्रियते परैः ॥ ० ॥

**Colophon.** इति गारुड़ीयनीतिसारः समाप्तः ॥ ० ॥

**विषयः ।** नीतिविषयोपदेशकाः कतिपयश्लोकाः ।

---

**No. 210.** नीलकण्ठस्तवराजः. Substance, country-made paper, 16×3 inches. Folia, 6. Lines, 6 on a page. Extent, 108 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭihālī, District Mayamanasiṁha, Paṇḍita Jagaccandra Smṛtipañcānana. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
विद्युद्रत्नांशुविभूषिताङ्गी
शिलातले हेममये सुरम्ये ।
सुखोपविष्टं नटनाङ्गनाग्रं
जगाद वाक्यं गिरिराजपुत्री ॥ इत्यादि ।

**End.** श्रुत्वैतत् परमं गुह्यं येऽपि स्युः पापयोनयः ।
स्त्रियः शूद्राश्च येऽपीह चन्द्रलोकं व्रजन्ति वै ॥

**Colophon.** इति स्कन्दपुराणे अमृतमथने पार्व्वतीशिवसम्वादे श्रीनीलकण्ठस्तवराजः समाप्तः ॥ * ॥

**विषयः ।** कालकूटधारणनिरूपणमुखेन नीलकण्ठस्तवनिरूपणम् ।

---

**No. 211.** नीलाचलीयतीर्थप्रयोगः. Substance, country-made paper, 16×3½ inches. Folia, 10. Lines, 5 on a page. Extent, 119 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasimha, kāṭihāli, Paṇḍita Parāṇacandra Tarkālaṃkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः कामाख्यायै । अथ योगिनीतन्त्रोक्तनीलाचलीयतीर्थप्रयोगः ।
गयाशीर्षे गयाकूपे तथा नीलाचले गया ।
त्रिगयापिण्डदानेन पुनः श्राद्धं न चाचरेत् ॥
आमर्णेर्मणिपर्य्यन्तं आचिताङ्गमादनम् ।
देवा मरणमिच्छन्ति किं पुनर्मानवादयः ॥ इत्यादि ।

**End.** शुकादीनाञ्च यज्ञाग्नं यमादिपरिशोधितम् ।
तदेव द्रवरूपेण कामाख्यायोनिमण्डले ॥
नरयोनिः केन प्रकारेण भवति एकमेव सत्यं चञ्चलं स्यात् सत्यम् ।
एकोऽपि नवधा भूत्वा न्यपतद् योनिमण्डलम् ॥ इति योगिनीतन्त्रीयवचनात् ।

**Colophon.** समाप्तोऽयं ग्रन्थः ॥ * ॥

**विषयः ।** क्षेत्रप्रमाणनिरूपणमुखेन कामाख्यायां कर्त्तव्यकर्म्मनिचयनिरूपणम् ।

**No. 212.** नैषधचरितटीका, (अन्वयबोधिका). By प्रेमेन्द्रन्यायरत्नः. Sustance, country-made paper, 16×3 inches. Folia, 47. Lines, 9 on a page. Extent, 150 çlokas. Character, Bengali. Date, ? Place of deposit, Tāmluk Kelomāl, Bābu Sāradāprasanna Ghoṣa. Appearance, new. Prose. Generally correct.

**Beginning.** ॐ नमः परदेवतायै ।

याकाङ्क्षितामलपदा नियतं जनानां
मत्त्वर्थसञ्चयसमुन्नयने च योग्या ।
व्यक्तीकरोति निखिलं हृदि भावजातं
वाग्देवतामभिमतामहमाश्रये ताम् ॥
अन्यासु भाववकुलासु सदर्थिकासु
टीकासु चेदिह भवेत् विफलः प्रयत्नः ।
सद्भिस्तथापि मृदुबोधविबोधनार्थं
जातोद्यमोऽहमिह मत् प्रति नावबुद्धै ॥
अस्य ग्रन्थस्य महाकाव्यतया वर्णनीयप्रसिद्धनायकत्वेन सहृदयानां झटिति
साभिनिवेशशुश्रूषाप्रकीर्णतया च प्रथमं सन्नायकनामरूपं वस्तु निर्दिशति ।
निपीयेति । इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** नैषधचरिताख्यस्य महाकाव्यस्य व्याख्यानम् ।

---

**No. 213.** न्यायादर्शः वा न्यायसारावलिः. By जगदीशतर्कालङ्कारः. Substance, country-made paper, 14×4 inches. Folia, 23. Lines, 16 on a page. Extent, 1,725 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurāgrāma, Paṇḍita Rajanīkānta Tarkaratna. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

कर्पूरकुन्दकुसुमकैलासोदरसोदरम् ।
विघ्नविध्वंसकं धाम नमामो नैव दैवतम् ॥
अन्यैरनुष्ठितविविधचोद्यैः कलुषीकृतः कविभिः ।
न्यायादर्शं इदानीं श्रीजगदीशप्रकाशितः स्फुरतु ॥

यन्नारदेन समुपदिष्टमदृष्टमन्यैः
मीमांसभीमनुपमा कणभाजयेन ।
सिद्धान्तवाहरत × सु × × × इत्था
विद्यार्थिनां गुणकृते प्रकृतं यदानः ॥

अथ निखिलवस्तुषु विहितेषु लौकिकेषु च कर्मसु तत्तत्फलस्य कारणत्वं निर्णीय प्रवर्तन्ते । न तु तद्ज्ञानकृतयत्नः । तत्र किन्नाम कारणत्वम् । न च तावत् तत्तत्फलाव्यवहितपूर्व्वत्वमतिप्रसङ्गात् क्वचिदप्रसङ्गाच्च । नापि तदभावप्रयोजकीभूताभावप्रतियोगित्वम् । प्रयोजकत्वं हि न व्यापकत्वं घटारम्भकसंयोगादिकं प्रति घटादेर्जनकत्वापत्तेः । नापि स्वरूपसम्बन्धविशेषः । प्रमाणाभावात् । इत्यादि ।

**End.** किन्तु स्वप्रयोज्यविजातीयसंयोगवत्तयेति न समवायिघटकस्योत्पत्तौ व्यभिचारस्तथापि लौकिकरूपस्यापि नित्यद्रव्यस्य तादात्म्यप्रत्यासत्त्या सत्त्वादित्यपि वदन्तीति कृतं पल्लवितेन ॥

**Colophon.** इति महामहोपाध्याय—जगदीशतर्कालङ्कारविरचिता न्यायसारावलिः सम्पूर्णा ॥

**विषयः** । अथ प्रथमं कारणत्वस्वरूपविवेचनम् । तत्र एकदेशिमतादिन्यासपूर्व्वकं तल्लक्षणम् । समवाय्यसमवायिनिमित्तभेदात् कारणस्य त्रैविध्यनिरूपणम् । तत्र चित्ररूपत्वादिस्वरूपकथनपूर्व्वकं मीमांसकमतखण्डनम् । अन्यमहत्त्वेषु क्वचिद्बहुत्वसंख्यामात्रं क्वचिन्महत्त्वमात्रं क्वचिद्बहुत्वसंख्यामहत्त्वोभयं क्वचिन्महत्त्वप्रचयोभयं क्वचिच्च बहुत्वसंख्यामहत्त्वप्रचयत्रितयमेव कारणे कार्य्यप्रत्यासत्त्या कारणमिति निरूपणम् । अथ दीर्घत्वाख्ये च परिमाणे महत्त्वमात्रं दीर्घत्वमात्रं बहुत्वदीर्घत्वोभयं बहुत्वदीर्घत्वप्रचयत्रितयञ्च यथायोगमसमवायिकारणमिति निरूपणम् । एवं संयोगादिषु कारणत्वविवेचनञ्च ।

---

**No. 214.** पञ्चपक्षीटीका. Substance, country-made paper, 18 × 4½ inches. Folia, 7. Lines, 9 on a page. Extent, 323 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, Post Office Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākur. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीशिवः ।
बाह्यो गन्धवहा धन्वी निकृतीच्छा च धारणम् ।
शाकिनीचरिता नद्या मूलाधारगता स्मरे ॥

कणादीयो (?) यशोर्विष्णुप्रतिष्ठाग्रामकेन च ।
श्रीपद्मं राजितीर्थाभिः शाण्डिल्याभिधारकः । इत्यादि ।

End.
चक्रवक्षचक्रः सिंहे कन्यायाञ्च मराङ्गना ।
पुत्री माता यथा वापि तुलायां नक्षत्रो भवेत् ॥
वृश्चिके वैभकचौरत्वाये माता स्त्रियोऽथवा ।
धने वैश्याजनचौरः कुम्भे चौरश्च सूचिकः ।
मीने वराङ्गने स्थाने नाम येषां न विद्यते ॥

Colophon. इति पक्षपक्षीटीका समाप्ता ॥

विषयः । पक्षपक्षीनामकस्य ज्योतिषग्रन्थस्य व्याख्या ।

---

**No. 215.** पञ्जीनिबन्धः. By हेमकरः. Substance, country-made paper, 18×1½ inches. Folia, 95. Lines, 4 on a page. Extent, 1,425 çlokas. Character, Bengali. Date, Sk. 1669. Place of deposit, Serapura, District Mayamanasiṁha, Mahāmahopādhyāya Candrakānta Tarkālaŋkāra. Appearance, new. Prose. Generally correct.

Beginning.
ॐ नमो गणेशाय ।
श्रीसर्वज्ञजगन्नाथं प्रणम्यादिमनादिकम् ।
गुरुपदिष्टमार्गायाभिख्याते स्तुतिहेतवे ॥
देवमित्यादि । प्रणम्येति प्रादीनां नामसमिति समासः । तथा हि नाम-
प्रकरणं भिन्नप्रकरणं उच्यते । इत्यादि ।

End.
यदि श्रोध्येऽर्थेऽधमर्णविषये लृपमिति निपातः तद्दोत्तमर्णं इति न सिध्यति ।
इत्याह अधमर्णं इत्यादि । लवणोरपीति तेषां मते लेन लवणो-
पपदत्वम् । अपर्णा । अपर्णं लोठो इविरिति सन्निपातलक्षणो विधि-
रनिमित्तं तद्विघातस्य वर्णपदत्वे निमित्तमादिति च नामितं भवतीति ॥०॥

Colophon. इति श्रीमद्धेमकरविरचिते पञ्जीनिबन्धे कृत्पादः षष्ठः समाप्तः ॥ * ॥
९ ६ १६
नर तर्के वर्षे माघे लिखिता पुस्तिका शुभा ।
शकाब्दा १६६९ ॥

विषयः । कातन्त्रपञ्जीव्याख्या ।

---

**No. 216.** पत्रकौमुदी. By वररुचिः. Substance, country-made paper, 19 × 4 inches. Folia, 5. Lines, 9 on a page. Extent, 245 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ दुर्गायै नमः ।

श्रीमत्कृष्णपदारविन्दयुगलं ब्रह्मेश्वराद्यामर-
श्रेणीनम्रकिरीटकोटिविलसद्भीपुष्पार्चितं सन्ततम् ।
वाणीञ्च प्रणमामि विश्वजननीं प्रत्यूहविध्वंसिनीं
भक्तानुग्रहविग्रहात् भगवतीं नित्यं वचोहृदये ॥
विक्रमादित्यभूपस्य कीर्त्तिसिद्धेर्निदेशतः ।
श्रीमान् वररुचिर्धीमान् तनोति पत्रकौमुदीम् ॥
राज्ञां मन्त्रिप्रवीराणां पण्डितानां तथैव च ।
गुरूणां स्वामिभार्य्याणां तथैव पितृपुत्रयोः ॥
सन्न्यासिभृत्यशत्रूणां तथैवान्यविवेकिनाम् ।
एतेषामपि सर्व्वेषां पत्रचिह्नादिकं ब्रुवे ॥ इत्यादि ।

**End.** अथ विवेकिनां प्रशस्तिः । स्वस्तिश्रीभगवत्पदपङ्कजपूजनोचितपुण्यपुञ्जपवित्री-कृतान्तःकरणदिग्दन्तिविसरमालाकलापशोभिनिरवधिवसुमित्रानन्दाचरी-कृतसुरपुरभूमीश्वरेषु ॥ स्वस्तिश्रीमत्परमेश्वरपदपाथोजद्वयाद्यचतुरचित्त-चञ्चरीकभूरन्दारकवृन्दावनिजमिततिमिरपटलपाटकलाकृतदिगङ्गनाङ्गणाङ्गन-तटपवनप्रतापोर्व्वीस्वर्व्वीकृतप्रत्यर्थिसार्थगर्व्वाव्धिपारावारेषु ॥ * ॥

**Colophon.** इति वररुचिविरचिता पत्रकौमुदी समाप्ता ॥

**विषयः ।** पत्रलक्षणम् । पत्रप्रमाणम् । लेखकलक्षणम् । पत्ररचनाक्रमः । लिखनप्रकारः । पत्रानयनक्रमः । पठनक्रमः । पत्रचिह्नानि । राजपत्रस्य कोषच्छेदप्रकारः । पण्डित-मन्त्रि-स्वामिप्रभृतीनां पत्रलिखनक्रमः । राजप्रशस्तिः । मन्त्रिप्रशस्तिः । गुरु-भार्य्या-पुत्रप्रभृतीनाञ्च प्रशस्तिः ।

---

**No. 217.** पदार्थसंग्रहः. By विजयीन्द्रभिक्षुः. Substance, country-made paper, 12 × 4 inches. Folia, 16. Lines, 9 on a page. Extent, 522 çlokas. Character, Nāgara. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Incorrect.

**Beginning.** श्रीरामचन्द्रगुरुराजाय ते नमः । ॐ श्रीमज्जयतीर्थगुरुभ्यो नमः । श्रीविजयीन्द्रगुरुभ्यो नमः ।

ॐ लक्ष्मीपतिं संप्रणम्य सर्वज्ञादिगुरूनपि ।
पदार्थानां संग्रहोऽयं क्रियते ज्ञानतोऽल्पशः ॥
द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावभेदाद्दश पदार्थाः ।
इत्यादि ।

**End.** परमा चाच सकलभोग्ययुक्ता मुक्तमुक्तादिभिः ईश्वमानपञ्चोके विमलाख्ये पर्यङ्के शयने तव प्रिये कर्मोत्पाद्यमति बहुधा विभूतिर्वञ्चमानं करोति महालक्ष्मीः इत्येव मङ्गलम् ॥

**Colophon.** इति विजयीन्द्रभिक्षुविरचितः पदार्थसंग्रहः समाप्तः ॥ * ॥

**विषयः ।** पदार्थादिनिरूपणम् । द्रव्यादिनिरूपणम् । गुणादिनिरूपणम् । सृष्टिप्रकरणनिरूपणम् । प्रलयनिरूपणम् । ज्ञानप्रकरणादिनिरूपणञ्च ।

---

**No. 218.** पद्यावलिः. Substance, country-made paper, 13 × 3½ inches. Folia, 27. Lines, 10 on a page. Extent, 709 çlokas. Character, Bengali. Date, Sk. 1750. Place of deposit, Viṣṇupura, Kriṣṇagañja, District Vākuḍā, Çaçibhūṣaṇa Gosvāmī. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ।

पद्यावली विरचिता रसिकैर्मुकुन्द-
सम्बन्धबन्धुरपदा प्रमदोर्मिसिन्धुः ।
रम्या समस्तजनता दधती क्रमेण
संगृह्यते कृतिकदम्बककौतुकाय ॥

प्रारम्भे मङ्गलाचरणमाह ।

नमो नलिननेत्राय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ॥

कस्यचित् ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।

कावचेतमकामिमीरचिकनां राधाकृष्णोन्नती
पुष्पाणां कुर्वतां भक्तानिष्कलं गेहे तनुतां हरेः ॥ इत्यादि ।

**End.** योगेश्वरस्य ॥
जयदेवबिल्वमङ्गलमुख्यैः कृता येऽत्र सन्ति सन्दर्भाः ।
तेषां पद्यानि विना समाहृतानीतराणि च ॥
श्रीमन्मदनगोपालचरणाम्बुजसन्निधौ ।
पद्यावली विरचिता केनचित् द्विजजन्मना ॥

**Colophon.** समाप्तेयं पद्यावली ॥ * ॥ शकाब्दाः १७५० ॥

**विषयः ।** भक्तजननिकरकृतनानाविधकृष्णस्तवविषयकश्लोकसंग्रहः ॥

---

**No. 219.** परमात्मसन्दर्भः. Substance, country-made paper, 12×4 inches. Folia, 39. Lines, 11 on a page. Extent, 1,199 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Kūcekol, Bābu Yogīndranātha Siṁhadeva. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीकृष्णचैतन्यचन्द्रो जयति ।
तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तमुत्क्रान्तखण्डितम् ।
पर्यालोच्याथ पर्यायं कृत्वा लिखति जीवकः ॥
अथ परमात्मा विविच्यते तत्र तं जीवनिरूपणपूर्वकं निरूपयति द्वाभ्याम् ।
चैतन्य आत्मा मनसो विभक्तो
जीवस्य माया रचितस्य नित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च
शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥ (?) इत्यादि ।

**End.** यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।
एको नानायते तद्वत् भगवान् शास्त्रवर्त्मभिः ॥
इत्युदाहरणीयं । अनेनैव मतिसामान्येन सिध्यतीति ॥ श्रीशुकः । प्रत्यव-
स्थापितं तद्गीतादिपद्यम् ॥ * ॥

**Colophon.** इति कलियुगपावनभजनविभजनप्रयोजनावतार-श्रीश्रीभगवत्कृष्णचैतन्य-देवचरणानुचरविश्ववैष्णवराजसभाजन-श्रीरूपसनातनानुशासनभारतीगर्भे श्रीभगवत्सन्दर्भो नाम तृतीयः सन्दर्भः ॥

ऊर्ज्जे मासासिते पक्षे नवम्यां तिथौ शुभा ।
शाके रन्ध्राङ्कभूम्येन्दौ द्विजे श्रीजयरिङ्कते ।
पूरिता लिपिकावेयं काञ्चनारेण केनचित् ॥

विषयः । वैष्णवग्रन्थोऽयं । तत्र च जीवपरमात्मादिविचारमुखेन जीवपरमात्मादि-निरूपणम् ।

---

**No. 220.** परिभाषाविवरणम्. Substance, country-made paper, 15 × 2½ inches. Folia, 22. Lines, 6 on a page. Extent, 495 çlokas. Character, Bengali. Date, Sk. 1626. Place of deposit, Vāḍari, District Mayamanasiṁha, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य सदसद्द्वारं ध्वान्तविध्वंसभास्करम् ।
वाक्यार्थं परिभाषाणां वक्ष्ये बालावबुद्धये ॥
सूत्रेष्वेव हि तत् सर्व्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्व्वं सूत्रे प्रतिष्ठितम् ॥ इत्यादि ।

**End.** न्याय्यश्चैतत् शब्दार्थानवच्छेदे विशेषस्मृतिहेतूनां प्रकरणादीनामभावे विशेषार्थ-वत्त्वात् लक्ष्यानुसार एव उचितः । तदुक्तं न व्युत्पत्तिकाणां शास्त्रे प्रवृत्तिरिति ॥

**Colophon.** इति दौर्गसिंह्यां परिभाषायां तदर्थविवरणं समाप्तम् ॥ शकाब्दाः १६२६ ।

विषयः । दौर्गसिंहपरिभाषाया व्याख्यानम् ।

---

**No. 221.** परिभाषावृत्तिः. By दुर्गसिंहः. Substance, country-made paper, 13½ × 3 inches. Folia, 17. Lines, 6 on a page. Extent, 777 çlokas. Character, Bengali. Date, ? Place of deposit, Kṛṣṇapurā, Post office Vaidyervāzār, District Ḍhākā, Paṇḍita Tārakacandra Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य सदसद्द्वारं ध्वान्तविध्वंसभास्करम् ।
वाक्नाथं परिभाषार्थं वक्ष्ये बालाविबुद्धये ॥

इह हि ।

सूत्रेष्वेव हि तत्सर्व्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्व्वं सूत्रे प्रतिष्ठितम् ॥

येन केनचिच्छास्त्रं ज्ञातुकामेनावश्यमेवाभ्युपगन्तव्यम् । तथाचान्वर्थः अर्थान् सूचयति सूते सूचयति इति वा सूत्रम् । तत्र सूत्रकारयोः सर्व्ववर्म्म-कात्यायनयोः सूत्राणां चतुःशत्यां पञ्चदशाधिकायां परिभाषा नोक्ता अथ च वृत्तिटीकयोः प्रयुक्ता कार्य्येषु दृश्यते तासां कुतः संसिद्धिरुच्यते । इत्यादि ।

**End.** ज्ञापकञ्च रूढ़ाणां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्येत्यत्रास्त्रियामिति वचनम् । अन्यथाऽदन्तावस्तोपेऽस्त्रियामिति निर्द्देशोऽनर्थक एव स्यादिति ॥

**Colophon.** इति दुर्गसिंहोक्ता परिभाषावृत्तिः समाप्ता ।

**विषयः ।** लौकिकशास्त्रीयभेदेन परिभाषाद्वैविध्यकथनम् । पुनः शास्त्रीयपरिभाषाया द्वैविध्यकथनम् । परिभाषाशब्दस्य व्युत्पत्तिकथनम् । नानाविधपरिभाषाया नानविधालौकिक-प्रयोजनकथनम् । नानाविधपरिभाषाया नानाविधानां शास्त्रीयप्रयोजनानां विशेषेण विवेचनम् । कातन्त्रसूत्राणज्ञापकान्युद्धृत्य स्वकीयोक्तिसमर्थनञ्च ॥

---

**No. 222.** परिभाषावृत्तिः. By रामचन्द्रविद्याभूषणः. Substance, country-made paper, 17×3 inches. Folia, 10. Lines, 7 on a page. Extent, 350 çlokas. Character, Bengali. Date, Sk. 1631. Place of deposit, Brāhmaṇamaṇḍali *viâ* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीरामः शरणम् ।

मधुमथनमभीगत्यादराद्रामचन्द्रो
विविधबुधविधानैर्लब्धशुद्धप्रबोधः ।
प्रणयति परिभाषावृत्तिमुद्बोधहेतुं
भवति सुमतिरस्यैवाचिरां जानतां याम् ॥

येन केनचिद्व्याख्यातुकामेनावश्यमेवाभ्युपगन्तव्यम् । अर्थान् सूचयति सूते सूचयति वा सूत्रं तत्र याः परिभाषा नोक्ता अथच वृत्तिटीकयोश्च तत्र प्रयुक्ताः कार्य्ये च दृश्यन्ते तासां संसिद्धिर्युक्तितः कथ्यते ता लौकिक्यः शास्त्रीयाश्च तत्र लौकिक्यो लोकत एव रूढाः । यास्तु शास्त्रीयास्ता द्विविधा लिङ्गवत्यो विध्यङ्गशेषभूताश्च । इत्यादि ।

**End.** तेन नापदं शास्त्रे प्रयुञ्जीतेति स्थितेर्गतिश्चिन्तनीयेत्ति न्यायाभ्यामादेशादीन् भिन्नवन्निर्द्देशेन विधाय अतएव असीत्यादिकमाचार्य्यैरुक्तम् । एवञ्च परस्मै पदमिच्छन्ति कश्चिदेवात्मनेपदे इति कृत्या परस्मैपदे ङप्रत्ययविधाने शास-लिपुदित्यत्र द्युतङ्गित्यस्य पाठात् अद्युतदित्युदाहृत्य तेनैव पसित्युक्तम् । विधिवलादातोऽप्येत्वमित्यादिकञ्चेति दिक् । अन्यदप्यूह्यम् । एवमन्ये न्याया अनुसर्त्तव्या विस्तारभयान्न लिखिताः ॥ ० ॥

**Colophon.** इति श्रीरामचन्द्रविद्याभूषणविरचिता परिभाषावृत्तिः सम्पूर्णा ॥ ० ॥

शकाब्दाः १६१० ।

आकाशेन्दुरसावनीविगणिते शाकाब्दसंख्याङ्के

न्यायोदाहरणादिकं प्रकुरुते श्रीरामचन्द्रः कियत् ।

शकाब्दाः १६२१ । २७ चैत्र श्रीरामवल्लभशर्म्मणा लिखितम् ॥

**विषयः** । मुग्धबोधस्य परिभाषेयम् । अत्र च युक्तितः सूत्रानुक्तपरिभाषावृत्त्यादीनां निरूपणम् ।

---

**No. 223.** परिभाषावृत्तिटीका . By रामनाथसिद्धान्तः . Substance, country-made paper, 18 × 3½ inches. Folia, 25. Lines, 8 on a page. Extent, 839 çlokas. Character, Bengali. Date, Sk. 1667. Place of deposit, Ādiyādaha, District 24-Parganās, Paṇḍita Haripada Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥

प्रणम्य शारदापादपद्ममानन्दसाधनम् ।
परिभाषावृत्तिटीकां यथाशास्त्रं समासतः ॥
श्रीरामनाथसिद्धान्तो बालानां सुखहेतवे ।
तनुते तनुवाग्वित्तो गुरुपादोपदेशतः ॥

तत्रादौ नानाविधविघ्नेन प्रारिप्सितविविधकामः श्रीइष्टदेवताप्रणतिरूपमङ्गलं प्रदर्श्य शास्त्रप्रयोजनमुपदिदिक्षुः ग्रन्थकारः । हरिमित्यादि । श्रीर-ग्राम-वासि-मैथिल-महामहोपाध्याय-श्रीदत्तात्मजसूनुना ... ... ... ... तदा-त्मज-दामोदरदत्त-तनुजेन श्रीपद्मनाभदत्तेन परिभाषावृत्तिविशेषेण शास्त्रे व्युत्पाद्यते क्रियते इत्यर्थः । इत्यादि ।

**End.** यथा शब्ददीर्घमध्यमकार्याणे इतिकार्यातिदेशो यथा गङ्गवत् समासवत् इत्यं पुंवदादि । उक्तञ्च भाष्ये निरूप्य शास्त्रः पदातिदेश इति । इदानीं सकल-ग्रन्थसंख्यामाह उक्त इत्यादि । व्याकरणमिदमादरे इति उपमानोपमानारणे समासः । व्याकरणनाम । नाम्ना सुपद्मः सुखेन पठते अध्येऽरूपायिति । तस्य पञ्जिका पञ्जि वक्तीकरणे चुरादिः टीकेत्यर्थः । तदनन्तरं बालानां बोधार्थं प्रयोगदीपिका उक्ता ।

उणादिवृत्ती रचिता मया च धातुचन्द्रिका ।
तथैव षट्कारको इति च ग्रन्थान्तरं परम् ॥
परिभाषावृत्तीरचिता आचित्यं नाम्ना गोपालचरितं ग्रन्थरत्नम् ।
आनन्दलहर्याष्टीका रचिता माघे ग्रन्थविशेषे ।
टीका रचिता छन्दे रत्नच छन्दसि कृतौ आचारचन्द्रिका निर्मिता ।
कोषे भूरिप्रयोगाख्यो ग्रन्थजातस्य मध्यतः ।

आदेशात्मया इति द्वादशसंख्याता ग्रन्था रचिता इत्यर्थः । इतो विद्वत्परी-तारमाह ये धीराः पण्डिताः श्रीपद्मनाभेन कृतिमाधमत्सुस्थियुक्तानां संस्कृते किमर्थमित्याह इवे पुस्तका यो युक्ताभिः संख्याताः संशोध्या इवं प्रति-पाद्याह पुण्यवदात्मपुत्रा इवेति भावः ॥ ० ॥

**Colophon.** इति श्रीरामनाथसिद्धान्तरचिता परिभाषावृत्तिटीका समाप्ता ।
शकाब्दाः । १६६७ ॥

**विषयः ।** पद्मनाभरचित-सुपद्मव्याकरणस्य परिभाषावृत्तेर्व्याख्यानम् ।

---

**No. 224.** परिशिष्टप्रबोधः. By गोपीनाथतर्काचार्यः. Substance, country-made paper, 16×3 inches. Folia, 246. Lines, 7 on a page. Extent, 6,235 çlokas. Character, Bengali. Date, Sk. 1721. Place of deposit, Ḍhākā, Paṇḍita Candrakānta Nyāyālaṇkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

यो जातो वरवीरभद्रतनयाजाताक्षिपाणोदरा-

च्छ्रीलक्ष्मणनामधात् पद्मपवेरार्याच्चिंचात् ततः ।

श्रीमिश्रीजितमीतरश्मिकुमुदश्रेणीशिवः श्रीमतो

द्रामाणीतवराविरचितवराङ्गोणाङ्घिरैर्चारितः ॥

सोऽयं सच्चिदभावभावितमतिः कालाभवाभाकृतिः

सत्योल्लेकपशीलवेश्वरमतिः श्रीगोपनाथश्रुतिः ।

गोपीनाथ इमञ्चकार मधुरव्याख्यानवागीश्वर-

तर्काचार्यवरः सदर्थचतुरः सच्छ्लोकविद्याधरः ॥

इह खलु सकलविद्वज्जनचक्रचक्षुरत्यन्तपरिप्राप्तनिखिलविशुद्धशब्दोच्चारण-

कारणप्रारब्धकर्मोपकारकचरितमचारपुरःसरं पञ्चमारभ्यावशिष्टग्रन्थं

शिष्यान् शिक्षयिषन् चरितमचारं करोति संचारेति । चक्षार्थः । चरि-

तता कातन्त्रपरिशिष्टं ब्रूमः । कोऽयं संचारतिमिरमिहिरं । क्वाडप-

जिवदशरीरपरिमयः संचारः । चपदमिन्द्राशङ्कादप्रभृतेचरलव्यादि-

शरीरव्यापत्तम् । इत्यादि ।

**End.** द्व्यजजातेषु शब्देषु न द्व्यमिति वाचिशिकद्रुप्रयोगः शुद्धलभ्यशब्दयो-

र्मधुसर्पिरादिशब्दपाठात्सिद्धिरिति ॥

**Colophon.** इति श्रीगोपीनाथतर्काचार्यविरचिते परिशिष्टप्रबोधे समासव्याख्यानं

समाप्तम् ॥ शुभमस्तु शकाब्दाः । १७९१ ।

**विषयः ।** श्रीपतिदत्तविरचित-कातन्त्रपरिशिष्टस्य व्याख्यानम् ॥

---

**No. 225.** पवनदूतम् . By धोयीकविराजः. Substance, country-made paper, 14 × 3 inches. Folia, 12. Lines, 6 on a page. Extent, 288 çlokas. Character, Bengali. Date, Sk. 1752. Place of deposit, Viṣṇupura, District Vâkuḍā, Paṇḍita Raghurāma Tarkaratna. Appearance, fresh. Verse. Correct.

**Beginning.** श्रीरामाय नमः ।

अस्ति श्रीमत्यचिन्त्यवसुधासुन्दरे चन्दनाद्रौ

गन्धर्वाणां कनकनगरी नाम रम्यो निवासः ।

दैवैर्लीलाभवनमितरैरम्बरं वासितक्षि-

र्धातुः (?) शाखानगरमधुना यः सुराणां पुरस्य ॥

तस्मिन्नेका कुवलयवती नाम गन्धर्व्वकन्या
मन्ये जैत्रं मृदु कुसुमतोऽप्यायुधं या स्मरस्य ।
दृष्ट्वा देवं भुवनविजये लक्ष्मसंक्षोनिपाथं (?)
बाला सद्यः कुसुमधनुषः संविधेयीबभूव ॥ इत्यादि ।

End. सन्देशोऽयं मनसि निहितः कश्चिदायुष्मता मे
किंवा भूयस्त्वयि विरचिते बहुभिश्चाप्रकारैः । (?)
पारार्थैकप्रवणमनसस्त्वद्विधा वास्मशिष्टा-
नापन्नानां न खलु बहुशः काङ्क्षवादान् सहन्ते ॥
दन्तिव्यूहं कनकलतिकां चामरं हैमदण्डं
यो गौड़ेन्द्रादलभत कविक्ष्माभृतां चक्रवर्त्ती ।
श्रीधोयीकः सकलरसिकप्रीतिहेतोर्मनस्वी
काव्यं सारस्वतमिव ... ... मन्त्रमेतज्जगाद ॥
गोष्ठीबन्धः सकलकविभिर्वाचि वैदर्भरीति-
र्वासो गङ्गापरिसरभुवि स्निग्धभाग्या विभूतिः ।
सन्तु स्नेहः सदसि कविताचार्य्यकं भूभुजां मे
भक्तिर्लक्ष्मीपतिचरणयोरस्तु जन्मान्तरेऽपि ॥
यावच्चन्द्रार्द्धचूड़ति गिरिजासंविविक्तं शरीरं
यावज्जैत्रं कलयति धनुः कौतुकं पुष्पकेतुः ।
यावद्राधारमणतरुणीकेलिसाक्षी कदम्ब-
स्तावज्जीयात् कविनरपतेरेष वाचां विलासः ॥
कीर्त्तिर्लब्धा सदसि विदुषां शीतलक्षौणिपाला (?)
वाक्सन्दर्भाः कतिचिदमृतस्यन्दिनो निर्म्मिताश्च ।
तीरे सम्प्रत्यमरसरितः क्वापि शैवोपकण्ठे
ब्रह्माभ्यासे प्रयतमनसा नेतुमीहे दिनानि ॥ *

Colophon. इति श्रीधोयीकविराजविरचितं पवनदूताख्यं काव्यं समाप्तम् ॥ * ॥ श्रीराधा-कृष्णाभ्यां नमः । चलेखीयं श्रीरामगतिसूनिना ॥ शकाब्दाः १७५१ ।

**विषयः ।** काचित् कुवलयवती नाम गन्धर्व्वकन्या कान्तविरहसन्तप्ता सती पवनं दूतत्वेन प्रेषितवतीत्यमुमेव विषयमवलम्ब्य विरचितमिदं खण्डकाव्यम् ।

---

**No. 226.** पुत्रीकरणमीमांसा. By नन्दपण्डितः. Substance, country-made paper, 14×6 inches. Folia, 9. Lines, 10 on a page. Extent, 338 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahara, Valdeghāṭā, Bābu Giriçacandra Gaṅgopādhyāya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अभिनन्द्य जगद्वन्द्यपदद्वन्द्वं विनायकम् ।
पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः ॥
केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः ।
विविच्य बोध्यं यत् पूर्व्वैस्तदशेषमिहोच्यते ।
यथाहात्रिः ।
अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात् तस्मात् प्रयत्नतः ॥ इति ।
अपुत्रोऽजातपुत्रो मृतपुत्रो वा । इत्यादि ।

**End.** अविज्ञतत्वात् ग्रेथो नास्ति ।

**विषयः ।** दत्तकग्रहणविध्यादिनिरूपणम् ।

---

**No. 227.** पुरुषोत्तमक्षेत्रतत्त्वम्. By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, 17×3½ inches. Folia, 10. Lines, 6 on a page. Extent, 210 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, tolerable. Prose and Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

सच्चिदानन्दगोविन्दं नत्वा श्रीरघुनन्दनः ।
स्मृतितत्त्वे विधिं वक्ति क्षेत्रे श्रीपुरुषोत्तमे ॥
अथ पुरुषोत्तमदर्शनविधानादिः । तत्र ब्रह्मपुराणम् ।
पृथिव्यां भारतं वर्षं कर्म्मभूमिरुदाहृता ।
न खल्वन्यत्र मर्त्त्यानां भूमौ कर्म्म विधीयते ॥
...... ...... यथास्ते दक्षिणोदधितीरस्थितः ।
ओड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः ॥ इत्यादि ।

**End.** ततः सूर्य्योदयं गच्छेत् पुष्पमादाय वाग्यतः ।
प्रविश्य पूजयेद्रामं पूर्व्वोक्तं विधिः प्रदक्षिणम् ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥

**Colophon.** इति वन्द्यघटीय-श्रीहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचितं श्रीपुरुषोत्तमक्षेत्रतत्त्वं समाप्तम् ।

**विषयः ।** पुरुषोत्तमक्षेत्रकर्त्तव्यकार्य्यादिनिरूपणमुखेन दर्शनादिफलनिरूपणम् ।

---

**No. 228.** **पृषोदरादिवृत्तिः.** By **पद्मनाभः**. Substance, country-made paper, 18×3 inches. Folia, 4. Lines, 8 on a page. Extent, 192 çlokas. Character, Bengali. Date, Sk. 1715. Place of depcsit, Brāmhaṇa-maṇḍalī *viâ* Bārāsat, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य बालगोपालं पिबन्तं नवनीतकम् ।
वक्ष्ये पृषोदरादीनि पद्मनाभो यथाविधि ॥
तथाहि प्रकृतिप्रत्ययविभागेन साधुशब्दा व्युत्पन्नाः केचिद्रूढाः केचित् यौगिकाः केचिन्मिश्रा । प्रकृतिप्रत्ययविभागार्थो योगार्थः । तदुपकारित्वेन व्युत्पन्ना यौगिकाः । उभयार्थवाचकत्वेन व्युत्पन्नाव्युत्पन्ना मिश्राः । तथाचोक्तं रूढियौगिकमिश्राख्यास्त्रिधा शब्दाः प्रयोजिताः । इत्यादि ।

**End.** निपातिता यथा मयूतिः श्रोमयुगे इत्यादि । गणपाठे सिद्धरूपा यथा कल्कादिषु चेत्यादि । साध्यरूपा यथा शकारेरन्धादौ इत्यादि । विस्तरेणालमित्ययं संक्षेपः । तथाच वर्द्धमानः ।
तत्त्वं शब्दसमुद्रस्य कृत्स्नं जानाति शङ्करः ।
तदर्द्धं गौष्पतिर्वेत्ति तदर्द्धं पाणिनिर्मुनिः ॥
तदर्द्धं भाष्यकारोऽपि तत् किं जानन्ति मानवाः ।
श्रीरामः श्रीपद्मनाभेन स्तूयते चरणद्युतिः ।
संख्यार्थाः प्रतिपाद्या वा पुरुषस्य पुरुषाः ।
चण्डाख्यचण्डा चक्रोर्याचो यच स्थे स्थे ॥
तं विदूषं (?) सदा वन्दे विक्रमो यच भूपतिः ।
कालिदासादयश्च संख्यावन्तः सदसः ॥

तेषामेको वररुचिः सर्व्वशास्त्रविशारदः ।
तत्सुतो न्यासदत्तश्च फक्किभाष्यार्थतत्त्ववित् ॥
तत्सुतो दुर्घटो ज्ञेयः पाणिनीयार्थतत्त्ववित् ।
जयादित्यस्तत्सुतश्च मीमांसाशास्त्रपारगः ॥
श्रीपतिस्तत्सुतश्चैव सांख्यशास्त्रविशारदः ।
गणेश्वरस्तत्सुतश्च काव्यालङ्कारकारकः ॥
तत्सुतः पद्मनाभोऽहं मयैवैतन्निगद्यते ।
यद्यपि न्यूनता स्यान्मे इह क्षुद्रधियो बलात् ॥
सद्भिः क्षमिष्यते लोके क्षमासारा हि पण्डिताः ।
अयुक्तं यदिह प्रोक्तं सन्तः संशोधयन्तु तत् ॥
आशयाभिज्ञता तेषामित्यस्माकं निवेदनम् ।
शाके शैलनवादित्ये चैत्रे मासि रवेः स्थितौ ॥
द्विजेन पद्मनाभेन भाषाद्भुतमिदं कृतम् ।

**Colophon.** इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे उणादिवृत्तौ पृषोदरादिवृत्ति-विच्छेदः ॥ समाप्तश्चायं ग्रन्थः ॥ शकाब्दाः १०१५ ।

**विषयः ।** सुपद्मव्याकरणीयपृषोदरादिपादोऽयम् । अत्र च रूढियौगिकादिनिरूपणमुखेन पृषोदरादिनिरूपणम् ।

---

**No. 229.** प्रत्यक्षचिन्तामणिदीधितिव्याख्या. By गदाधरभट्टाचार्य्यः. Substance, country-made paper, 19 × 3 inches. Folia, 39. Lines, 7 on a page. Extent, 1,292 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurā, Paṇḍita Vrajanātha Vidyāratna. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा नन्दतनूजसुन्दरपदं व्याख्यां गुरोरादरा-
दुर्व्वीमण्डलमण्डनायितयशस्तत्कीर्त्तिर्विदिक्षावितां ।
संक्षिप्तोत्थितिदृप्तदीधितिकृतः प्रत्यक्षचिन्तामणे-
र्व्याख्यां व्याकुरुते गदाधरबुधो मोदाय विद्यावतां ॥
गुरुकीर्त्तनरूपमङ्गलं कुर्व्वाण एव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तत्कार्यं दर्शयति गिरमिति । हृदये मनसि । निधानं सम्यग्सम्पादनं । मनसि गुरुगिरः

सम्बन्धस्य सार्थज्ञानजननीये तत्प्रकारित्वं। स्वप्रकारित्वञ्च परम्परया फलोपयोगित्वं। तथाच गुरुवाक्याधीनशाब्दबोधजन्यसंस्कारसध्रीचा मनसा निबन्धयितव्यमितरापरिशीलितमर्थं निश्चित्येति फलितार्थः। सिद्धान्तविषय एवार्थो निबन्धनीय इति सूचयति विचार्येति। सिद्धान्तः सूत्रकृता महर्षिणा तदुपजीविपूर्व्वपूर्व्वनिबन्धकारपरम्परया चाभ्युपगतोऽर्थनिकरः, स एव चरः, तद्वगाहनस्य कुतर्कशतावतारोच्छिन्नचेतः सम्बन्धापसत्तोपशान्तिसाधनत्वात्। इत्यादि।

End. ज्ञानमतीन्द्रियमित्याद्यनुमितिरन्यथाख्यातिमनङ्गीकुर्व्वाणेन गुरुणानङ्गीकारात् तत्रानुप्राणस्य मतद्वयविरुद्धमिश्रया भट्टमते अधिकरणप्रकारतया जनक-प्रामाण्यग्रहणात् तन्मते बाध इत्यादिकमसङ्गतवीजम्।

Colophon. इति प्रथमविप्रतिपत्तिः॥

विषयः। तत्त्वचिन्तामण्यन्तर्गतप्रत्यक्षखण्डीयप्रामाण्यवाददीधितेः प्रथमविप्रतिपत्त्यन्तं व्याख्यानम्॥

---

No. 230. प्रत्यक्षदीधितिप्रसारणी. By कृष्णदाससार्व्वभौमः. Substance, country-made paper, 12 × 2½ inches. Folia, 85 (without 1–71). Lines, 7 on a page. Extent, 48[illegible] çlokas. Character, Bengali. Date, Sk. 1576. Place of deposit, Bhāṭpāḍā, 24-Parganās, Paṇḍita Pañcānana Tarkaratna. Appearance, old. Prose. Correct.

Beginning. (अस्य प्रारम्भवाक्यं नास्ति तेन द्वितीयप्रतिप्रतिपत्तिप्रारम्भवाक्यं लिखितं।) एत-त्प्रकारिका या इच्छाविषयता तद्वत्त्वादित्यर्थः। इत्यादि।

End. चात्मसंसर्गाग्रहसहितानाचार्य्यज्ञानात्तत्रेऽपि फलप्रसङ्गः। तथाचार्य्यत्वं नैकं इति वाच्यं फलविशेषजनकतावच्छेदक इति विशेषस्य मानसत्वाभ्युपगमात् एवमनाचार्य्यादावपीति॥

Colophon. इति महामहोपाध्याय-श्रीकृष्णदाससार्व्वभौमभट्टाचार्य्यविनिर्म्मिता प्रत्यक्ष-दीधितिप्रसारणी सम्पूर्णा॥०॥ शकाब्दाः १५७६।

विषयः। तत्त्वचिन्तामण्यन्तर्गतप्रत्यक्षखण्डस्य रघुनाथशिरोमणिकृताया दीधितेः व्याख्या।

---

**No. 231.** प्रबोधचन्द्रोदयटीका. By महेश्वरन्यायालङ्कारः. Substance, country-made paper, 12 × 2⅛ inches. Folia, 58. Lines, 6 on a page. Extent, 1,044 çlokas. Character, Bengali. Date, Sk. 1690. Place of deposit, District Mayamanasiṁha, Serapura, Mādhavapura, Paṇḍita Gaṅgādhara Tarkasiddhānta. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

मातुश्चदुग्धलवम्बे बद्धनिर्बन्धे सपेहस्य ।
त्रिभुवनभारसहिष्णोर्बालकविष्णोः स्मितं जयति ।
प्रबोधचन्द्रोदयनाम नाटकं ज्ञानाग्निसंशुद्धविशिष्टचात्मकं ।
× × × आचार्य्य-महेश्वरः कृती टीकां प्रयत्नेन करोति निर्म्मलां ।
सूत्रधारः पठेन्नान्दीं मध्यमस्वरसंयुतामिति नाटकनियमात् । इत्यादि ।

**End.** तानहमित्यादि गीताश्लोकः तानहरावमान् क्रूरान् मां द्विषतः आसुरीष्वेव योनिषु आजस्रं नित्यं क्षिप।मीत्यर्थः ॥ * ॥

**Colophon.** इति महेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां प्रबोधचन्द्रटीकायां षष्ठाङ्कविवरणं समाप्तमिति ॥ शकाब्दाः १६९० ।

**विषयः ।** प्रबोधचन्द्रोदयनामकस्य नाटकस्य वेदान्तमतानुयायिनी टीका ।

---

**No. 232.** प्रमेयरत्नावली. Substance, country-made paper, 17 × 3 inches. Folia, 18. Lines, 3 on a page. Extent, 189 çlokas. Character, Bengali. Date, Sk. 1748. Place of deposit, Vā̃kuḍā Viṣṇupura, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीरामो जयति ।

जयति श्रीगोविन्दो गोपीनां समदनगोपालः ।
वक्ष्यामि यस्य कृपया प्रमेयरत्नावलीं सूक्ष्मां ॥
अनन्याभासेनापि तोषं दधाने धर्म्माध्यक्षे विश्वनिस्तारिनाम्नि ।
नित्यानन्दाद्वैतचैतन्यरूपे तत्त्वे तस्मिन्नित्यमास्तां रतिर्नः ॥
आनन्दतीर्थनामा सुखमयधामा यतिर्ज्जीयात् ।
संसारार्णवतरणिं यमिह जनाः कीर्त्तयन्ति बुधाः ॥
भवति विचिन्त्या विदुषां निरवकारा (?) गुरुपरम्परा नित्यं ।
एकान्तित्वं सिद्ध्यति ययोदयति येन हरितोषः ॥

यदुक्तं पद्मपुराणे ।

सम्प्रदायविहीना ये मन्त्रास्ते विफला मताः ।
अतः कलौ भविष्यन्ति चत्वारः सम्प्रदायिनः ॥
श्रीब्रह्मरुद्रसनका वैष्णवाः क्षितिपावनाः ।
चत्वारस्ते कलौ भाव्या ह्युत्कले पुरुषोत्तमाद्दिति ॥
रामानुजं श्रीः स्वीचक्रे मध्वाचार्य्यं चतुर्मुखः ।
श्रीविष्णुस्वामिनं रुद्रो निम्बादित्यं चतुस्सनः (?) ॥

गुरुपरम्परा यथा,—

श्रीकृष्णब्रह्मदेवर्षिबादरायणसंज्ञकान् ।
श्रीमध्व-श्रीपद्मनाभ-श्रीमन्नृहरि-माधवान् ॥
अक्षोभ्य-जयतीर्थ-श्रीज्ञानसिन्धु-दयानिधीन् ।
श्रीविद्यानिधि-राजेन्द्र-जयधर्म्मान् क्रमात् द्वयम् ॥
पुरुषोत्तमब्रह्मण्यव्यासतीर्थांश्च संस्तुमः ।
ततो लक्ष्मीपतिं श्रीमन्माधवेन्द्रञ्च भक्तितः ॥
तच्छिष्यान् श्रीश्वराद्वैतनित्यानन्दजगद्गुरून् ।
देवमीश्वरशिष्यं श्रीचैतन्यञ्च भजामहे ॥
श्रीकृष्णप्रेमदानेन येन निस्तारितं जगत् ।

अथ प्रमेयाण्युद्दिश्यन्ते ।

श्रीमध्वः प्राह विष्णुं परतममखिलाम्नायवेद्यञ्च विश्वं
सत्यं भेदञ्च जीवान् हरिचरणजुषस्तारतम्यञ्च तेषाम् ।
मोक्षं विष्णङ्घ्रिलाभं तदमलभजनं तस्य हेतुं प्रमाणं
प्रत्यक्षादित्रयञ्चेत्युपदिशति हरिः कृष्णचैतन्यचन्द्रः ॥ इत्यादि ।

End. एवमुक्तं प्राचा ।

श्रीमन्मध्वमते हरिः परतमः सत्यं जगत् तत्त्वतो
भेदो जीवगणा हरेरनुचरवानीचो भावं गताः (?) ।
मुक्तिर्निज (?) सुखानुभूतिरमला भक्तिश्च तत्साधनं ।
अक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥
आनन्दतीर्थै रचितानि यस्यां प्रमेयरत्नानि नवैव सन्ति ।
प्रमेयरत्नावलिरादरेण प्रधीभिरेषा हृदये निधेया ॥
नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥

**Colophon.** इति प्रमेयरत्नावली पूर्णिमगात् ॥ * ॥ श्रीरामः शरणं । शकाब्दाः १७४८ ।

**विषयः।** वैष्णवग्रन्थोऽयं । अत्र च प्रथमप्रमेये भगवन्माहात्म्यादिनिरूपणम् । २ ये प्रपञ्चसत्यत्वादिनिरूपणम् । ३ ये विश्वसत्यत्वादिनिरूपणम् । ४ र्थे भेदसत्यत्वादिनिरूपणम् । ५ मे जीवानां हरिदासत्वादिनिरूपणम् । ६ ष्ठे जीवतारतम्यनिरूपणम् । ७ मे कृष्णोपासनाया मुक्तिहेतुत्वनिरूपणम् । ८ मे एकान्तभक्तेर्मोक्षसाधनत्वादिनिरूपणम् । ९ मे प्रत्यक्षानुमानशाब्दानां प्रमाणत्वेननिरूपणञ्चेति ।

---

**No. 233.** प्रश्नचूड़ामणिः. By वराहमिश्रः. Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 6. Lines, 5 on a page. Extent, 86 çlokas. Character, Bengali. Date, Sk. 1686. Place of deposit, Mayamanasimha, Serapura, Paṇḍita Candrakānta Tarkālaṇkāra. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ प्रश्नचूड़ामणिर्लिख्यते ।
पादमादौ पदं मध्ये अन्ते यस्य पदं भवेत् ।
एतेनापि शुभं कार्य्यं सर्व्वसिद्धिप्रदं यशः ॥ इत्यादि ।

**End.** आदावन्ते चतुर्द्दष्टा मध्ये यस्य चतुष्टयम् ।
सम्पत्तिस्तस्य विद्या च मनः सम्पूर्णमेव च ॥

**Colophon.** इति श्रीवराहमिश्रकृतः प्रश्नः समाप्तः । शकाब्दाः १६८६ ।

**विषयः।** प्रश्नगणनोपायनिरूपणम् ॥

---

**No. 234.** प्रश्नदीपः. (लौहित्यवत्सेनविरचितप्रश्नदीपप्रकाशिन्याख्यटीकासहितः). Substance, country-made paper, $19 \times 3\frac{1}{2}$ inches. Folia, 16. Lines, 6 on a page. Extent, 458 çlokas. Character, Bengali. Date, ? Place of deposit, Purāpāḍā, Post Office Sonārā̃, District Ḍhākā, Paṇḍita Jagadbandhu Tarkavāgīça. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । ॐ नमः श्रीसूर्य्याय ।
सन्ति चेद्बहुशास्त्राणि प्रश्नज्ञानविधावपि ।
तथापि सारमेकत्र कर्त्तुमत्र ममोद्यमः ॥
आचार्य्याभिमतं यावद्वृत्तं मे ज्ञातदीपके ।
तथाप्यहद्दत्तार्थं प्रश्नदीप इहोच्यते ॥

इदमत्यन्तगूढार्थं वज्रप्रश्नं समासतः ।
मामकं पुस्तकं ये के सतां प्रीतिं करिष्यति ॥

इष्टकालो यथा ।

भागं वारिधिवारिराशिशशिषु (१४४) प्राङ्गर्कमासे बुधाः
षट्के बाणशपीठयोनिनिधिषु (१२५) स्यात् कर्कटाद्ये रवौ ।
पादैः सप्तभिरन्वितैः प्रथमकं त्यक्त्वादिमाद्ये दले
त्वेकैकां घटिकां परे च सततं दत्त्वेष्टकालं वदेत् ॥ इत्यादि ।

टीकायाः प्रारम्भवचनम् । माघादिषण्मासेषु चतुश्चत्वारिंशदधिकशताङ्केषु श्रावणादिषण्मासेषु पञ्चविंशदधिकशताङ्केषु भागं हरणं पण्डिताः प्राज्ञाः कैः प्रथमकं पादं त्यक्त्वा पादैः सप्तभिरन्वितैः । एतदुक्तं भवति छायापादे एकं त्यक्त्वा सप्तान्वितं कृत्वा पूर्वार्द्धे दले यो लब्धः स इष्टः । शेषं षष्ठ्या संगुणितेनैव हारेण दले परं ज्ञेयम् । पूर्वार्द्धपरार्द्धयोर्भेदमाह । दिनाद्ये एकां घटिकां त्यक्त्वा इष्टकालं परदले एकां घटिकां दत्त्वा इष्टकालं वदे-दिति । इत्यादि ।

**End.** रोगजन्मतो मृत्युज्ञानं यथा ।

शिवशतभिषधातायाम्यसर्पाग्निपूर्वा
रविरविजकुजाह्ने भूतषष्ठीनवम्याम् ।
इह हि मरणयोगो यो ज्वरेणाभिभूतः
पशुपतिसमवीर्य्यः सोऽपि मृत्युं प्रयाति ॥
आर्द्राश्लेषा-स्वाती ज्येष्ठासु च यस्य रोगजन्म स्यात् ।
धन्वन्तरिणापि चिकित्सितस्य तस्यासवो न स्युः ॥
यत्र चन्द्रमास्तस्य गोचरे चाशुभग्रहः ।
तदा तस्य भवेन्मृत्युः सुधासंसिक्तदेहिनः ॥

**Colophon.** इति प्रश्नदीपे रोगज्ञानं नामैकादशोऽध्यायः ॥ (खण्डितशेषोऽयं ग्रन्थः) ।

टीकायाः शेषवाक्यम् । रविवारे चतुर्दश्यां शनिवारे षष्ठ्यां कुजवारे नवम्यां यदि आर्द्राश्लेषा-शतभिषा-रोहिणी-भरणी पूर्वात्रयमश्लेषानक्षत्राणि भवन्ति तदावश्यं रोगी म्रियते । अस्मिन् योगे सा चेद् यदि चन्द्रस्य गोचरमशुभं स्यात् तदा मरणम् । .

**Colophon.** इति ज्यौतिषाचार्येणविरचितायां प्रश्नदीपप्रकाशिन्यां रोगज्ञाननैकादशो-ऽध्यायः ॥

विषयः । अथ प्रथमं छायापादभेदकथनम् । अथाधानं तथादौ प्रश्नाकथनम् । रोगव्याध-
प्रश्नाकथनम् । अथापत्यजननप्रश्ना । तत्र गर्भमासप्रश्नाकथनम् । गर्भचेतनप्रश्नाकथनम् । सुत-
सुताजननप्रश्नाकथनम् । यमजापत्यकथनम् । जारजयोगकथनम् । अथ प्रसवदिवारात्रिप्रश्ना,
तत्र प्रसवस्थानकथनम् । अथ लग्नादिभावे वस्तुनिरूपणमाह । तत्र लग्नादेरुपचयस्थान-
प्रकारकथनम् । मतान्तरेण भावोत्थकार्य्यसिद्ध्यसिद्धिकथनम् । लग्नाधिपादेर्विंशत्फलकथनम् ।
विंशत्यादिफलकथनम् । अथ भावफलादिनिर्णयः । तत्र लाभालाभज्ञाननिरूपणम् । निधि-
लाभप्रश्नाकथनम् । वेतनलाभप्रश्नाकथनम् । राज्यपदप्राप्तिप्रश्नाकथनम् । अथ राजयोग-
चतुष्टयनिरूपणम् । विभवलाभप्रश्नाकथनम् । धनलाभप्रश्नाकथनम् । कुमारीलाभप्रश्नाकथ-
नम् । अथ विषकन्याज्ञानम् । वरलाभप्रश्नाकथनम् । विवाहलाभप्रश्नाकथनम् । अथ द्यूतादि-
क्रीडाज्ञानम् । जायापरिज्ञानम् । शुभाशुभज्ञानम् । अथ कार्य्यसिद्ध्यसिद्धिप्रश्नाकथनम् । तत्र
सर्व्वकार्य्यशुभाशुभप्रश्नाकथनम् । अथ दिननिर्णयः । तत्र विवाहशुभाशुभप्रश्नाकथनम् ।
दिनशुभाशुभज्ञाननिरूपणम् । अथ सेव्यसेवकयोः शुभाशुभज्ञानकथनम् । गमनागमनज्ञान
कथनम् । गमनस्थितिज्ञानकथनम् । यात्राप्रश्नात् जयज्ञानकथनम् । यात्रायां शुभाशुभज्ञान-
कथनम् । यातुर्निवृत्तिदिनज्ञानकथनम् । प्रोषितागमनतच्छुभाशुभज्ञानकथनम् । प्रोषिता-
गमनदिनज्ञानकथनम् । जयपराजयज्ञानकथनम् । जयपराजयचक्रनिरूपणम् । अथ हृत-
नष्टमुष्टिगतादिज्ञाननिरूपणम् । वस्त्राः प्राक्स्थितिकालज्ञाननिरूपणम् । चौरज्ञाननिरूपणम् ।
वयोज्ञाननिरूपणम् । जातिज्ञाननिरूपणम् । स्त्री-पुं-नपुंसकभेदज्ञाननिरूपणम् । हृतनष्ट-
लाभालाभज्ञाननिरूपणम् । क्रयविक्रयसन्धानज्ञाननिरूपणम् । मनोहृत-स्त्री-पुरुषज्ञाननिरू-
पणम् । अथ वृष्टिज्ञाननिरूपणम् । अथ नष्टकोष्ठ्युद्धारनिरूपणम् । अनन्तरं रोगज्ञाननिरू-
पणञ्चेति ॥

---

No. 235. प्रश्नप्रकाशिनी . By कौण्डिन्यवरसेनः . Substance, country-made paper, 12 × 2½ inches. Folia, 65. Lines, 5 on a page. Extent, 1,117 çlokas. Character, Bengali. Date, Sk. 1,664. Place of deposit, Mayamanasimha, Serapura, Mahāmahopādhyāya, Candrakānta Tarkālaṅkāra. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ श्रीसूर्य्याय नमः ।

श्रियमभिलषतानां सिद्धिदं सम्यगाध्ये
सुरमनुजनसेव्यं देवदेवं प्रणम्य ।

सुज्ञानचक्रसारप्रश्नप्रदीपस्य टीकां
खजननिजकृताथं करोमेव प्रयत्नः ॥
सन्ति येद्वृडशास्त्राणि प्रश्नज्ञानविधावपि ।
तथापि सारमेकत्र कर्त्तुमेव ममोद्यमः ॥
आधानाग्निधनं यावत् यथोक्तं जातदीपके ।
तथाद्दहस्य दृष्टार्थं प्रश्नदीप इहोच्यते ॥
मम जातदीपके साधनाग्निधनपर्य्यन्तं यथाकथितं तेनैव प्रकारेण इह प्रश्नदीपके अद्दहस्य पुराकृतकर्म्मणो दर्शनार्थं कथ्यते इति । इहकालज्ञानमाह ।
भागं वारिधिवारिराशिमथिषु प्राकृवंगाद्यैर्बुधाः ।
षट्के चापरूपीठयोनिविषुषु स्यात् कर्कटाद्यैः पुनः ॥ इत्यादि ।

End. अथ योगे तस्य रोगिणो गोचरे चन्द्रमा अशुभप्रदः स्यात् । गोचरशुद्धो न भवति तदाब्दतत्स्थितेऽप्यपि नरस्य मृत्युः स्यात् ॥

Colophon. इति श्रीलौहित्यवरसेनविरचितायां प्रश्नप्रकाशिन्यां रोगज्ञानं नाम द्वादशोऽध्यायः ॥ * ॥ शकाब्दाः १६६४ ।

विषयः । प्रश्नप्रदीपनामकस्य ज्योतिषग्रन्थस्य टीकेयं । अत्र च आधानादिनिरूपणम् । भावविचारादिनिरूपणम् । लाभालाभादिनिरूपणम् । राजयोगचतुष्टयादिनिरूपणम् । गमनागमननिरूपणम् । प्रवासीनामागमनादिनिरूपणम् । सन्धिविग्रहजयपराजयदुर्गचिन्तादिज्ञाननिरूपणम् । भूतनष्टमुष्टिगतधातुमूलजीवानां ज्ञानादिनिरूपणम् । अथ विमिश्रकाध्यायः । अनन्तरं नष्टजातकरोगादिनिरूपणमेति ।

---

**No. 236.** प्रस्तावसारः. By लौहित्यवरसेनः. Substance, country-made paper, 12 × 4 inches. Folia, 21. Lines, 7 on a page. Extent, 367 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstri. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
जनतुचि जितनीरजेन्द्रवेगे
कृतनिविडासनसुज्झितागपीठे ।
अरशमनतडित्कडारहष्टिं
बड़गुडुराडुपशोभितचूड़नीडे ॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रति र्लोकप्रवादाद्भयं ।
........ भक्तिरात्मदमने संसर्गमुक्तिः खला-
द्देते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥
सुभाषितानि रत्नानि यो न गृह्णाति यत्नतः ।
स वै प्रस्तावयज्ञेषु दक्षिणां कां प्रदास्यति ॥
सुतेदं पितरं प्राह श्रीमच्छ्रीकान्तसेनकः ।
लिखिलैकत्र तत्सर्व्वं प्रस्तावोचितभाषणम् ॥
तदा तन्तात् समाहृत्य हितबुद्धिप्रदः सदा ।
नाम्ना प्रस्तावसारोऽयं तत्पित्रालेखि यत्नतः ॥ इत्यादि ।

End (खण्डितत्वात् शेषो नास्ति तेन एकविंशतिपत्रस्य समाप्तिवाक्यं लिखितम् । )

शङ्कप्रसङ्गो यथा ।
ध्वनिरपि मधुरः सुषिरमुच्चै-
र्जनिरपि शङ्ख महौ तवाभूत् ।
अधिगतमखिलं तवैव सर्व्वं
कुटिलतरं भवदन्तरं न विद्मः ॥

विषयः । पुत्र भार्य्या-राज-मन्त्रि-खल-मूर्खादिप्रसङ्गमुखेन मनोरञ्जकश्लोकानां सङ्ग्रहः ।

---

**No. 237.** प्रायश्चित्तकदम्बसारसंग्रहः. By काशीनाथतर्कालङ्कारः. Substance, country-made paper, 17½ × 4 inches. Folia, 11. Lines, 9 on a page. Extent, 427 çlokas. Character, Bengali. Date, Sk. 1737. Place of deposit, Naḍiyāgrāma, Post Office, Lonsing, District, Pharidapura, Paṇḍita Çaçibhūṣaṇa Smṛtiratna. Appearance, tolerable. Prose and Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य शिरसा शम्भुं श्रीकाशीनाथशर्म्मणा ।
प्रायश्चित्तकदम्बानां क्रियते सारसंग्रहः ॥
बृहत्कुष्ठरोगसंसूचितातिपातकशेषपापक्षयकामेन पराकव्रतद्वयाद्यशक्तौ यत्किञ्चिद्विषयकैकविंशत्कार्षापणीदानरूपं प्रायश्चित्तं करणीयमिति विद्वांसम् । धर्म्मारोगे पराकव्रतद्वयमेव । एतद्रोगोत्पत्त्यनन्तरं प्रायश्चित्ताभावे

तदुत्पन्नानां पुरुषाणामेतद्व्रतस्य तृतीयभागप्रायश्चित्तम् । अकृतप्रायश्चित्त-
कुष्ठादिरोगयुक्तोत्पन्ना दुहितरस्तु अशुचिशुक्रोत्पन्नकर्त्तव्यं तृतीयभागप्राय-
श्चित्ततृतीयभागं कुर्य्युरिति । तत्र प्रमाणम् ।
अशुचिशुक्रोत्पन्नानां तेषाञ्च शुद्धिमिच्छताम् ।
पतितानां तृतीयांशः स्त्रीणामंशात् तृतीयकः ॥
इति बौधायनवचनम् । तेन पतितोत्पन्नानां शुद्धिमिच्छतां पतितानां प्राय-
श्चित्तस्य तृतीयभागस्तत्प्रायश्चित्तं ज्ञेयम् । स्त्री च पतितोत्पन्ना तृतीयभागस्य
तृतीयभागं कुर्य्यादिति प्रायश्चित्तविवेकलिखनञ्च । अकृतप्रायश्चित्तार्शोरोग-
युक्तोत्पन्नेन पुत्रेण तत्पापक्षयाय पराकव्रतद्वय ...... भागाद्यशक्तौ यत्किञ्चि-
द्दक्षिणकं दशकार्षापणीदानरूपं प्रायश्चित्तं कर्त्तव्यम् ॥ इत्यादि ॥

**End.** अनुलोमजातानां वर्णसङ्कराणामपि ज्ञानतो वधे तप्तकृच्छ्रद्वयं तदशक्तौ
अष्टौ धेनवः तदशक्तौ सार्द्धद्वाविंशतिकार्षापणी चान्द्रायणञ्च यथाशक्ति
दक्षिणा । प्रतिलोमजातानां कैवर्त्तादीनां ज्ञानतो वधे चान्द्रायणं तदशक्तौ
अष्टौ धेनवः तदशक्तौ सार्द्धद्वाविंशतिकार्षापणी चान्द्रायणञ्च । ज्ञानतो
ब्राह्मणीवधे षड्वार्षिकव्रतम् । तदशक्तौ नवतिधेनवो देयाः तदशक्तौ
सप्तत्यधिकद्विशतकार्षापणी चान्द्रायणञ्च दक्षिणा च पञ्चाशद्गावः तदशक्तौ
पञ्चाशत् कार्षापणी । ऋतुस्नातायास्तु शूद्रायास्तादृशक्षत्रियवैश्याम्बष्ठानाञ्च
कामतो वधे वार्षिकं व्रतं तदशक्तौ पञ्चदश धेनवो देयाः तदशक्तौ पञ्च-
चत्वारिंशत् कार्षापणी चान्द्रायणञ्च । मध्यमायाः कामतो नवमासिकव्रतं
तदशक्तौ सपादैकादश धेनवः तदशक्तौ द्वादशाधिकत्रयस्त्रिंशत्कार्षापणी
चान्द्रायणञ्च । अधमायास्तु तप्तकृच्छ्रद्वयं तदशक्तौ सार्द्धद्वाविंशतिकार्षा-
पणी चान्द्रायणञ्च यथाशक्ति दक्षिणा । एषा व्यवस्था मदनपारिजात-
सम्मता ॥ नव्यद्वैतनिर्णयस्थचन्द्रशेखरवाचस्पतिसम्मता तु चान्द्रायणद्वयं तद-
शक्तौ पञ्चचत्वारिंशत् कार्षापणी यथाशक्ति दक्षिणा च ॥

**Colophon.** इति श्रीकाशीनाथतर्कालङ्कारकृतः प्रायश्चित्तकदम्बसारसंग्रहः समाप्तः ॥
दुर्गा । ॐ सरस्वत्यै नमः ।
श्रीमदनचन्द्रद्विजेन लिखिता पुस्तिरेषा ।
विप्रामोदकरीनाम्नी प्रायश्चित्तकदम्बिका ॥
मार्गशीर्षस्य मासस्य दिवसे दशपञ्चके ।
रविवारे चापराह्णे संपूर्णा लिखनात्त्वियम् ॥ शक १० । १७ । १५ ॥

विषयः । सर्व्वप्रकारपातकानां प्रायश्चित्तव्यवस्था । तत्र प्रथमं कुष्ठ-शूल-यक्ष्म-क्षय-वृषत्-श्वासाश्मिनासार्शोदुस्वप्रभृतिरोगयुक्तानां प्रायश्चित्तव्यवस्था । पूर्व्वोक्तरोगयुक्तानामौरसानाञ्च प्रायश्चित्तव्यवस्था । उपपातकानुपातकमहापातकातिपातक प्रकीर्णपाप-रोगसङ्कर-ज्ञानाज्ञानकृतब्रह्महत्यादिपापप्रायश्चित्तव्यवस्था । ब्राह्मण-क्षत्रिय-वैश्य शूद्रस्वामिकगोवधस्य ब्राह्मण-क्षत्रिय-वैश्य-शूद्रभेदेन प्रायश्चित्तव्यवस्था । विप्रादिस्वामिकपालनापालनकृतगोवधप्रायश्चित्तव्यवस्था । संग्टहीतानि चात्र नारायणवन्द्योपाध्याय-शूलपाणि-स्मार्त्तभट्टाचार्य्य-भवदेवभट्टानां मतानि ॥

---

**No. 238.** प्रायश्चित्ततत्त्वटीका. By काशीनाथतर्कालङ्कारः. Substance, country-made paper, $17\frac{1}{2} \times 4$ inches. Folia, 19. Lines, 12 on a page. Extent, 1,368 çlokas. Character, Bengali. Date, ? Place of deposit, Nadiyāgrāma, Post Office, Lonsing, District, Pharidapura, Paṇḍita Çaçibhūṣaṇa Smṛtiratna. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** प्रणम्य पार्व्वतीनाथौ श्रीकाशीनाथशर्म्मणा ।
प्रायश्चित्तस्य तत्त्वानां बोधिनी क्रियते तियम् ॥
प्रणम्येति । ब्रह्मस्वरूपं ब्रह्मविष्णुशिवनमस्कारात्मकं मङ्गलमाचरन् श्रीरघुनन्दन उद्दिशति प्रायश्चित्तस्य तत्त्वानीति । ननु ग्रन्थस्य नामकथनमुद्देशः तस्य नामत्वाभावात् कथमुद्देश्यत्वमिति चेन्न चिरण्यपूर्व्वं कशिपुं प्रचक्षते इतिवत् तस्यवाक्यस्य नामत्वात् । ननु तत्त्वानीत्यस्य ग्रन्थपरत्वं कुत इति चेत् प्रायश्चित्तस्य तत्त्वानीति पदे लक्षणया व्युत्पत्त्या वा प्रायश्चित्ततत्त्वमिति नाम बोद्धव्यं प्रायश्चित्तबोधकवचनानां तत्त्वनिरूपणार्थत्वात् प्रायश्चित्ततत्त्वमिति ग्रन्थस्य नाम इति ग्रन्थकृतोऽभिप्रायः । प्रायश्चित्तस्य तत्त्वानि प्रायश्चित्तबोधकवचनानां तत्त्वानि यथार्थानि प्रमाविषयीभूतानीति यावत अन्येषां ग्रन्थकृतां वचनार्थभ्रमोऽस्ति मत्कृतग्रन्थे कोऽपि भ्रमो नास्ति इति तात्पर्य्यम् । एवं लाक्षणिकार्थकशब्दो नाम यथान्तरे पृथिव्यादीनां गोत्वादिवत् । सामान्य ...... प्रतिज्ञामात्र प्रायश्चित्तस्य वक्ष्याम इत्यादि । प्रायश्चित्तस्य लक्षणं अत्र ग्रन्थे वक्तव्यमिति शेषः । तथा तन्त्रप्रणङ्को वक्ष्यौ तथा शब्दार्थः कर्त्तृसंस्कारकाङ्गानां स्नानाचमनादीनां प्रतिकर्म्म निवर्त्तनं न प्रत्येककर्म्मणि करणम् । गोग्रासभक्षणात् शुद्धिरिति गोग्रासभक्षणं नवित्यितं प्रायश्चित्तकर्म्मणि तु शुद्धिः ॥ इत्यादि ॥

**End.** गङ्गायां ज्ञानतो मृत्वा इति मरणात् पूर्व्वं गङ्गाज्ञाने स्नाते मुक्तिः तद्ज्ञाने ब्रह्मलोकगमनमिति एतद्विषय एव गङ्गायां त्यजतः प्राणान् इत्यादि ...

...... युगादौ च इति मन्वाद्याविति वचनात् निमित्तत्वेन मन्वादौ इत्येव उक्तम् मन्वन्तरादयस्त्वेता इत्यत्राक्षयकारिका इति वचनात् दाने मन्वादौ इत्येव उक्तम्। तान्त्रिके कर्म्मणि मन्वन्तराद्यामिति वचनात् मन्वन्तराद्यामित्येव उक्तमिति केचित्। वस्तुतस्तु मता मन्वन्तरादयः स्मृतिरित्यनेन मन्वन्तरादिसंज्ञाया एव विधेयत्वात् मन्वन्तरादौ इति सर्व्वत्र उक्तम्।

ब्रह्मपुराणे।

कलौ तु सर्व्वतीर्थानि स्वं स्वं वीर्य्यं स्वभावतः।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित्॥

भविष्ये।

कृते तु सर्व्वतीर्थानि त्रेतायां पुष्करं ......।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते॥

चरणोदकं चरणाङ्गाभिपर्य्यन्तमिति तु मैथिलाः ............ परं ब्रह्मेति मनुष्याणां अमयेदित्यर्थः। पदं स्वरूपं शिवरूपमिति यावत्। प्रसङ्गेनेति प्रकर्षेण गतः सङ्गः कामो यस्य तेन मुमुक्षुणा इत्यर्थः इति केचित्। वस्तुतस्तु प्रसङ्गेन उद्देश्यान्तरप्रसङ्गेन कृताद् गङ्गास्नानान्मुक्तिः फलं जायते। अन्यत् तीर्थे कृतं पापमित्यादिवचनं गङ्गाजलस्तनपापव्यतिरिक्तविषयम्। तादृशं कश्मलं दृष्ट्वा गङ्गा ...... वाप्नोति क्रियायोगसारग्रन्थलिखनानुसारात्। त्र्यहस्पृक् दिनक्षये इति दिनक्षयश्च।
एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्॥ इति वचनोक्तः।
द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षय इति॥

**Colophon.** इति श्रीकाशीनाथतर्कालङ्कारविरचित-प्रायश्चित्ततत्त्वीयगङ्गामाहात्म्यविधि-टीका समाप्ता॥

विषयः। रघुनन्दनभट्टाचार्य्यकृतस्य प्रायश्चित्ततत्त्वस्य व्याख्यानम्।

---

**No. 239.** प्रायश्चित्ततत्त्वटीका. By राधामोहनगोस्वामी. Substance, country-made paper, 17 × 3 inches. Folia, 106. Lines, 7 on a page. Extent, 2,782 çlokas. Character, Bengali. Date, Sk. 1751. Place of deposit, District Vā̃kuḍā, Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, tolerable. Prose. Incorrect.

**Beginning.** श्रीश्रीरामः ॥

नखेन्दौ श्रीराधापदयुगलविष्णुक्ष्य स्थायथ

गज्जरं श्रीनाडीनगनिकररथम प्रियसखि ।

नवीनोऽयं किं मे रचयति कुशीलेश्वितथो

मधुरास्वरा राधा जयति वसन्तोऽघ्रि मम ॥

कुरु प्रायश्चित्ततत्त्वव्याख्या गोकुलसम्मता ।

क्रियतेऽद्वैतवंशेन गोविन्दप्रतिकाव्यया ॥

प्रारिप्सितग्रन्थसमाप्तिहेतुतया मङ्गलमाचरन् शिष्यशिक्षायै तदुपनिबध्नन् तद्-वधानाय प्रतिज्ञामाचरति प्रणम्येत्यादि । अथ मङ्गलस्य समाप्तिहेतुत्वे किं मानमिति चेत् शिष्टाचारानुमितवेद एव प्रमाणं तथाहि मङ्गलं वेद-बोधितग्रन्थसमाप्तिहेतुकं प्रत्याहो शिष्टैरनुष्ठीयमानत्वात् इति वेदानुमानं वेदश्च ग्रन्थसमाप्तिकामो मङ्गलमाचरेदित्यादिरूपः । मङ्गलञ्च ईश्वर-प्रणामादि ।

**End.** तेनोपपाद इति स्वच्छ ।

एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ।

इति प्रागुक्तव्याख्यापचनसमार्थतेति । अधर्वरजस्वलाख्यं दोषाधिकस्य व्याख्यपवचने उक्तत्वात् । अतः परमित्यस्य तत्परत्वासम्भवादाह उच्छिष्ट-शूद्रादिस्पर्शे इति एतत्परत्वे हेतुमाह मद्य इति द्युपस्य चरेदिति एतच्च प्रथमद्वितीयदिन इति यत्मेत् अथ स्नानोत्तरस्पर्शे दोषाभावस्य उक्तत्वादाह स्नानात् पूर्व्वमिति चाण्डाल्यादिरजस्वलास्पर्शे तथाविधप्राक्शुद्धाः चतूराच वैगुण्यं शूद्रपाषिभिः शूद्राचाण्डाल्यादेः त्रिगुणापततस्य कथमादिति ॥ * ॥

**Colophon.** इति श्रीराधामोहनगोस्वामिभट्टाचार्य्यविरचिता प्रायश्चित्ततत्त्वव्याख्या स-माप्ता ॥ * ॥ शकाब्दाः १७५१ ।

**विषयः ।** रघुनन्दनभट्टाचार्य्यकृतस्य प्रायश्चित्ततत्त्वस्य व्याख्यानम् ।

---

**No. 240.** प्रायश्चित्तप्रकरणम् . By भवदेवभट्टः . Substance, country-made paper, 19 × 5½ inches. Folia, 47. Lines, 9 on a page. Extent, 1,985 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasimha Kāṭihāli, Paṇḍita Navakiçora Tarkacūḍāmaṇi. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

अनादिभवसम्भूतपापप्रशमकारणम् ।
स्मरणं वासुदेवस्य यस्य तस्मै नमो नमः ॥
मन्वादिस्मृतिमालोक्य सुविविच्य यथाक्रमम् ।
क्रियते भवदेवेन प्रायश्चित्तनिरूपणम् ॥

प्रायश्चित्ते निरूपणीये गुरुत्वात् महापातकप्रायश्चित्तनिरूपणपुरःसरमेव इतरप्रायश्चित्तनिरूपणे कर्त्तव्ये मन्वादिवचनक्रमानुरोधेन प्रथमं ब्रह्मवधप्रायश्चित्तमेव निरूप्यते । इत्यादि ।

**End.** तथाच हृद्धविष्णुः । अष्टौ ग्रासान् प्रतिदिवसं मासमश्नीयात् यतिचान्द्रायणो नाम । अत्र मासेकेन चत्वारिंशदधिकशतद्वयपिण्डाहारेणोपवासाभावेन च क्लेशाल्पत्वात् । अत्रापि पञ्च धेनवः । इति कृच्छ्रप्रकरणं समाप्तम् ॥

**Colophon.** इति श्रीबालवड़भीय भुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ प्रायश्चित्तप्रकरणं समाप्तम् ॥ * ॥

**विषयः ।** महापातकोपपातकादिनिरूपणमुखेन तत्तत्पापप्रायश्चित्तादिनिरूपणम् । चान्द्रायणादिव्रतनिरूपणञ्च ।

---

**No 241.** प्रायश्चित्तव्यवस्थासंग्रहः. By मोहनचन्द्रविद्यावाचस्पतिः. Substance, country-made paper, 18×4 inches. Folia, 8. Lines, 8 on a page. Extent, 288 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Vikramapura, Ichāpurā, Pandita Vrajanātha Vidyāratna. Appearance, tolerable Prose. Correct.

**Beginning.** नत्वा गुरून् समासेन प्रायश्चित्तस्य सारतः ।
द्विजमोहनचन्द्रेण व्यवस्था लिख्यते मया ॥

तत्र प्रायश्चित्तस्य लक्षणं पापक्षयमात्रफलत्वे सति विधिबोधितपापक्षयेतरासाधकत्वम् । तेन पापक्षयस्वर्गाभयसाधकगङ्गास्नानादौ नातिव्याप्तिः । न वा तस्य पापक्षयेतरस्वधर्मादिसाधकत्वमुपपन्नवः । पापक्षयेतरे विधिबोधितत्वनिवेशनात् । स्वर्गादेस्तु विधिबोधितत्वाभावात् । प्रायश्चित्तस्य नित्यत्वं नैमित्तिकत्वं काम्यत्वं [illegible] त्रयम् । इत्यादि ।

**End.** प्राजापत्यव्रते त्वेकधेनुदानाच्छुद्धिः । यतिचान्द्रायणव्रते पादोनधेनुचतुष्टय-दानात् पराकव्रते पञ्चधेनुदानात् । अन्यत् प्रायश्चित्तादिकं प्रायश्चित्ततत्त्वादावनुसन्धेयम्॥

**Colophon.** इति प्रायश्चित्तव्यवस्थासङ्क्षेपः समाप्तः ।

**विषयः ।** प्रायश्चित्तस्वरूपकथनपूर्व्वकं संक्षेपतः प्रायश्चित्तव्यवस्थादिकथनम् ।

---

**No. 242.** **प्रायश्चित्तसंग्रहः.** By **कृष्णदेवस्मार्त्तवागीशः.** Substance, country-made paper, 13 × 3 inches. Folia, 74. Lines, 7 on a page. Extent, 1,554 çlokas. Character, Bengali. Date, Sk. 1760. Place of Deposit, District Vãkuḍā, Viṣṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥ अथ प्रायश्चित्तं । तत्र प्रायश्चित्तलक्षणं पापक्षयमात्र-कामनाजन्यकृतिविषयपापक्षयसाधनं कर्म्म प्रायश्चित्तम् । पापक्षयस्वर्गोभय-कामनाजन्यकृतिविषयमश्वमेधाद्यश्वमेधादिवारणाय मात्रपदम् । अज्ञातकृत-चैत्यवन्दनादिवारणार्थमन्यं दलं तत्र पापक्षयजनकता नास्ति प्रमाणा-भावात् । यदा चान्द्रायणाश्वमेधादि स्वादृष्टकृतिविषयस्तदा प्रायश्चित्तं यदा तु स्वर्गादिफलकामनाजनकतापि तदा तेषां न प्रायश्चित्तत्वं । शरीरगत-प्रायत्वाभावे प्रायश्चित्तस्य न कारणत्वम् । इत्यादि ।

**End.** अत्र प्रायश्चित्ताश्रवणात् प्राजापत्येन चैकेन सर्व्वपापक्षयो भवेदिति धेनुदान-मिति । देवलः ।

वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्व्वते ।
त्रिरात्रं पञ्चरात्रं वा तयोः पुष्टिर्न विद्यते ॥

पुष्टिः फलं तेन काम्यस्यैव निषेधः प्रायश्चित्तात्मकं कर्त्तव्यमेव ॥ भारते ।

नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् ।
दीपहर्त्ता भवेदन्धः काणो निर्वाणको भवेत् ॥

कौर्म्मे ।

गृध्रो जन्मसहस्राणि शतजन्मानि शूकरः ।
श्वापदः सप्तजन्मानि अमायां निशि भोजनात् ॥

सकृज्जलस्य पानाच सकृत् ताम्बूलभक्षणात् ।
उपवासफलं हन्याद्दिवास्वापाच्च मैथुनात् ॥
नैवेति च पाठो वर्षकौमुद्याम् ।
आसनं वसनं शय्या जायापत्यं कमण्डलुः ।
आत्मनः शुचिरेतानि न परेषां कदाचन ॥

**Colophon.** इति श्रीयुतकृष्णदेवसार्वभौमभट्टाचार्य्यकृतः प्रायश्चित्तसंग्रहः समाप्तः ॥ श्रीशिवो जयति ॥ शकाब्दाः १७६० ॥

**विषयः ।** प्रायश्चित्तादिनिरूपणम् । तत्कर्त्तानिरूपणम् । प्रसङ्गादिनिरूपणम् । प्रायश्चित्तोपदेशादिनिरूपणम् । प्रायश्चित्तानुपपत्त्यादिनिरूपणम् । धेनुमूल्यादिव्यवस्था । गोवधादिप्रायश्चित्तनिरूपणम् । गोमांसभक्षणगोविक्रयादिप्रायश्चित्तम् । गङ्गाधानस्य प्रायश्चित्तत्वनिरूपणम् । शूद्रादिवधप्रायश्चित्तादिनिरूपणम् । अभक्ष्यभक्षणादिप्रायश्चित्तम् । अशौचान्नादिभक्षणप्रायश्चित्तञ्च ।

---

**No. 243.** प्रायश्चित्तसारः. By यादवेन्द्रविद्याभूषणः. Substance, country-made paper, 18×2 inches. Folia, 54. Lines, 6 on a page. Extent, 1,782 çlokas. Character, Bengali. Date, Sk. 1613. Place of deposit, District Văkuḍā. Viṣṇupura, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णो जयति ॥
भूयः प्रणम्य रघुनाथपदारविन्दं
मन्वादितन्त्रनिबन्धानभिवीक्ष्य यत्नैः ।
उद्धृत्य सारमखिलं निखिलस्मृतीनां
श्रीयादवेन विदधे स्मृतिसार एषः ॥
तत्रादौ प्रायश्चित्तनिरुक्तिः । तत्र मान्याः । पापक्षयमात्रसाधनं कर्म्म प्रायश्चित्तमिति । तच्चिन्त्यं चान्द्रायणादीनां पापक्षयातिरिक्तस्वर्गादीनां जनकत्वात् ...... किन्तु प्रायश्चित्तादावात्मगतपापक्षयस्य शरीरगतप्रायणस्य निवृत्तेश्च । इत्यादि ।

**End.** रजस्वलाया उच्छिष्ट-शूद्री-च-शूकरादिस्पर्शे प्रथमद्वितीयदिनयोस्त्रिरात्रोपवासः । तृतीये अहोरात्रं चतुर्थे नक्तं विना भोजने अहोरात्रोपोषितः ।

सुतैः पञ्चगव्येन शुद्ध्यति । पर्व्वणि मांस-तैल-स्त्रीसम्भोगे क्षुरकर्म्मणि चाहो-रात्रमभोजनम् । अभ्यासे तु प्राजापत्यं चान्द्रायणं वा श्राद्धदिने स्त्रीगमने अहोरात्रमभोजनम् । दिवामैथुने दिनमेकं व्रती भवेदिति ॥ ० ॥

**Colophon.** इति श्रीयादवविद्याभूषणविरचितः प्रायश्चित्तसारः सम्पूर्णः ।

शकाब्दाः १६१२ ॥

**विषयः** । अत्र प्रथमं प्रायश्चित्तनिबन्धम् । ततः प्रायश्चित्तपूर्व्वाङ्गकृत्यादिनिरूपणम् । गोवध-प्रायश्चित्तादिनिरूपणम् । क्षत्रियादिवधप्रायश्चित्तनिरूपणम् । धेनुसङ्कलनम् । चाण्डालादिस्पृष्टा-न्नादिभक्षणप्रायश्चित्तम् । अन्त्यजस्त्रीगमनादिप्रायश्चित्तम् । शूद्रान्नादिभक्षणप्रायश्चित्तम् । लशुना-नादिभक्षणप्रायश्चित्तम् । यज्ञोपवीतरहितान्नभोजनादिप्रायश्चित्तम् । ब्राह्मणाद्युच्छिष्टभोजनप्राय-श्चित्तम् । महापातकादिनिरूपणम् । ब्रह्मवधविचारः । ब्रह्महत्यासुरापानयोः प्रायश्चित्तम् । स्वर्णहरणप्रायश्चित्तम् । गुर्व्वङ्गनागमनप्रायश्चित्तम् । पतितसंसर्गप्रायश्चित्तञ्चेति ।

---

**No. 244. फेत्कारिणीतन्त्रम् .** Substance, country-made paper, 13 x 3 inches. Folia, 31. Lines, 7 on a page. Extent, 949 çlokas. Character, Bengali. Date, ? Place of deposit, **Kāṭhālpāḍā**, Post Office Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो दुर्गायै ॥

मेरुपृष्ठे सुखासीनं देवदेवं जगद्गुरुम् ।
शङ्करं परिपप्रच्छ पार्व्वती परमेश्वरम् ॥
पार्व्वत्युवाच ।
भगवन् सर्व्वधर्म्मज्ञ सर्व्वशास्त्रागमादिषु ।
धर्म्मार्थकाममोक्षाणां हेतुरूपा महेश्वरी ॥
या ख्याता प्रकृती चाद्या देवी दक्षिणकालिका ।
शक्तिरूपा च सर्व्वेषां ब्रह्मादीनां सुरेश्वरी ॥
दक्षिणा वा कथं देव शिवरूढ़ा कथं भवेत् । इत्यादि ।

**End.** अनया सदृशी विद्या त्रैलोक्ये चातिदुर्लभा ।
भोगमोक्षप्रदा साक्षात् पुरुषार्थप्रदायिका ॥
अनया सदृशी विद्या न विद्यार्णवगोचरे ।
नास्ति नास्ति पुनर्नास्ति सत्यं सत्यं वदाम्यहम् ॥ ० ॥

**Colophon.** इति फेत्कारीये दशमः परिच्छेदः ॥ ० ॥

**विषयः।** दक्षिणकालिकाया दक्षिणत्वप्रवक्तृत्वादिनिरूपणम् । मन्त्रभेदादिनिरूपणम् । उग्रतारात्रिपुरादिकारणनिरूपणम् । दशमहाविद्याकारणनिरूपणम् । कालिकाया महाविद्यात्व-निरूपणम् । पूजाविध्यादिनिरूपणम् । भुवनेश्वर्य्यादिविद्यानिरूपणम् । गुरुक्रमनिरूपणम् । प्रचण्डचण्डिकावीजपूजादिनिरूपणम् । षोडशाक्षरादिनिरूपणञ्चेति ।

---

**No. 245.** बालग्रहशमनविधानम् . Substance, country-made paper. Folia, 8. Lines, 8 on a page. Character, Nāgara. Date, SAM. 1943. Place of deposit, Govardhana-Sarāi Benares, Paṇḍita Vindhyeçvariprasāda Dube. Appearance, fresh. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः ॥ विधानमालायाम् । अथ प्रसङ्गेन लघुजातकोक्तानि बालरक्षोपयोगीनि ग्रहशान्तिविधानानि । तान्येव स्कन्दपुराणे स्कन्द-सूर्य्य-संवादे । सूर्य्य उवाच ।

आहारश्चैव निद्रा च वह्निर्न्नं चासमेव च ।

स्वाभाविकन्त्विदं देव कर्म्म चैषां षडानन ॥ इत्यादि ।

**End.** सूर्य्य उवाच ।

येन पापेन बालानां मनुजानां ग्रहो भवेत् ।

तत्सर्व्वं पूर्व्वमेव त्वं उक्तवानसि षण्मुख ॥

**Colophon.** इति श्रीस्कन्दं सूर्य्यार्पणं द्वादशदिनमासाब्दभाविनीजनितपीडोपशमन-विधानम् । श्रीकृष्ण चौबे श्रीश्री सम्वत् १९४३ माः फाल्गुण ११ वार रविच । कालीप्रसादमध्ये गोवर्द्धनके सरै ।

**विषयः।** बालग्रहाणां शान्तिविधानादिकम् ।

---

**No. 246.** बालभैरवीसहस्रनामस्तोत्रम् . Substance, country-made paper, 14×3 inches. Folia, 5. Lines, 9 on a page. Extent, 242 çlokas. Character, Bengali. Date, SK. 1215. Place of deposit, Kā̃ṭhālpāḍā, Post Office Naihaṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse ner-ally correct.

**Beginning.** अथ त्रिपुरबालभैरवीसहस्रनामस्तोत्रम् । ॐ नमो भैरव्यै । पार्व्वत्युवाच ।
देवदेव महादेव परब्रह्मस्वरूपक ।
सर्व्वदेवस्तुत नाथ सर्व्वदेवप्रपूजक ॥
जटाजूटधर देव गिरिजार्द्धाङ्गभूषण ।
भाले शशिकलाखण्ड निष्कलङ्कावलोकिन ॥
भूतनाथ महादेव प्रसन्न भयभञ्जन ।
त्वं गतिः सर्व्वदेवानां त्वमेव शरणं प्रभो ॥
त्राहि मां देव दुष्प्रेक्ष्य संसारार्णवसङ्कटात् ।
भैरवी बालयाख्या (?) च सूचितं न प्रकाशितम् ॥
तस्या नामसहस्रन्तु कथयस्व वरानन ॥ इत्यादि ।

**End.** परदारगते वापि शठेऽकृत्ये च पापिनि ।
तस्य तस्य महेशानि न दातव्यं सुनिश्चितम् ॥
उक्तानुक्तञ्च यत् किञ्चित् स्थावराणि चराणि च ।
तत्र नित्यस्थिता देवि बालया परमेश्वरी ॥

**Colophon.** इति रुद्रयामले हरगौरीसंवादे बालायाः सहस्रनामस्तोत्रं समाप्तम् ॥
शरेन्दुपक्षेन्दुमिते शकाब्दे व्यलेखि स्तोत्रं परदेवतायाः ॥

**विषयः ।** बालभैरवीस्तोत्रकथनम् ।

---

**No. 247.** **बिल्वेश्वरः .** By **बिल्वेश्वरः .** Substance, country-made paper, 14×2½ inches. Folia, 78. Lines, 6 on a page. Extent, 1,726 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamanasimha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ॥ द्विर्व्वा ॥ अधिकारसूत्रमिदं वक्ष्यमाणार्थसंक्षेपाय कार्य्यकार्य्यिनिमित्तानां यदुदीरणं सोऽधिकारः ॥ इत्यादि ।

**End.** सम्प्र ॥ दीर्घस्यावनुगटस्यते तद्विय सत्त्यमिति ज्ञापकाद्यच्च दृश्य उक्त इति अन्यस्यैव निमित्तमुत्पत्तिरित्यनेन समवायग्रहणं सम्बन्धः प्रतिपादितः अधिकारसूत्रैस्तथा दर्शनादाच्च न परस्पराया इति ॥ * ॥

**Colophon.** इति श्रीबिल्वेश्वरनकोचार्य्येकृतमष्टमप्रकरणं समाप्तम् ।

विषयः । ज्ञातज्ञेयाज्ञातप्रकरणस्य व्याख्या ।

---

No. 248. बृहद्गौतमीयतन्त्रम्. Substance, country-made paper, 14 × 5 inches. Folia, 25. Lines, 13 on a page. Extent, 1,503 çlokas. Character, Bengali. Date, ? Place of deposit, District Vā̃kuḍā, Viṣṇupura, Kādākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ कृष्णाय नमः ।

पुण्डरीकपुरे पूर्व्वं सरलद्रुमकानने ।
सुमेरोरुत्तरे शृङ्गे रत्नभूमिसुशोभने ॥
विचित्रचित्रसुभगे सुवर्णवालुकान्विते ।
समालोहितचन्द्रार्कै युयुतौ (?) मणिमण्डपे ॥
कल्पद्रुमवनाभ्यासे पश्चिमाशाविभूषिते ।
सुखासने समासीनाः शौनकाद्या महर्षयः ॥
शौनकः पर्व्वतो मार्गिर्मरीचिर्दधिचिस्तथा ।
शातातपः सुनीतिश्च इत्याद्या मुनिसत्तमाः ॥
स्मरन्तः कृष्णगाथाश्च बोधयन्तः परस्परम् ।
जपन्तोऽष्टादशार्णाख्यं दशार्णाख्यान् परस्परम् ॥
कदाचित् पर्य्यटन्नेको नारदो ब्रह्मणः सुतः ।
यदृच्छया तत्र यातो वीणां ब्रह्ममयीं ध्वनन् ॥
मन्त्रमायार्णकाः (?) सर्व्वे मत्वा दृष्ट्वा वराननम् ।
उपविष्टं मुनिवरं पाद्यार्घ्याचमनीयकैः ॥
भूयोभूयोऽपि मुनये प्रहृष्टा वाचमब्रुवन् ।
मुने त्वं ब्रह्मणः श्रेष्ठसुतो ब्रह्मा इवापरः ॥
वयं तवोपदेशेन चरामः कृष्णवर्त्मसु ।
संसारसागरे घोरे विषयग्राहसंकुले ॥
पुत्रदारधनावर्त्ते खेदपङ्कपङ्किले ।
जायन्ते च म्रियन्ते च तेषां मुक्तिर्न विद्यते ॥
तरन्ति त्वत्प्रसादेन येन ते जीवजातयः ॥

श्रीनारद उवाच ।

उपायं वै महाभाग सावधानमनाः शृणु ।
यदुपायं महात्मानो मुनयः सिद्धिमागताः ॥
एवं मया पुरा पृष्टो ब्रह्मा लोकपितामहः ।
तथा वः कथयिष्यामि यथा प्रोक्तं स्वयम्भुवा ॥ इत्यादि ।

**End.**

गकारं मूर्द्ध्नि विन्यस्य ककारं हृदये न्यसेत् ।
षकारं नाभिदेशे च टकारं गुह्यदेशके ॥
नादबिन्दू पादयोश्च मन्त्रन्यास इतीरितः ।
एवं विन्यस्य कृष्णस्य ध्यायेदात्मानमात्मनि ॥
कदम्बमूले श्रीकृष्णं वृन्दावननिवासिनम् ।
पद्मोपरि स्थितं देवं वेणुं गायन्तमच्युतम् ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
गोपीभिर्गोपवृन्दैश्च सेवितं कृष्णमर्चयेत् ॥
चत्वारिंशत्सहस्रन्तु चतुर्लक्षसमन्वितम् ।
पुरश्चरणमित्युक्तं मन्त्रस्यास्य विशेषतः ॥
चायेन तद्दशांशेन होमयेन्मन्त्रवित्तमः ।
त्रिकालपूजां कुर्व्वीत दशाचरमनोर्यथा ॥
पिण्डगोपालमन्त्रस्य समानोऽन्यो मनुर्न हि ।
गुरूपदेशमन्त्रेण योजयेत् कृष्ण एव सः ॥ * ॥

**Colophon.** इति श्रीगोविन्दवृन्दावने बृहद्गौतमीयतन्त्रे षट्त्रिंशः पटलः ॥ * ॥

विषयः । प्रथमपटले वैष्णवप्रशंसादिकथनम् । २ ये अवतारकारणादिनिरूपणम् । ३ ये प्रणवशब्दव्युत्पत्तिनिरूपणमुखेन कृष्णमन्त्रप्रशंसादिः । ४ र्थे बीजादिस्मरणप्रकरणम् । ५ मे दशार्णध्यानफलादिः । ६ ष्ठे चिन्तनस्थानादिनिरूपणम् । ७ मे वृन्दावनध्यानादिः । ८ मे आचमनासनादिनिरूपणम् । ९ मे भूतशुद्ध्यादिनिरूपणम् । १० मैकादशयोः मातृका-न्यासादिनिरूपणम् । १२ शे ऋष्यादिन्यासादिनिरूपणम् । १३ शे गुरुमाहात्म्यादिकथनम् । १४ शे दीक्षानिरूपणादिः । १५ शे पूजोपकरणादिनिरूपणम् । १६ शे सर्व्वतोभद्रफलादि-कथनम् । १७ शे दीक्षाक्रमनिरूपणम् । १८ शे शान्तिकुम्भस्थापनादिविधिः । १९ शे योनिमुद्राफलादिकथनम् । २० शे कृष्णपूजादिः । २१ श द्वाविंशयोः स्त्रशूद्रादीनां दीक्षा-विधिः । २३ शे कृष्णमन्त्रजपादिविधिः । २४ शे कुण्डादिनिरूपणमुखेन होमनिरूपणम् । २५ शे समिधादिनिरूपणम् । २६ शे यजनविध्यादिः । २७ शे न्यासादिन्यासः । २८ श

२९ शयोः प्राणाग्निस्त्रीचादिनिरूपणम् । ३० शे मोचनदीपनादिनिरूपणम् । ३१ शे मन्त्रराज-बीजादिनिरूपणम् । ३२ श ३३ शयोः मन्त्रसिद्धिलक्षणादिः । ३४ शे मुद्रादिनिरूपणम् । ३५ शे एकाक्षरमन्त्रादिनिरूपणम् । ३६ शे मन्त्रपिण्डादिः ॥

---

**No. 249.** **बृहद्योनितन्त्रम्.** Substance, country-made paper, 10 × 2½ inches. Folia, 18. Lines, 8 on a page. Extent, 360 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā. Bābu Rāsavihārī Rāya. Appearance, tolerable. Verse. Incorrect.

**Beginning**

ॐ नमः परमदेवतायै ।
कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
भवानी रहसि प्रीत्या पप्रच्छ जगदीश्वरम् ॥
श्रीपार्व्वत्युवाच ।
नमस्ते देवदेवेश परमेश पुरातन ।
पार्व्वतीप्राणनाथेश लोकानां हितकारक ॥
त्वत्प्रसादात् प्राणनाथ तन्त्राणि विविधानि च ।
इदानीं श्रोतुमिच्छामि बृहद्योनिं महेश्वर ॥
तन्त्रं योनेर्महत्त्वञ्च पूजाक्रममनुत्तमम् ।
तन्त्रञ्च देवतां योनेर्मुद्राश्चैव प्रकाशय ॥
यदि गुह्यतरं नाथ तथापि कथय प्रभो ।
ईश्वर उवाच ।
किमिदं भाषसे सुभ्रु स्त्रीस्वभावान्महेश्वरि ।
मम प्राणाधिकं देवि त्रिषु लोकेषु दुर्लभम् ॥
यथा त्वद्योनि दुष्प्रेक्ष्यं मन्त्रैरपि सुरेश्वरि ।
तथैव जायते शङ्का कथितुं वरवर्णिनि ॥ इत्यादि

**End.**

ज्ञानहीनोऽपि दाता च भजन्ति प्रीतिमुत्तमाम् ।
पशुपुत्रस्त्रियो बन्धुं लभन्ते च पुनः पुनः ॥
कर्म्मकाण्डरता विप्राः कर्म्मकारणमुच्यते ।
चतुर्व्वर्गप्रियो नित्यं गुणकथनमनेकधा ।
देहमध्ये स्थितं देव पिण्डब्रह्माण्डव्यापितम् ॥

**Colophon.** इति बृहद्योनितन्त्रे दशमः पटलः ॥

**विषयः ।** अथ प्रथमं वृहद्योनितन्त्रमाहात्म्यादिकथनच्छलेन शिवाशिवयोर्निधुवनमन्दिरगमनकथनम् । तत्र जगत्कारणभूतायाः प्रकृतेर्योनिरूपत्वकथनम् । तस्याः सर्व्वदेवमयत्वकथनम्, सर्व्वतीर्थादिमयत्वकथनञ्च । अथ तस्यां शक्तीनामवस्थितिकथनम् । तस्याः पूजने सप्तपीठपूजाफलप्राप्तिकथनम् । तस्याः पूजाकालादिनिरूपणम् । तन्नामकीर्त्तनफलकथनम् । महादेवस्य लिङ्गरूपत्वादिकथनम् । आश्विनशुक्लाष्टम्यां तन्नामामाहात्म्यगीतकरणे फलश्रुतिकथनम् । पार्व्वत्याः कृष्णरूपेणावतारकथापूर्व्वं व्रजाङ्गनाभिः सह विहारकथनम् । अथ पञ्चतत्त्वेन योनिपूजाविधिः । योनिमुद्रादिविधिः । षट्चक्रेषु तस्याश्चिन्तनादिविधिः । योनिकवचकथनम् । योनिमन्त्रादिकथनम् । कुलज्ञानात् मोक्षप्राप्तिकथनञ्च ॥

---

**No. 250.** वृहद्रुद्रयामलम् . (जन्मखण्डः) Substance, country-made paper, 14 × 3 inches. Folia, 48. Lines, 5 on a page. Extent, 840 çlokas. Character, Bengali. Date, Sk. 1741. Place of deposit, District Vā̃kuḍā, Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ नमो भगवते पञ्चवक्त्राय ।

श्रीनारद उवाच ।

कृष्ण कृष्ण महाबाहो प्रपन्नजनवल्लभ ।
श्रोतव्यमेकमेवास्ति तच्च मे कथय प्रभो ॥
श्रुताः सर्व्वावतारास्ते कल्पान्ता मीनकादयः ।
अन्ये चैवावताराश्च श्रुता मे दीनपावन ॥
पूर्व्वं तेऽकरवं प्रश्नं सत्ये तु युगशीर्षणि ।
त्वं मे कथितवान् देव तुभ्यं पश्चात् वदामि वै ॥
अद्य मेऽवसरो भूतस्तातः प्रश्नं करोमि ते ।
कथित्वा परमानन्दं जनयस्व जनार्द्दन ॥
त्वं ब्रह्म परमं साक्षात् त्वं हि लोकपितामहः ।
अनुरक्ताय भक्ताय कृपया वक्तुमर्हसि ॥
नाम्ना पञ्चाननो देवः कस्मौ कस्मात् भविष्यति ।
तत् कथ्यतां जगन्नाथ यदि स्नेहोऽस्ति मां प्रति ॥

श्रीभगवान् उवाच ।

मुने शृणु महद्वाक्यं कथयामि तवानघ ।
यत् श्रुत्वा सप्तजन्मानि ह्यपि वन्ध्या प्रसूयते ॥

कलौ लोका दुराचारा भविष्यन्ति हतांहसः ।
जन्मवन्ध्या न सुपुत्रा भार्य्याश्च हतमङ्गलाः ॥
मातापितृकृतद्वेषाः स्त्रीदेवाः कामकिङ्कराः ।
द्विजातयो व्रताचाराः क्षत्रिया भद्रमानसाः ॥
मद्वैश्याश्च शूद्राश्च नानोपद्रवसंयुताः ।
अमङ्गलानि सर्व्वाणि भविष्यन्ति कलौ युगे ॥
एषां हिताय विप्रर्षे पश्चास्योऽहं भवामि वै ॥ इत्यादि ।

**End.** ततो दारैश्च पुत्रैश्च महाराजा नरध्वजः ।
उवास निर्म्मले स्वर्गे ह्यद्यापि मुनिपुङ्गव ॥
चन्द्रप्रसादाद्राजर्षिर्दैविकं सुखमन्वभुवन् ।
स्थितः सुरपुरे ब्रह्मन् किमन्यत् कथयामि ते ॥
यत्र तत् शृणुते मर्त्यो भक्तिभावसमन्वितः ।
भुक्त्वा सुखं मनोरम्यमन्ते याति पराङ्गतिम् ॥
को वा दयालुरपि कामधेनु-
र्धन्यो जगत्यामपि शङ्कराद्वा ।
यद्देवजातो रविकोटिभासो
नीतः स्वकं वामनरं नराधिपम् ॥ (?)
श्रुत्वा वाक्यं रोमहर्षं नारदो जगदीश्वरात् ।
नत्वा चन्द्रं महात्मानं कृष्णं नत्वा सुखं ययौ ॥
काकवन्ध्यादिका नार्य्यः षड्विंशतिमताश्च याः ।
श्रवणात् पठनात् दोषान् हित्वा यान्ति परां गतिम् ॥ ० ॥

**Colophon.** इति श्रीबृहद्ब्रह्मयामलीये श्रीकृष्णनारदसंवादे द्वितीयखण्डे त्रिंशोऽध्यायः ॥*॥
समाप्तश्चायं जन्मखण्डः ॥ शक १७४९ ।

**विषयः** । प्रथमाध्याये देवमन्त्रणादिनिरूपणम् ॥ २ ये पञ्चाननजन्मादिनिरूपणम् । ३ ये पञ्चाननभूप्रवेशादिनिरूपणम् । ४ र्थे शान्तदान्तोत्पत्तिनिरूपणम् । ५ मे द्विजदण्डादिनिरूपणम् । ६ ष्ठे विप्रशोकापनोदनम् ॥ ७ मे पूजाप्रकारादिनिरूपणम् । ८ मे मालिकोपाख्यानम् । ९ मे व्रतपुत्रदानादिनिरूपणम् । १० मे द्विजागमनादिनिरूपणम् । ११ शे वरप्रार्थनादिनिरूपणम् । १२ शे नरध्वजसुतोत्पत्तिनिरूपणम् । १३ शे नरध्वजामोदनिरूपणम् । १४ शे यात्रोपक्रमादिनिरूपणम् । १५ शे दूतवधनिरूपणम् । १६ शे वीरसेनवधादिनिरूपणम् । १७ शे कीर्त्तिध्वजजयादिनिरूपणम् । १८ शे भगवद्दाक्यनिरूपणम् । १९ शे लोचनादानादिनिरू-

णनम् । १० शे कामाख्यादिद्वारनिरूपणम् । ११ शे भस्मोपाख्यानम् । १२ शे ब्रह्मप्रवेशादि-निरूपणम् । १३ शे १४ शे च सुवर्णप्राप्तिनिरूपणम् । १५ शे गरुडध्वजस्नानचक्रस्नानादिनिरूपणम् । १६ शे चक्रपूजाख्यानादिनिरूपणम् । १७ शे नारदोपाख्यानादिः । १८ शे चक्रतीर्थानां फलादिनिरूपणम् । १९ शे गुरुपुष्करसंबन्धकर्मादिनिरूपणम् । २० शे गरुडध्वजसमीपगादिनिरू-पणञ्चेति ॥

---

**No. 251. ब्रह्मपुत्रमाहात्म्यम्.** Substance, country-made paper, 14 × 2½ inches. Folia, 3. Lines, 7 on a page. Extent, 60 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Pilkhānā, Väddānagara, Paṇḍita Kailāsacandra Tarkaratna. Appearance, new. Prose and verse. Correct.

**Beginning.** ॐ नमः शिवाय । अथ ब्रह्मपुत्रमाहात्म्यम् ।

नारद उवाच ।

माहात्म्यञ्च सर्व्वेषां श्रुतं विस्तरतो मया ।
गङ्गादिसरितां सम्यक् तीर्थराजस्य न श्रुतम् ॥
तीर्थराजस्य माहात्म्यं कथयस्व मयि प्रभो ।
यतस्त्वं सर्व्वलोकानां कर्त्ता धर्त्ता पितामह ॥

ब्रह्मोवाच ।

तीर्थराजस्य माहात्म्यं शृणुष्वैकमनाः सुत ।
कथयामि न सन्देहो ब्रह्मपुत्रस्य कीर्त्तनम् ॥
तीर्थनाथस्य सर्व्वेषां पापराशिः प्रलीयते ।
दर्शनात् सर्व्वलोकानां पुनर्जन्म न विद्यते ॥ इत्यादि ।

**End.** ततः स्नात्वा अर्घ्यं दद्यात् ।

ॐ किरीटिकौस्तुभधर रत्नदामविभूषित ।
गृहाणार्घ्यं मया दत्तं भवबन्धविमुक्तये ॥

ततः प्रणमेत् ।

नमस्ते ब्रह्मपुत्राय नमः शान्तनुसूनवे ।
त्रिजन्मजनितं यत् पापं तत् पापं हर मे विभो ॥

**Colophon.** इति स्नानविधिः समाप्तः ।

विषयः । ब्रह्मपुत्रनदस्य माहात्म्यकथनम् । तत्र स्नानादिविधिश्च ।

---

**No. 252.** ब्रह्मपुत्रोत्पत्तिः. Substance, country-made paper, 18 × 2½ inches. Folia, 7. Lines, 6 on a page. Extent, 510 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala, District Mayamanasimha, Paṇḍita Harinātha Tarkabhūṣaṇa. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

पापराशिसमुदाये नराणामागतं कलयया चरित्रर्गात् ।

मुक्तिहेतुमलयं वनपुण्यं ब्रह्मपुत्रमनिशं प्रणमामि ॥

अथ ब्रह्मपुत्रोत्पत्तिः । इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

विषयः । ब्रह्मपुत्रोत्पत्तिनिरूपणमुखेन तत्र स्नानदानादिमाहात्म्यनिरूपणम् ।

---

**No. 253.** ब्रह्मसंस्कारमञ्जरी. By नारायणशर्म्मा. Substance, country-made paper, 16 × 2 inches. Folia, 66. Lines, 3 on a page. Extent, 928 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍa *viâ* Naihāti, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमः परमदेवाय ।

नमामि विघ्नेशगुरुं गिरीशं

वागीश्वराराधितपादपद्मम् ।

यः स्मर्य्यमाणोऽपि करत्यशेषं

निजं पदं यच्छति चाविचारम् ॥

स्मरामि शम्भोश्चरणारविन्दं

स्वयम्भु-शम्भोस्त्रिधरानिषेव्यम् ।

यदर्चनाय स्वयमादरेण

नेत्रारविन्दं चविरुज्जहार ॥

मुरारिभाष्यौघटभाष्यसार-

मशेषतः श्रातपथश्रुतीश्च ।

विलोक्य पारस्करग्टह्यभाष्या-

ण्यशेषदेशात् परिसञ्चिनोमि ॥

तन्यते तर्कवार्गीशी श्रीनारायणशर्मणा ।
प्रीतये धर्मभीरूणां ब्रह्मसंस्कारमञ्जरी ॥
तत्रादावाश्वसंस्कारस्य प्रायशोऽग्निसाध्यत्वात् कुशण्डिकोच्यते । इत्यादि ।

**End.** तत ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि इति पाठयेत् । ततो धियो यो नः प्रचोदयात् इति पाठयेत् । तत ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति ब्रह्मचारिणा सर्वैवासार्थं पठेत् । तत ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इति त्रिः पाठयेत् । ब्रह्मचारी तु ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति प्रकारेण सदैव जपेत् ॥

**विषयः ।** कुशण्डिकानिरूपणम् । संस्कारकर्मादिषु अग्नेर्नामनिरूपणम् । नान्दीमादि-प्रयोगविधिः । विवाहोपनयनादिसंस्कारकर्मनिषयप्रयोगविध्यादिनिरूपणञ्चेति ।

---

**No. 254.** भक्तिजयार्णवः. By रघुनन्दनवन्द्योपाध्यायः. Substance, country-made paper, 17 × 3 inches. Folia, 14. Lines, 6 on a page. Extent, 320 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Vāḍari, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

प्रणम्यादौ जगन्नाथं सर्व्वपापिजनार्द्दनम् ।
भक्तिजयार्णवं वक्ष्ये वन्द्यः श्रीरघुनन्दनः ॥
विरञ्च उवाच ।
विष्णुं शिवं तथा गौरीं गणेशञ्च दिवाकरम् ।
योगिन्यादिषु मन्त्रेषु सिद्धमन्त्रादिकेषु च ॥
किं मन्त्रात्लभते मोक्षं किम्वाराधने यमः ।
यः कामक्रोधलोभैस्तु विषयैः परिपीड़ितः ॥
बद्धः स्वकर्म्मभि र्घोरै र्न्दृत्यदारैः समन्ततः ।
स केन निस्तरत्याशु दुस्तरं भवसागरम् ॥ इत्यादि ।

**End.** गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ।
पापं तापं तथा दैन्यं सद्यः साधुसमागमे ॥

रसायनसिन्धौ ।

भक्तिरसायनसिन्धौ परतः परिभूतकालजालभियः ।
अज्ञानकरानेतानवितनुभिज्ञानदीनान् नमस्यामः ॥
वाञ्छाकल्पतरुभ्यश्च कृपासिन्धुभ्य एव च ।
पतितानां पावनेभ्यो वैष्णवेभ्यो नमो नमः ॥

**Colophon.** इति श्रीविरक्तमधुसूदनदासकृते भक्तिरसायनसिन्धौ चतुर्थः समाप्तः ॥ * ॥ समाप्तश्चायं ग्रन्थः ।

**विषयः ।** कृष्णनामजपपूजादिफलनिरूपणम् । वैष्णवमाहात्म्यनिरूपणपूर्वक तदाराधनफलाधिक्यनिरूपणम् । गौराङ्गजन्मादिनिरूपणञ्चेति ।

---

**No. 255.** भक्तिप्रकाशः. By श्रीरघुनन्दनः. Substance, country-made paper, 19 × 3½ inches. Folia, 85. Lines, 7 on a page. Extent, 2,900 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Candrakānta Vidyāratna. Appearance, tolerable. Verse. Incorrect.

**Beginning.** ॐ श्रीरामः ।

शिवं प्रणम्य सशिवं शिवदं शिवकीर्त्तनम् ।
भक्तिप्रकाशं तनुते वैद्यः श्रीरघुनन्दनः ॥
नानापुराणवचनं शिवविष्णुदुर्गा-
भेदेरितं बहुविधं बहुधा प्रयत्नात् ।
आलक्ष्य संग्रहमिमं सुजनप्रमोदं
भक्तिप्रकाशमधुना रघुरातनोति ॥
नितरां वैद्येनेत्यमं मम विदुषा देय एव न
द्विजानामारम्भो यदि तदपि सन्तोषयति मां ।
यतस्तद्दासेन स्वमतिपरिणामावधि कृतः
प्रकृत्या भक्त्यानुग्रहमनसां वेदविदुषां ॥ इत्यादि ।

**End.** यदुक्तं काशीखण्डे ।

अनाराध्य महेशानं सर्व्वदं सर्व्वदेहिनाम् ।
कोऽपि क्वापि किमप्यत्र न लभेत विनिश्चितम् ॥

ब्रह्मादिपुराणे ।

अनाश्रित्य महेशानीं यतितोऽपि भवाम्बुधिम् ।

सोऽन्वेषी समुद्रस्य यथा वा प्रतिनिम्नगः ॥

देवीपुराणे ।

अर्चयन्तीह ये भक्ताः श्रद्धया ह्यन्यदेवताः ।

तेऽपि दुर्गामर्चयन्ति तद्रूपेण फलप्रदा ॥

कौर्म्मे शिववाक्यम् ।

ये चान्यदेवताभक्ताः पूजयन्तीह देवताः ।

मद्भावनासमायुक्ता मुच्यन्ते तेऽपि भावतः ॥

अतएव सर्व्वदेवताभजनेनैव ईश्वरभजनं अन्यथा अनन्तु विषयस्यैव इति ।

शुभमस्तु ।

**Colophon.** इति भक्तिप्रकाशे विचारनिर्णयो नामाष्टमोद्योतः । समाप्तोऽयं भक्तिप्रकाशः । श्रीकृष्णाय नमः । श्रीरामचन्द्राय नमः ॥ * ॥

**विषयः ।** शूद्राणां पुराणादिपठनश्रवणाद्यधिकारनिरूपणम् । आगमाचारनिरूपणम् । शिवविष्णुदुर्गागणपत्यादिदेवदेवीनामभेदप्रकटनम् । साधननिरूपणम् । भक्तिमाहात्म्यकथनम् । शिवविष्णुनामसङ्कीर्त्तनमुखेन पूजादिनिरूपणञ्चेति ।

---

**No. 256.** भक्तिरत्नार्णवः. By कृष्णदासः. Substance, palm-leaves, 12×2 inches. Folia, 110. Lines, 5 on a page. Extent, 1,719 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā, Viṣṇupura Kādākuli, Paṇḍita Raghurāma Tarkaratna. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ विष्णवे नमः ॥ विष्णुधर्म्मे ।

श्रूयतां हि नरव्याघ्र वेदवेदान्तनिश्चयः ।

यज्ञेषु यज्ञपुरुषः पुण्डरीकाक्षसंज्ञितः ॥

स विष्णुः परमं ब्रह्म यतो नावर्त्तते पुनः ।

कर्म्मपर्व्वणि । नारदं प्रति रुद्रः ।

देवानामसुराणाञ्च यक्षगन्धर्व्वरक्षसाम् ।

ईश्वरोऽहं समेशानः साक्षान्नारायणः परः ॥

इतिहाससमुच्चये ।

नारायणाज्जगत्सर्व्वं सृष्टिकाले प्रजायते ।
परादपि परश्चासौ तस्मान्नास्ति परात्परः ॥
एतज्ज्ञानं परं तात योगश्चैव परस्तथा ।
परस्परविरुद्धार्थैः किमन्यैः शास्त्रविस्तरैः ॥

मोक्षधर्म्मे ।

तत्त्वं जिज्ञासमानानां हेतुभिः सर्व्वतोमुखैः ।
तत्त्वमेको महायोगं हरिर्नारायणः परः ॥

श्रीहरिवंशे ।

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥ इत्यादि ।

**End.**

सुरासुरो वाप्यथ वानरो नरः
सर्व्वात्मना यः पुरुषमीश्वरम् ।
भजेत रामं मनुजाकृतिं हरिं
य उत्तराननयत् कोशलानिव ॥
शम्भ्वादयोऽपि देवानामृषीणां नारदादयः ।
मनुष्याणां तथा राजन् प्रसिद्धा जनकादयः ॥
प्रह्लादप्रमुखा ज्ञेया राक्षसानां गणे स्थिताः ।
शाखामृगेषु यो वायुपुत्रो भक्तेषु जाम्बवान् ॥
कुञ्जराणां गजेन्द्रोऽपि पक्षिणां गरुडादयः ।
स्त्रीणां कुन्ती तथा विप्रपत्न्यः श्रीद्रुपदात्मजाः ॥
देवहूतिः कपिलसूः सुनीतिः शबरी वरा ।
सूतो विलोमजातानामन्त्यजे शबरादयः ॥
चाण्डालोऽपि द्विजश्रेष्ठो जातो वैलोमजः पुरा ।
यल्लोमलोमशो मुनिश्चाण्डालान्नैव मंस्यति ॥
जपेतं शास्त्रपाठेन दुर्व्वासो वर्णनिष्ठता ॥*॥
श्रीमद्भक्तिरसार्णवे विरचिते श्रीकृष्णदासेन वै
नानाशास्त्रविचारदुःखजलधौ मज्जन्ति ये वा जनाः ।
तेषामुद्धरणक्षमे सुकृतिनां सौख्यास्पदे नित्यशो
×तं भक्त्यधिकारिणा विरचितं श्रीमत्प्रभोराज्ञया ॥*॥

**Colophon.** इति भक्तिरत्नार्णवे भक्त्यधिकारनिरूपणं प्रथमं विवेचनम्। समाप्तश्चायं ग्रन्थः ॥ *॥

**विषयः।** नानापुराणोक्तवचनादिभिर्विष्णुभक्तिप्रशंसादिकथनम्। माघमासस्नानादिनिरूपणम्। माघमासस्नानपूजादिफलकथनम्। तिलकधारणविध्यादिकथनम्। एकादश्युपवासफलादिकथनम्। विष्णुनाममाहात्म्यादिनिरूपणम्। भगवज्जन्मभिन्नां देवादीनां वैभवादिनिरूपणम्। श्रीपादतीर्थवैभवादिनिरूपणम्। भक्त्यधिकारादिनिरूपणञ्चेति।

---

**No. 257.** भगवद्गीतारहस्यप्रकाशः. By जगदीशपञ्चाननः. Substance, country-made paper, 14 × 3¼ inches. Folia, 75. Lines, 7 on a page. Extent, 2,198 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Parganā Sonārgā̃, Post Office Vaidyervāzār, Kṛṣṇapurā, Paṇḍita Kālikumāra Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय।
संसारपङ्कपर्य्यङ्के मग्नानं जगदुद्धरन्।
देवकीनन्दनः पायादपायात् पूतनार्द्दनः॥
श्रीमता जगदीशेन चरणाब्जं मुरद्विषः।
आधाय हृदये गीतारहस्यार्थः प्रकाश्यते॥
इह पुनरज्ञानपरम्पराव्यसनमर्ज्जुनं प्रबोधयन्नखिलजनतामविनश्वविश्रुतिर्देवो कंसद्वेषी भगवानखिलचर्व्वाग्रधर्म्माणां मोक्षस्य चोपायं गीताशास्त्रेण व्यक्तीचकार। व्यासमहर्षिस्तु तदेवाष्टादशभिरध्यायैः सप्तभिः श्लोकशतैराचचक्षे इति। तत्र धृतराष्ट्रप्रश्नप्रस्तावार्थमाह धृतराष्ट्र उवाचेति। कः प्रश्नः तमाह धर्म्मक्षेत्र इति। एषामादिपुरुषः कुरुनामा नृपः तस्य क्षेत्रे। ननु कृषिं विना कथं क्षेत्रमित्यत आह धर्म्मक्षेत्र इति। धर्म्मरूपकृषिक्षेत्र इत्यर्थः। कुरूणां धर्म्मोत्पत्तौ क्षेत्रं सम्पादितमिति भावः। मामका मदीयाः। युयुत्सवः युद्धेच्छावन्तः। समवेता मिलिताः। अकुर्व्वत कृतवन्तः। हे सञ्जय ॥१॥ प्रश्नोत्तरमाह दृष्ट्वा त्विति। अनीकं सैन्यम्। व्यूढं चक्रव्यूहविधानादिना दुर्भेद्यम्। आचार्य्यं द्रोणं अब्रवीत् उक्तवान्। उपसंगम्य समीपं गत्वा। राजा दुर्य्योधनः ॥२॥ किमुक्तमित्याह। नवभिः पद्यैः। चमूं सेनां महतीं विपुलां व्यूढां चक्रव्यूहविधानादिना दुर्भेद्यां। द्रुपदपुत्रेण धृष्टद्युम्नेन। तव शिष्येण अर्ज्जुनेन स्वार्थे करणे वा तृतीया। धीमादित्याद्यन्वयमाह धीमतेति प्रशंसायां मतुप् ॥४॥ इत्यादि।

**End.** मोहाभावज्ञापनार्थमर्ज्जुन उवाच नष्ट इति । मोहो देहादिष्वात्मभ्रमः । स्मृतिर्निदिध्यासनरूपा स्थितः स्थिरोऽस्मि युद्धादौ चित्तास्थैर्य्यं गतमिति भावः । गतसन्देहः गतो भीष्मादिवधप्रयुक्तोऽधर्म्मसन्देहो यस्य । नव चिन्तिषिणः ॥ ७३ ॥ धृतराष्ट्रं प्रति सञ्जय उवाच । महात्मन इत्युभयत्रा-न्वितम् । इमं कश्चिदश्रानमोहः प्रनष्टस्ते धनञ्जय इत्यन्तम् । अश्रौषं श्रुतवान् । रोमहर्षणं लोमाञ्चकरम् ॥ ७४ ॥ चक्षुः श्रोत्रञ्च मह्यं दत्तं व्यासप्रसादात् व्यासप्रसादं प्राप्य इदं कृष्णार्ज्जुनसंवादं कृष्णोक्तत्वात् । परं प्रकृष्टं कृष्णाच्छ्रुतवान् कीदृशात् योगं कथयतः । उक्तहेत्वा एतेन पक्षपाता-शङ्का दूरीकृता । ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ७७ ॥ एतत् धृतराष्ट्रस्य राज्यादिस्थैर्य्यशङ्का चेतस्निरा-करणार्थमाह यत्रेति यत्र पक्षे कृष्णो वर्त्तते पार्थोऽर्ज्जुनः धनुर्गाण्डीवं तत्रैव पक्षे श्रीः शोभा विजयो दुर्जयः । भवता पुत्रादिविजिगीषुणा नो चेत् सर्व्वं नंक्ष्यतीत्यालोच्य यथोचितमाचरणीयमिति व्याख्यायितमिति ॥ ७८ ॥

**Colophon.** श्रीमता जगदीशेन निर्म्मितः प्रीतये सताम् ।
रहस्यार्थप्रकाशोऽयं गीताशास्त्रे समासतः ॥
इति श्रीगीतारहस्यप्रकाशे श्रीजगदीशपञ्चाननभट्टाचार्य्यकृतेऽष्टादशोऽध्यायः ॥

**विषयः ।** श्रीमत्भगवद्गीताया व्याख्यानम् ॥

---

**No. 258.** भागवतदशमस्कन्धकतिपयश्लोकविचारः. By चतुर्भुजभट्टाचार्य्यः Substance, country-made paper, $17 \times 2\frac{1}{2}$ inches. Folia, 43. Lines, 7 on a page. Extent, 1,354 çlokas. Character, Bengali. Date, Sk. 1757. Place of deposit, District Bā̃kuḍā, Visnupura, Pandita Raghurāma Tarka-ratna. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीश्री रामः ।
ईश्वरं परमं कृष्णं सच्चिदानन्दविग्रहम् ।
अनादिमादिगोविन्दं सर्व्वकारणकारणम् ॥
सीतानाथं घनश्यामं भक्ताभीष्टप्रदं हरिम् ।
वन्दे नृसिंहरूपं तं लोकत्रयावतरिं प्रभुम् ॥
कृष्णद्वैपायनप्रोक्ता यास्ते सात्वतसंहिता ।
किञ्चिद्विचारं तस्यास्तु प्रवक्ष्ये चतुर्भुजः ॥

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥
वाचालं बहुभाषिणं करोतीत्यर्थः । आलाटौ कुत्सिते बहुभाषिणि इति सूत्रे बहुशब्दस्यापाठत्वात् प्राप्तः प्राप्यभावो व्यभिचारत्वात्र भूतः । वस्तुत औचित्यात् बहुभाषिणि आलः अतएव वाचालो बलवान् दिने दिनपते-रित्यादि दृश्यते । इत्यादि ।

**End.** तृतीयस्कन्धे अभेदोपासनायां पुनरुत्पत्तिरिति सिद्धान्तः । भगवान् स्वयमि-त्युक्तं तर्हि कलावतीर्णाविति सम्बोधनं नरनारायणाद्दृष्टीतीश्वरवाक्यञ्च कथं सङ्गतम् । स्वयं त्वमाम्यातिशयस्त्वधीशः कृष्णमित्युक्तं तस्मिन्नसाम्यातिशये कृष्णे कथमस्य रमे तमन्तिमे इत्यादेशः सम्भवेत् । उ । अहं युवयोरर्ज्जुन-स्याहङ्कारशमनार्थं मायाविना कृष्णेनैतत् सर्व्वं दर्शितं रूपान्तरेणोक्तमेवेति ॥०

**Colophon.** इति श्रीभवानीचरणविद्यालङ्कारभट्टाचार्य्यात्मज-श्रीचतुर्भुजभट्टाचार्य्यकृत दशमस्कन्धकतिपयश्लोकविचारः समाप्तः ॥ ० ॥ श्रीरामो जयति ॥
शकाब्दाः १७५१ ।

**विषयः ।** भागवतदशमस्कन्धीयकतिपयश्लोकानां व्याख्यानं तात्पर्य्यनिर्णयश्च ॥

---

**No. 259.** भागवतव्याख्यालेशः. By गोपालचक्रवर्त्ती. Substance, country-made paper, 16×3 inches. Folia, 99. Lines, 7 on a page. Extent, 3,032 çlokas. Character, Bengali. Date, ? Place of deposit, Visnupura, Mādhavagañja, District Vāṅkuḍā, Vaikuṇṭhanātha Bhaṭṭācāryya. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ बालगोपालाय नमः ।
सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥
यं ब्रह्म वेदान्तविदो वदन्ति
परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा
तस्मै नमो विघ्नविनायकाय ॥
एतत् पद्यं टीकाकृतव्याख्यातत्वात् गायत्र्या च समारम्भ इत्यादि पुराण-वचनविरुद्धत्वाच्च श्रीभागवतस्य न । किन्तु गौड़ीयपुस्तकस्यादौ सर्व्वत्र विद्यते

इति व्याख्यायते । तस्मै विघ्नविनायकाय नम इत्युत्थानमेव । किञ्च विघ्नन्ति स्वरूपानन्दैश्वर्य्यादिमिति विघ्नः संसारः तं विनयति खण्डयतीति विघ्नविनायकः श्रीहरिस्तस्मै इति वाक्यार्थः तमेव नानावादिमतेन समुच्चिनोति यमिति वेदान्तविदो यं ब्रह्मेति वदन्ति ब्रह्मैव सदित्यादि श्रुतेः । इत्यादि ।

**End.** यदुक्तं नारदं प्रति ब्रह्मणा द्वितीये ।

यथा हरौ भगवति नृणां भक्तिर्भविष्यति ।

सर्व्वात्मन्यखिलाधार इति सङ्कल्पवर्णनेति ॥

प्रथमस्कन्धे च धर्म्मः प्रोज्झितकैतव इत्यस्य व्याख्याने प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इति स्वामिपादैरुक्तं तथापि यदत्र कैवल्य एकप्रयोजनमित्युच्यते तन्निरन्तरं भगवति निष्कामतया भक्तिं कुर्व्वतां अनिच्छतामपि मुक्तिरनायासेन भवति । यदुक्तं तृतीयस्कन्धे देवहूतिं प्रति कपिलेन ।

हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमन्वीं प्रयुङ्क्ते ।

इति मुक्तेः पर्य्यवसानत्वादेवमुक्तं भक्तिरसिकानां पुनस्तदंशे प्रयत्नाभाव एव तथापि भक्तेर्माहात्म्यमिति विचित्रमिति सर्व्वोत्कृष्टतया भक्तिरेवात्र प्राचुर्य्येण वर्ण्यते इति । अतस्तृतीये तत्रैवोक्तम् ।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।

जरयत्याशु या कोषं निगीर्णमनलो यथा ॥ इति ॥ ०॥

जयति श्रीपरमानन्दो गोविन्दो भक्तवत्सलः ।

यन्मयीतत्सुखमात्रेण स्फुरन्ति सकला गुणाः ॥

**Colophon.** इति श्रीमयघटवन्द्य श्रीगोपालचक्रवर्त्तिविरचितो द्वादशस्कन्धव्याख्यालेशः समाप्तः ॥ * ॥

**विषयः ।** श्रीमद्भागवतस्य संक्षेपेण व्याख्यानम् ।

---

**No. 260.** भारतसावित्री. By व्यासदेवः. Substance, country-made paper, 18×2 inches. Folia, 6. Lines, 3 on a page. Extent, 72 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Usthi, Paṇḍita Navakiçora Tarkācāryya. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । अथ भारतसावित्री । धृतराष्ट्र उवाच ।

ब्रूहि सञ्जय यद्वृत्तं युद्धं तेषां महात्मनाम् ।

कुरूणां पाण्डवानाञ्च सम्प्रवृत्ते महाहवे ॥ इत्यादि ।

End. प्राणिनां पापमुक्त्यर्थं प्रबन्धं च विभूतये ।
रचितं वामदेवेन प्राणिनां पापमुक्तये ॥

Colophon. इति वामदेवेन भाषिता भारतसावित्री समाप्ता ॥

विषयः । संक्षेपेण कुरुपाण्डवयुद्धवर्णनात्मकोऽयं ग्रन्थः ।

---

**No. 261.** भारविटीका (सुजनतोषकरी). By रामचन्द्रः. Substance, country-made paper, $22 \times 2\frac{1}{2}$ inches. Folia, 16. Lines, 4 on a page. Extent, 424 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, old. Prose. Incorrect.

Beginning. ॐ नमो गणेशाय ।
आनम्य सौम्यपदपद्ममनन्यभक्त्या
श्रीमद्गुरोर्निखिलतीर्थविचारबुद्धेः ।
श्रीरामचन्द्र इति नाम दधद्द्विजोऽहं
टीकामिमां सुजनतोषकरीं करोमि ॥
सन्तः सन्तोषवन्तो ननु वचसि परे शास्त्रसिद्धे प्रसिद्धे
यत्नादस्मात् कृतायामिह भवतु भवत्सृष्टिपीयूषवृष्टिः ।
मूढाहङ्कारमूढाः सरसविरसा कारणान्माद्य जाता
आनन्दो मे विना वः कथमिह विषये सम्भविष्यन्ति भव्याः ॥
इयं शिष्यममूढस्य हिताय विहिता मया ।
× × × × × × × × × × × ॥
श्रियः ॥ कुरवो जनपदाः ॥ इत्यादि ।

End. दिनादौ दिनारम्भे इत्यनेन लक्ष्म्याश्चिरकालावस्थानं सूचितम् । दिनकृतं सूर्य्यमिव त्वां लक्ष्मीः सम्पत् शोभा च भूयः पुनरपि समभ्येतु । आशिषि लोट् । अत्र प्रतिसर्गान्ते लक्ष्मीशब्दोऽभ्युदयसूचकः कविना प्रयुक्तः । स च न दोषाय । यदाह दण्डी । कविभावकृतं यत्तु इत्यादि ॥ ० ॥ किरातश्चार्ज्जुनश्च किरातार्ज्जुनौ अभ्यर्हितत्वात् किरातस्य पूर्व्वनिपातः तमधिकृत्य कृतं काव्यं किरातार्ज्जुनीयम् । तदधिकृत्य कृतो ग्रन्थ इतीयः । काव्यमिति कव वर्णने कव्यतेऽनेनेति बाहुलकात् करणे ण्यत् । यद्वा कवेः कर्म्म काव्यं ब्राह्मणादित्वात् ष्यञ् । महच्च तत् काव्यञ्चेति महाकाव्यम् । तत्र प्रथमः सर्गः आद्योऽध्यायः विश्रान्तिस्थानमिति ॥ * ॥

**Colophon.** इति श्रीशिवसिंहात्मजमदसिंहकृतायां किरातार्ज्जुनीयटीकायां प्रथमः सर्गः । अतःपरं खण्डितम् ॥

**विषयः ।** भारविकृतस्य किरातार्ज्जुनीयकाव्यस्य व्याख्यानम् । अत्र च प्रथमसर्गमात्रं वर्त्तते ।

---

**No. 262.** भास्वतीवृत्तिः. By कुवेरः. Substance, country-made paper. 15 × 2½ inches. Folia, 8. Lines, 7 on a page. Extent, 217 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha. Kāṭihālī, Paṇḍita Parāṇacandra Tarkālaŋkāra. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य भानुं प्रहनाथमाद्यं
श्रीकाञ्जिविल्वीय-कुवेरशर्म्मा ।
निर्म्माति भास्वत्यभिधानशास्त्रे
व्याख्यां सुबोधामबुधोपकर्त्रीम् ॥
उक्तस्य च विसम्वादात् त्यक्त्वा तत् कर्म्मसम्भवम् ।
न्यायागतं स्वयं न्याय्यं क्रियते हरिचन्दमा ॥ इत्यादि ।

**End.** अश्विन्यादौ नक्षत्रे विष्कुम्भादौ योगगणने चैकान्तरेण लक्षयोगावागच्छतः । (?) तदा परदिनगणनायामर्कोनचन्द्रात्मुवचसमेवं रवीन्दोर्युक्तिनस्य योगाः । इति कर्म्मत्रये कृते यः श्रीरामचन्द्राय नमः ॥

**विषयः ।** शतानन्दकृतभास्वतीनामकज्योतिषग्रन्थस्य व्याख्यानम् ।

---

**No. 263.** भिन्नतत्त्वम्. By श्रीकण्ठतीर्थः. Substance, country-made paper, 18 × 4½ inches. Folia, 82. Lines, 6 on a page. Extent, 2,029 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

स्वेच्छासृष्टिविधायिनीं परचितां स्वानन्दरूपां भुवां
वन्दे तां परदेवतां प्रतिजनुःसंसेवितां सर्व्वदा ।

यज्ज्ञानोद्भवजन्मकर्म्मनिधनं यत्प्रोतमेतत् जगत्
या सर्व्वान्तरवस्थिता न विदिता सच्चात्मलक्ष्या परम् ॥
वन्दे वेदान्तमुख्यश्रुतकृतिमखिलश्रीगुरून् शान्तरूपान्
नाम्नार्थेनापि सत्यान्वयत इह सदा श्रीमहादेवतीर्थान् । (?)
ब्रह्मैक्याद्भुततत्त्वमत्यूनधिगतमननान् मुक्तिभृते प्रभूतान्
नानाविद्यादिदानाधिकतरगुरुतान् नष्टदुर्दण्डकामान ॥
पूर्व्वाचार्य्यमतं वीक्ष्य तथैव गौरवं मतम् ।
भिक्षुतत्त्वं मदुग्राह्यं वक्ति श्रीकण्ठभिक्षुकः ॥   इत्यादि ।

End.   यतिपुत्रस्य पितुर्मरणे सन्निकृष्टश्चेत् वपनपूर्व्वकं स्नात्वा पूर्व्ववत् सर्व्वं कुर्य्यात् असन्निकृष्टश्चेत् सिद्धिवार्त्तां श्रुत्वा वपनानन्दादिपूर्व्वकं श्राद्धादद्यां नारायणबलिं दद्यात् ॥
ब्रह्मात्मैक्यविधायिनी भुवनतुर्व्वेदप्रवेष्टोज्ज्वला
प्रांशुस्वांशुप्रकाशिताखिलजगद्घोरान्धकारापि या ।
मायामुग्धमहेशसाधवविधिन्यस्ताङ्घ्रितन्त्रात्मका
श्रीविद्याखिलमोहमर्द्दनपरा वर्व्वर्त्ति सर्व्वोपरि ॥ * ॥

Colophon.   इति श्रीपरमहंसपरिव्राजकाचार्य्य—श्रीमहादेवतीर्थचरणारविन्दमकरन्दपानानन्दान्तःकरण-श्रीकण्ठतीर्थकृतं भिक्षुतत्त्वं सम्पूर्णम् ।

**विषयः ।** सन्न्यासस्याधिकारित्वानधिकारित्वादिनिरूपणम् । सन्न्यासाधिकारिणः पूर्व्वाह्नकृत्यादिनिरूपणम् । साग्निकनिरग्निकभेदेन सन्न्यासविधिः । सन्न्यासिनां कर्त्तव्याकर्त्तव्यत्याज्यात्याज्यादिनिरूपणञ्च ।

---

**No. 264. मत्स्यपुराणम् .** Substance, country-made paper, 13×6 inches. Folia, 440. Lines, 10 on a page. Extent, 14,300 çlokas. Character, Bengali. Date, ? . Place of deposit, Tamluk, Kelomāl, Bābu Amaranātha Guha. Appearance, tolerable. Verse. Incorrect.

**Beginning.**   ॐ नमो गणेशाय ।
प्रचण्डताण्डवाटोपप्रक्षिप्तोत्क्षिप्तदिग्गजाः ।
भवन्तु विघ्नभङ्गाय भवस्य भवतां भुजाः ॥

पातालादुत्पतिष्णोर्मकरवसतयो यस्य पुच्छाभिघाता-
दूर्ध्वं ब्रह्माण्डखण्डव्यतिकरविहितव्यत्ययेनापतन्ति ।
विष्णोर्मत्स्यावतारे सकलवसुमतीमण्डलं व्यश्नुवान-
स्तस्यास्योदीरितानां ध्वनिरपहरतादश्रियं वः श्रुतीनाम् ॥
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
अजोऽपि यः क्रियायोगान्नारायण इति स्मृतः ।
त्रिगुणाय त्रिवेदाय नमस्तस्मै स्वयम्भुवे ॥
सूतमेकाग्रमासीनं नैमिषारण्यवासिनः ।
मुनयो दीर्घसत्रान्ते पप्रच्छुर्दीर्घसंहिताम् ॥ इत्यादि ।

**End.** कल्पानुकीर्त्तनन्तद्वदन्यानुक्रमणन्तथा ।
एतत् पवित्रं मात्स्यीयमेतत् कीर्त्तिविवर्द्धनम् ।
एतद्धि सर्व्वमाङ्गल्यमेतत् पापहरं शुभम् ॥
यस्मात् पुराणादपि पादमेकं
पठेत्तु यः + + + + ।
नारायणस्यास्पदमेति नून-
मनन्तवाग्यत्सुखानि भुंक्ते ॥ * ॥

**Colophon.** इति मत्स्यपुराणं समाप्तम् ॥

**विषयः ।** प्रथमाध्याये मत्स्यरूपस्य कारणादिनिरूपणम् । २ ये ब्रह्माण्डदलननिरूपणम् । ३ ये चतुर्मुखोत्पत्तिनिरूपणम् । ४ र्थे दक्षाद्युत्पत्तिनिरूपणम् । ५ मे देवादिसृष्टिनिरूपणम् । ६ ष्ठे कश्यपान्वयनिरूपणम् । ७ मे मदनद्वादशीनिरूपणम् । ८ मे सर्व्वाधिपत्यादिनिरूपणम् । ९ मे मन्वन्तरादिनिरूपणम् । १० मे वैण्याभिभवादिनिरूपणम् । ११ शे बुधसङ्गमादिनिरूपणम् । १२ शे सूर्य्यवंशानुकीर्त्तनम् । १३ शे गौरीनामाष्टशतकम् । १४ । १५ शयोः पितृवंशानुकीर्त्तनम् । १६ शे श्राद्धकालनिरूपणम् । १७ शे साधारणाभ्युदयनिरूपणम् । १८ शे सपिण्डीकरणकालादि-निरूपणम् । १९ शे श्राद्धानुगमकालनिरूपणम् । २० शे श्राद्धमाहात्म्यम् । २१ शे पितृमाहा-त्म्यम् । २२ शे श्राद्धकालः । २३ शे सोमोपचारः । २४ शे सोमवंशानुकीर्त्तनम् । २५—४१ शेषु ययातेरुपाख्यानम् । ४२ । ४३ शयोः यदुवंशनिरूपणम् । ४४ शे कम्बरशापः । ४५ शे सोम-वंशपुरुवंशकीर्त्तनम् । ४६ शे अग्निवंशकीर्त्तनम् । ४७ शे योगमाहात्म्यम् । ४८ शे पुराणानुक्रमः । ४९ शे नक्षत्रपुरुषव्रतम् । ५० शे आदित्यशयनव्रतम् । ५१ शे रोहिणीचन्द्रव्रतं, तडागविधिश्च ।

५२ शे वृक्षोत्सवः । ५३ शे सौभाग्यशयनव्रतम् । ५४ शे अगस्त्योत्पत्तिपूजादिनिरूपणम् । ५५ शे अनन्तव्रततृतीयाव्रतादिनिरूपणम् । ५६ शे रसकल्याणीव्रतम् । ५७ शे आर्द्रानन्दकरीतृतीया-निरूपणम् । ५८ शे चन्द्रादित्योपरागकल्पः । ५९ तमे सप्तमीस्नानम् । ६० तमे भविष्यभीमद्वादशी । ६१ तमे अनङ्गव्रतम् । ६२ तमे अशून्यशयनव्रतम् । ६३ तमे अङ्गारव्रतम् । ६४ तमे कल्याणसप्तमी-व्रतम् । ६५ तमे शर्करासप्तमीव्रतम् । ६६ तमे कमलसप्तमीव्रतम् । ६७ तमे मन्दारसप्तमीव्रतम् । ६८ तमे शुभसप्तमीव्रतम् । ६९ तमे विशोकद्वादशीव्रतम् । ७० तमे पर्व्वतप्रदानादिनिरूपणम् । ७१ तमे वैशम्पायनीयशान्तिविधानम् । ७२ तमे ग्रहस्वरूपाख्यानम् । ७३ तमे शिवचतुर्दशीव्रतम् । ७४ तमे सर्व्वफलमाहात्म्यम् । ७५ तमे संक्रान्त्युद्यापनविधिः । ७६ तमे विभूतिद्वादशीव्रतम् । ७७ । ७८ तमयोः षष्ठीव्रतमाहात्म्यम् । ७९—८६ तमेषु प्रयागमाहात्म्यम् । ८७ तमे भुवनकोष-निरूपणम् । ८८ तमे ऐरावतीवर्णनम् । ८९ तमे हिमवद्वर्णनम् । ९०—९२ तमेषु आश्रम-वर्णनम् । ९३ तमे जम्बुद्वीपवर्णनम् । ९४—९६ तमेषु सप्तद्वीपवर्णनम् । ९७ तमे ध्रुवप्रशंसा । ९८ तमे देवगृहवर्णनम् । ९९ । १०० तमयोः त्रिपुरोपाख्यानम् । १०१ तमे दुःस्वप्नदर्शनम् । १०२ तमे ईश्वरस्तवः । १०३ तमे रथप्रयाणनिरूपणम् । १०४ तमे त्रिपुरदाहः । १०५—११० तमेषु अपद्वारादिनिरूपणम् । १११ तमे श्राद्धपरिकीर्त्तनम् । ११२ तमे मन्वन्तरकीर्त्तनम् । ११३—११५ तमेषु देवासुरसंग्रामादिनिरूपणम् । ११६ तमे तारकजन्मादिनिरूपणम् । ११७ तमे कुमारसम्भवः । ११८—१२० तमेषु देव्यास्तपोवनगमनादिनिरूपणम् । १२१ तमे देवासुरसंग्रामः । १२२ तमे तारक-वधः । १२३—१२५ तमेषु नरसिंहप्रादुर्भावः । १२६—१३१ तमेषु पद्मोद्भवः । १३२—१३८ तमेषु तारकामययुद्धादिनिरूपणम् । १३९ तमे अन्धकवधादिनिरूपणम् । १४० तमे वाराणसी-माहात्म्यादिनिरूपणम् । १४१—१४४ तमेषु अविमुक्तेश्वरमाहात्म्यादिनिरूपणम् । १४५—१४८ तमेषु अमरेश्वरमाहात्म्यम् । १४९ तमे नर्म्मदामाहात्म्यादिनिरूपणम् । १५० तमे शूलतीर्थवर्णनम् । १५१ । १५२ तमयोः नर्म्मदामाहात्म्यादिनिरूपणम् । १५३ । १५४ तमयोः प्रवरानुकीर्त्तनम् । १५५ तमे ऋषिवंशकीर्त्तनम् । १५६ तमे वंशानुकीर्त्तनादिः । १५७ तमे पराशरवंशकथनम् । १५८ तमे अगस्त्यवंशकथनम् । १५९ तमे धर्म्मवंशानुकीर्त्तनम् । १६० तमे पितृगाथानुकीर्त्तनम् । १६१ तमे उभयमुखीदानम् । १६२ तमे कृष्णाजिनप्रदानम् । १६३ तमे वृषलक्षणम् । १६४—१६७ तमेषु सावित्र्युपाख्यानम् । १६८ तमे सहायसम्पत्तिनिरूपणम् । १६९—१७७ तमेषु राजधर्म्मादि-निरूपणम् । १७८—१८० तमेषु अद्भुतशान्तिः । १८१ । १८२ तमयोः वृक्षोत्पातादिनिरूपणम् । १८३ तमे स्त्रीप्रसवादिनिरूपणम् । १८४ । १८५ तमयोः मृगपक्षिविकृतादिनिरूपणम् । १८६ तमे यात्रानिमित्तादिनिरूपणम् । १८७ तमे स्वप्नाध्यायः । १८८ तमे मङ्गल्याध्यायः । १८९—१९१ तमेषु वामनप्रादुर्भावः । १९२ । १९३ तमयोः वराहप्रादुर्भावः । १९४ । १९५ तमयोः अमृतमन्थनम् । १९६ तमे वास्तुभूतोद्भवः । १९७ तमे एकाशीतिपदनिर्णयः । १९८ तमे वास्तुवेधनिर्णयः । १९९ तमे गृहनिवेशः । २०० तमे गृहप्रवेशः । २०१ तमे देवतानुकीर्त्तनम् । २०२ । २०३ तमयोः मत्स्येश्वर-

कीर्त्तनम् । २०४—२०६ तमेषु प्रतिमालक्षणम् । २०७—२११ तमेषु अधिवासादिनिरूपणम् । २१२ तमे आचिराजनिरूपणम् । २१३ । २१४ तमयोः तुलापुरुषदानादिनिरूपणम् । २१५ तमे कन्यादिनिरूपणमेति ।

---

**No. 265. मथुरामाहात्म्यम्.** By **रूपगोस्वामी.** Substance, country-made paper, 8×5 inches. Folia, 21. Lines, 11 on a page. Extent, 597 çlokas. Character, Bengali. Date, ? Place of deposit, Visṇupura, District Vā̃kuḍā, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** मथुरामाहात्म्यम् ॥

हरिरपि भजमानेभ्यः प्रायो मुक्तिं ददाति न तु भक्तिं ।
विहिततदुन्नतसत्त्वां मथुरे धन्यां नमामि त्वाम् ॥
धन्यानां हृदयानन्दपदं संश्रूयते मुदा ।
माहात्म्यं मथुरापूर्य्याः सर्व्वतीर्थशिरोमणेः ॥
तथाह्या पापहारित्वं आदिवाराहे ।
विंशतिर्योजनानान्तु माथुरं मम मण्डलम् ।
यत्र तत्र नरः स्नातो मुच्यते घोरकिल्बिषैः ॥
सर्व्वधर्म्मविहीनानां पुरुषाणां दुरात्मनाम् ।
नरकाग्निहरा देवी मथुरा पापघातिनी ॥ इत्यादि ।

**End.** मथुरामहातीर्थानि ।

विश्रान्तिरसिकुण्डञ्च वैकुण्ठो ध्रुव एव च ।
कृष्णगङ्गा चक्रतीर्थं सरस्वत्याश्च सङ्गमम् ॥
चतुःसमुद्रिकः कृष्णो गोकर्णाख्यः शिवस्तथा ।
गोवर्द्धनं नन्दग्रहं रामक्रीड़नकं तथा ॥
वनानि द्वादश तथा सदा तीर्थानि माथुरे ।
अथ माथुरभूखण्डे पूजितो हि देववरः ॥
नारायणान्यपर्य्यायः केशवो मध्यमस्थितः ।
स्वयम्भूः पद्मनाभश्च दीर्घविष्णुर्गतश्रमः ॥
गोविन्दे हरिवाराह इति माथुरदेवता ।
मथुराख्यमहात्म्यं श्रवणीयं महाद्भुतम् ॥

× × गोपालतापन्यामप्युदाहृतं कीर्त्तितम् ।
तीर्थान्युक्तानि भूरीणि पुराणेष्वत्र माथुरे ॥
ख्यातान्येवाधुना ते च लिखितानीह कानिचित् ॥ * ॥

Colophon. इति श्रीमद्रूपगोस्वामिविरचितं श्रीमन्मथुरामाहात्म्यं समाप्तम्

विषयः। मथुराया माहात्म्यनिरूपणम्। तत्र कर्त्तव्यकर्म्मादिनिरूपणञ्च

---

**No. 266. मधुमती. By नृसिंहकविराजः.** Substance, country-made paper. 16 × 2 inches. Folia, 169. Lines, 7 on a page. Extent, 5,586 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Bābu Bhagavāncandra Dāsa Kavirāja. Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।

ईशमनीशं कारणमकारणं व्यक्तमव्यक्तम् ।
आदिमनादिं शाश्वतमशाश्वतं गोपमच्युतं वन्दे ॥
आराधिता द्विजवरैः फलदा भवेद्या
संपूजितानिरसदा च सदाशिभिर्या ।
निःशेषदुःखशमनाय शिवा सुवर्णा
सा सर्व्वदा मधुमती विबुधैरुपास्या ॥
यद्यपि सुमनोवृन्दे नन्दति वन्द्यो सदालिरामोदैः ।
तदपि कदाचित् सुमते मन्दं कुन्दं न किं भजते ॥
हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते ॥
ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ॥
हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत् ॥

नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥
ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ इत्यादि ।

End. स्वल्पाल्पगन्धचूर्णं दद्याच्च षड्गुणं भूयः ।
किन्तु ज्वालायां तीव्रायां ज्वलति गन्धके वह्निः ॥
तेन रससंक्षयः स्यात् तदनु क्षिप्रं रसाश्रयं भाण्डम् ।
दंशनेन गृहीत्वा निकटस्थगोमये न्यसेद्धावौ ॥
एवं रसं नियुञ्ज्यात् प्रतिष्ठा षड्गुणरससिन्दूरस्य ॥

Colophon. – इति मधुमत्यां रसमूर्च्छाधिकारः । अत्रैव पतितमास्ते । इति मधुमती समाप्ता ।

**विषयः ।** अत्र प्रथमं ज्वरादिरोगाणां चिकित्साविधिः । ततो विविधभैषज्ययोगादिविधानम् । तत्र ज्वराधिकारे नवज्वरव्यवस्था । आमज्वरे षडङ्गादिविधिः । कस्तूरीभूषणरसविधानम् । बृहत्कस्तूरीभैरवरसविधानञ्च । अथ वातज्वरपित्तज्वरादिषु मुष्टियोगकथनम् । घनचन्दनादिविधानम् । नवाङ्गविधानम् । गुडुच्यादिविधानम् । पञ्चकोलविधानम् । आरग्वधविधानम् । स्वल्पकस्तूरीभैरवविधानञ्च । अथ सन्निपातचिकित्सा । तत्र अष्टाङ्गावलेहविधानम् । दशमूलविधानम् । चतुर्दशाङ्गविधानम् । अष्टादशाङ्गविधानम् । मुष्टियोगकथनञ्च । अथ जीर्णज्वरे भार्ग्यादिविधानम् । द्राक्षाद्यष्टादशाङ्गविधानम् । मुस्तकादिविधानम् । पथ्यापथ्यकथनञ्च । अथ विषमज्वराधिकारे, मधुकादिविधानम् । गुडपिप्पलीविधानम् । शुण्ठ्यादिविधानम् । मुष्टियोगकथनम् । भार्ग्यादिविधानम् । दारुव्यादिकथनञ्च । अथ तृतीयकचातुर्थकाधिकारे मुष्टियोगकथनम् । बृहद्गुडपिप्पलीविधानम् । महागुडपिप्पलीविधानम् । त्रिकत्रयादिचूर्णविधानम् । सुदर्शनविधानम् । सुदर्शनभैरवचूर्णकथनम् । ज्वरभैरवचूर्णकथनम् । पथ्यापथ्यकथनम् । मुष्टियोगकथनम् । क्षीरषट्पलघृतविधानञ्च । अथ रसप्रयोगः । तत्र नवज्वराधिकारे धूमकेतुरसविधानम् । शीतभञ्जीरसविधानम् । प्रचण्डरसविधानम् । उदकभञ्जीररसविधानम् । ज्वरमुरारिरसविधानम् । रसचूडामणिविधानम् । श्लेष्मकालानलविधानञ्च । अथ सन्निपाते रसचिकित्सा । तत्र स्वल्पसूचिकाभरणविधानम् । सन्निपातभैरवविधानम् । कम्पज्वरजीर्णज्वरयोः सर्व्वेश्वरलौहविधानम् । ज्वरान्तकरसकथनम् । मृतसञ्जीवनरसविधानम् । सौभाग्यवटिकाविधानम् । सन्निपातकालानलविधानम् । सूचिकाभरणविधानम् । चिन्तामणि-

रसविधानम् । वेतालरसविधानम् । महाज्वराङ्कुशविधानम् । स्वच्छन्दभैरवविधानम् । ज्वरा-
शनिरसविधानञ्च । अथ ज्वराधिकारे, अग्निकुमारविधानम् । रत्नगिरिरसविधानम् । पञ्चानन-
रसविधानम् । सञ्जीवनाभ्रविधानम् । सर्व्वज्वरहरलौहविधानम् । चातुर्थकारिरसविधानम् ।
विषमज्वरहरलौहविधानम् । बृहत्सुदर्शनचूर्णविधानम् । वसन्तमालतीरसविधानञ्च । अथ
ज्वराधिकारे तैलव्यवस्था । तत्र षट्कट्वरतैलविधानम् । अङ्गारकतैलविधानम् । बृहल्लाक्षादि-
तैलविधानम् । प्रसङ्गात् लोकनाथरसकथनम् । रसराजरसकथनम् । स्वल्पपिप्पल्याद्यतैल-
कथनम् । बृहत्पिप्पल्याद्यतैलकथनम् । रविसुन्दररसकथनम् । महाषट्कटुतैलकथनम् । अथ-
मङ्गलरसकथनम् । बृहद्द्राक्षादितैलविधानम् । प्रतापलङ्केश्वरविधानम् । वाड़वानलरसविधानम् ।
गुर्व्वाद्यतैलविधानम् । ताराविलासरसविधानम् । नवचादिवल्लिविधानम् । शम्भुरसविधानम् ।
शम्भुनाथरसविधानम् । गुड़वटिकाविधानम् । कालीयसूचिकाभरणविधानम् । अघोरनृसिंह-
रसविधानम् । ज्वरपार्श्वतीरसविधानम् । कालवारणरसविधानम् । प्रसङ्गात् नासाचिकित्सा-
कथनञ्च । अथ ज्वरातिसारचिकित्सा । तत्र धान्यशुण्ठीविधानम् । बिल्वपञ्चकविधानञ्च ।
अथ रक्तातिसारचिकित्सा । तत्र ह्रीवेरादिविधानम् । पयस्यादिविधानम् । उशीरादि-
विधानम् । धातक्यादिविधानम् । किरातादिविधानम् । कुटजलेहविधानम् । कनकसुन्दर-
रसविधानम् । करुणासागररसविधानम् । लोकनाथरसविधानम् । सिद्धप्राणेश्वरमोदक-
विधानम् । आनन्दभैरवरसविधानञ्च । अथ अतीसारचिकित्सा । तत्र रेचनपाचनादि-
विधानम् । धान्यशुण्ठ्यादिविधानम् । कञ्चटादिविधानञ्च । अथ रक्तातीसारे मुष्टियोगकथनम् ।
वत्सकादिविधानम् । कुटजादिविधानञ्च । अथ गुदभ्रंशरोगे मुष्टियोगकथनम् । कुटजपुटपाक-
विधानम् । बृहत्कुटजावलेहविधानम् । कुटजाष्टकविधानम् । स्वल्पगङ्गाधरचूर्णविधानम् ।
बृहद्गङ्गाधरचूर्णविधानम् । आनन्दरसविधानम् । आनन्दभैरवरसविधानम् । कनकचूर्ण-
विधानम् । अमृतार्णवरसविधानम् । मृतसञ्जीवनरसविधानञ्च । अथ ग्रहणीचिकित्सा । तत्र
मुष्टियोगकथनम् । भूनिम्बाद्यचूर्णविधानम् । पिप्पल्याद्यचूर्णविधानम् । पाठाद्यचूर्णविधानम् ।
मसूरघृतविधानम् । शुण्ठीघृतविधानम् । कल्याणगुड़विधानम् । कामचारमण्डूरविधानम् ।
कञ्चटलेहविधानम् । कल्याणगुड़कुष्माण्डविधानम् । मदनमोदकविधानम् । तत्र च रसप्रयोगः ।
ग्रहणीवज्रकवाटविधानम् । जातिफलाद्यवटिकाविधानम् । पानीयभक्तवटिकाविधानम् ।
लवङ्गाद्यचूर्णकथनम् । नायिकाचूर्णविधानम् । ग्रहणीशार्दूलचूर्णविधानम् । नारायणचूर्ण-
विधानम् । ग्रहणीमिहिरतैलविधानम् । कुटजलौहविधानम् । गगनसुन्दररसविधानम् । पञ्चा-
मृतपर्प्पटीविधानम् । रसपर्प्पटीविधानम् । ग्रहणीगजेन्द्ररसविधानम् । विजयपर्प्पटीविधानम् ।
ताम्रयोगविधानम् । दुग्धवटिकाविधानम् । महागन्धकविधानम् । नृपवल्लभरसविधानम् ।
लवङ्गादिमोदकविधानञ्च । अथ अर्शोरोगचिकित्सा । तत्र मुष्टियोगकथनम् । पथ्यापथ्य-
विधानम् । माणिभद्रमोदकविधानम् । प्राणदागुड़िकाविधानम् । शूरणमोदकविधानम् । वट-

महाघृतादिविधानम् । कुब्जावलेहविधानम् । क्षारतोयविधानम् । अग्निमुखलौहविधानम् ।
ईश्वरमनलौहविधानम् । भल्लातकगुडविधानञ्च । अथ अग्निमान्द्यचिकित्सा । तत्र मुष्टि-
योगविधानम् । शार्दूलकाञ्जिकविधानम् । भास्करलवणविधानम् । अग्निमुखचूर्णविधानम् ।
वडवेश्वरवटिकाविधानम् । तिक्तपाकवटिकाविधानम् । बृहदग्निमुखचूर्णविधानम् । रामबाण-
विधानम् । अग्निकुमारविधानम् । स्वल्पाग्निकुमारविधानम् । महोदधिवटिकाविधानम् । गुप्त-
महोदधिवटिकाविधानम् । सूचिकामुखरसविधानम् । महाशङ्खवटिकाविधानम् । महापाशु-
पतरसविधानम् । क्रव्यादविधानम् । सामान्याजीर्णे मुष्टियोगकथनञ्च । बृहद्भास्कररसविधानम् ।
स्वल्पभास्कररसविधानम् । दीपनावलेहविधानम् । विसूचीरोगे मुष्टियोगकथनञ्च । अथ क्रिमि-
रोगचिकित्सा । तत्र क्रिमिघातिवटिकाविधानम् । सुधावतीवटिकाविधानम् । क्रिमिघाति-
रसविधानम् । विडङ्गादिघृतविधानम् । क्रिम्यादिगुडविधानम् । पलाशादिवटिकाविधानम् ।
मुष्टियोगविधानम् । मण्डूरवटकविधानम् । पुनर्नवातैलविधानम् । पुनर्नवामण्डूरविधानम् ।
वज्रवटकमण्डूरविधानञ्च । अथ पाण्डुरोगचिकित्सा । तत्र पाण्डुसूदनरसविधानम् । धात्री-
लौहविधानञ्च । अथ रक्तपित्तचिकित्सा । तत्र मुष्टियोगकथनम् । पथ्यापथ्यविधानम् ।
वासकघृतविधानम् । कामदेवघृतविधानम् । कुष्माण्डखण्डविधानम् । वासाकुष्माण्डखण्ड-
विधानम् । त्रिकत्रयाद्यलौहविधानम् । खण्डकाद्यलौहविधानञ्च । अथ यक्ष्मरोगचिकित्सा ।
तत्र मुष्टियागकथनम् । पथ्या:पथ्यविधानम् । लवङ्गादिचूर्णविधानम् । तालीशादिचूर्णविधानम् ।
पिप्पल्याद्यघृतविधानम् । छागलाद्यघृतविधानम् । च्यवनप्राशलेहविधानम् । स्वल्पमृगाङ्करस-
विधानम् । बृहन्मृगाङ्करसविधानम् । बृहच्चन्दनाद्यतैलविधानम् । मध्यमचन्दनाद्यतैलविधानम् ।
पयःशर्करविधानम् । बलाद्यघृतविधानम् । यक्ष्मान्तकलौहविधानम् । वसन्ततिलकरस-
विधानम् । रत्नगर्भरसविधानम् । सर्व्वाङ्गसुन्दररसविधानञ्च । अथ कासरोगचिकित्सा । तत्र
मुष्टियोगकथनम् । पथ्यापथ्यविधानम् । कण्टकारिघृतविधानम् । समशर्करचूर्णविधानम् ।
चन्द्रामृतरसविधानम् । शृङ्गाराभ्ररसविधानम् । वासावलेहविधानम् । अगस्त्यहरीतकीविधा-
नम् । ब्राह्मीहरीतकीविधानम् । आनन्दभैरवरसविधानम् । रसेन्द्ररसविधानम् । राज-
मृगाङ्कविधानम् । श्वासकासचिन्तामणिविधानञ्च । अथ हिक्काश्वासचिकित्सा । तत्र मुष्टियोग-
कथनम् । पथ्यापथ्यविधानम् । कुलत्थघृतविधानम् । भार्गीगुडविधानम् । सूर्य्यावर्त्तरस-
विधानम् । श्वासकुठाररसविधानम् । पिप्पल्याद्यलौहविधानम् । श्वासारिलौहविधानञ्च ।
अथ स्वरभेदचिकित्सा । तत्र मुष्टियोगकथनम् । पथ्यापथ्यविधानम् । ब्राह्मीघृतविधानम् ।
कण्टकारिघृतविधानम् । व्याघ्रीघृतविधानञ्च । अथारोचकरोगचिकित्सा । तत्र मुष्टियोग-
कथनम् । पथ्यापथ्यविधानम् । कलहंसकाञ्जिकविधानञ्च । अथ छर्दिरोगचिकित्सा । तत्र
मुष्टियोगविधानम् । चन्दनशारिवादिचूर्णविधानम् । कुमुदेश्वररसविधानम् । एलादिचूर्ण-
विधानम् । गङ्गाधररसविधानम् । वृषध्वजरसविधानम् । चन्दनतण्डुलावलेहविधानञ्च । अथ

तृष्णाचिकित्सा । तत्र मुष्टियोगकथनम् । अथ मूर्च्छारोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
अथ मदात्ययचिकित्सा । तत्र मुष्टियोगकथनम् । अथ दाहचिकित्सा । तत्र मुष्टियोगकथनम् ।
कृपानिधिरसविधानञ्च । अथ उन्मादचिकित्सा । तत्र मुष्टियोगकथनम् । सिद्धार्थलेपविधानम् ।
क्षीरकल्याणघृतविधानम् । महापैशाचिकघृतविधानम् । चैतसघृतविधानम् । शिवाघृत-
विधानञ्च । अथ अपस्मारचिकित्सा । तत्र मुष्टियोगकथनम् । महाचैतसघृतविधानम् । पञ्चगव्य-
घृतविधानम् । भूतभैरवरसविधानञ्च । अथ वातरोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
रेचनादिविधिः । कल्याणावलेहविधानम् । स्वल्परसोनपिण्डविधानम् । त्रयोदशाङ्गगुग्गुलु-
विधानम् । अश्वगन्धाघृतविधानम् । स्वल्पच्छागलाद्यघृतविधानम् । बृहच्छागलाद्यघृतविधानम् ।
दशमूलीतैलविधानम् । सैन्धवाद्यतैलविधानम् । बलाद्यतैलविधानम् । स्वल्पविष्णुतैलविधानम् ।
बृहद्विष्णुतैलविधानम् । हिमसागरतैलविधानम् । एलादितैलविधानम् । स्वल्पमाषतैल-
विधानम् । महामाषतैलविधानम् । बृहन्माषतैलविधानम् । कुब्जप्रसारणीतैलविधानम् ।
मध्यमनारायणतैलविधानम् । बृहन्नारायणतैलविधानम् । एकादशशतिकाप्रसारणीतैलविधानम् ।
महासुगन्धितैलविधानम् । तैलमूर्च्छादिविधिः । विजयभैरवतैलविधानम् । वातगजेन्द्ररस-
विधानम् । चन्द्रामृतलौहविधानम् । विडङ्गादिचूर्णविधानञ्च । अथ आमवातचिकित्सा ।
तत्र मुष्टियोगकथनम् । गुडूचीघृतविधानम् । अमृताद्यघृतविधानम् । गुडूचीतैलविधानम् ।
दशपाक-बलातैलविधानम् । पिण्डतैलविधानम् । बृहद्गुडूचीतैलविधानम् । कैशोरगुग्गुलु-
विधानम् । वातरक्तान्तकरसविधानञ्च । अथ ऊरुस्तम्भचिकित्सा । तत्र अष्टकट्वरतैलविधानम् ।
मुष्टियोगकथनञ्च । अथ शूलरोगचिकित्सा । तत्र मुष्टियोगकथनम् । विश्वादिपाचनविधानम् ।
बृहद्विश्वादिपाचनविधानम् । एरण्डसप्तकपाचनविधानम् । बीजपूरकघृतविधानम् । पिप्पली
घृतविधानम् । क्षीरमण्डूरविधानञ्च । अथ मधुमत्याः सूची । गुडमण्डूरविधानम् । सिता-
मण्डूरविधानम् । कल्पतरुरसविधानम् । शङ्खद्रावकविधानम् । शुण्ठीखण्डविधानम् । नारिकेल-
खण्डविधानम् । बृहन्नारिकेलखण्डविधानम् । नारिकेलामृतविधानम् । खण्डामलकीविधानम् ।
विद्याधराभ्रविधानञ्च । अथ उदावर्त्तरोगचिकित्सा । तत्र मुष्टियोगव्यवस्था । अथ गुल्मरोग-
चिकित्सा । तत्र मुष्टियोगकथनम् । गुल्मशार्दूलरसकथनम् । हिङ्ग्वादिचूर्णविधानम् । त्र्यूषणाद्य-
घृतविधानम् । क्षीरषट्पलघृतविधानम् । दन्तीहरीतकीविधानञ्च । अथ रक्तगुल्मरोगचिकित्सा ।
तत्र गुल्मकालानलरसविधानम् । अथ हृद्रोगचिकित्सा । तत्र मुष्टियोगकथनम् । अर्जुनघृत-
विधानञ्च । अथ मूत्रकृच्छ्ररोगचिकित्सा । तत्र मुष्टियोगकथनम् । शतावरीघृतविधानम् ।
कुसुमाकररसविधानम् । वसन्तकुसुमाकररसविधानञ्च । अथ मूत्राघातचिकित्सा । तत्र
मुष्टियोगव्यवस्था । धात्रीघृतविधानञ्च । अथ अश्मरीरोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
शरादिपञ्चमूलघृतविधानम् । कुशाद्यघृतविधानञ्च । अथ प्रमेहचिकित्सा । तत्र मुष्टियोग-
कथनम् । पञ्चकषायविधानम् । न्यग्रोधाद्यचूर्णविधानम् । सोमेश्वररसविधानम् । मेहमुद्गर-

रसविधानम् । दाडिमाद्यघृतविधानम् । वसन्तकुसुमाकररसविधानम् । कर्पूराद्यमोदक-
विधानम् । चन्द्रप्रभावटिकाविधानम् । वङ्गावलेहविधानम् । प्रमेहसेतुरसविधानम् । वरा-
दलनीवटिकाविधानम् । तारकेश्वररसविधानम् । इन्द्रवटिकाविधानम् । मेहमुद्गरवटिका-
विधानम् । अथ सोमरोगव्यवस्था । तत्र चिकित्साप्रकारः । अथ मेदोरोगव्यवस्था । तत्र
मुष्टियोगकथनम् । लौहरसायनविधानम् । अमृताद्यगुग्गुलुविधानम् । त्रिफलाद्यतैलविधानम् ।
अथ अङ्गदौर्गन्ध्यचिकित्सा । तत्र मुष्टियोगकथनम् । अथ उदररोगचिकित्सा । तत्र मुष्टियोग-
कथनम् । सामुद्राद्यचूर्णविधानम् । नारायणचूर्णविधानम् । अर्कलवणविधानम् । षट्पलघृत-
विधानम् । विन्दुघृतविधानम् । शोथोदरे भेदवटिकाविधानम् । त्रैलोक्यडम्बररसविधानम् ।
महावह्निरसविधानम् । नाराचरसविधानम् । अथ प्लीहरोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
मानगुडिकाविधानम् । अभयालवणविधानम् । रोहितकघृतविधानम् । चित्रकघृतविधानम् ;
महारोहितकघृतविधानम् । अथ शोथरोगचिकित्सा । तत्र मुष्टियोगकथनम् । क्षीरवटिका-
विधानम् । दुग्धवटिकाविधानम् । पुनर्नवाघृतविधानम् । मानकघृतविधानम् । स्थलपद्माद्य-
घृतविधानम् । शुष्कमूलाद्यतैलविधानम् । शैलाद्यतैलविधानम् । वृहद्दुग्धवटिकाविधानम् ।
दशमूलतैलविधानम् । कंसहरीतकीविधानम् । शोथशार्दूलतैलविधानम् । कटुकादिलौह-
विधानम् । अथ वृद्धिरोगचिकित्सा । तत्र मुष्टियोगविधानम् । शतपुष्पादिघृतविधानम् । अथ
गलगण्डचिकित्सा । तत्र मुष्टियोगकथनम् । तुम्बीतैलविधानम् । निर्गुण्डीतैलविधानम् ।
अथ गण्डमालाचिकित्सा । तत्र मुष्टियोगकथनम् । अथ श्लीपदचिकित्सा । तत्र मुष्टि-
योगकथनम् । कृष्णाद्यमोदकविधानम् । दण्डीघृतविधानम् । वृहत्सौरेश्वरघृतविधानम् ।
श्लीपदगजकेशरिरसविधानम् । नित्यानन्दरसविधानम् । कनकतैलविधानम् । अथ विद्रधि-
रोगचिकित्सा । तत्र मुष्टियोगकथनम् । अथ व्रणरोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
पद्माद्यतैलविधानम् । त्रिफलागुग्गुलुविधानम् । अमृतवटीगुग्गुलुविधानम् । जातिकाद्य-
घृतविधानम् । गौराद्यघृतविधानम् । विपरीतमल्लतैलविधानम् । व्रणराक्षसतैलविधानम् ।
अथ भग्नचिकित्सा । तत्र मुष्टियोगकथनम् । अथ नाडीव्रणचिकित्सा । तत्र मुष्टियोगकथनम् ।
अथ भगन्दरचिकित्सा । तत्र मुष्टियोगकथनम् । नवकार्षिकगुग्गुलुविधानम् । विष्यन्दनतैल-
विधानम् । अथ उपदंशचिकित्सा । तत्र मुष्टियोगकथनम् ; करञ्जाद्यघृतविधानम् । अथ शूक-
दोषचिकित्सा । तत्र मुष्टियोगकथनम् । अथ कुष्ठरोगचिकित्सा । तत्र मुष्टियोगकथनम् ।
पञ्चकषायविधानम् । पञ्चनिम्बविधानम् । एकविंशतिगुग्गुलुविधानम् । पञ्चतिक्तघृतविधानम् ।
महाभल्लातकविधानम् । सिन्दूराद्यतैलविधानम् । अर्कतैलविधानम् । मरीचाद्यतैलविधानम् ।
वृहन्मरीचाद्यतैलविधानम् । विषतैलविधानम् । सोमराजीतैलविधानम् । गलत्कुष्ठारियोग-
विधानम् । हरितालशुद्धिविधानम् । तालकेश्वररसविधानम् । महातालेश्वरविधानम् ।
अमृताङ्कुरलौहविधानम् । अथ शीतपित्तरोगचिकित्सा । तत्र मुष्टियोगकथनम् । अम्लपित्तरोगे

मुष्टियोगव्यवस्था । शतावरीघृतविधानम् । सुधायतीवटिकाविधानञ्च । अथ विसर्परोगचिकित्सा । तत्र मुष्टियोगकथनम् । पञ्चतिक्तघृतविधानञ्च । अथ मसूरिकाचिकित्सा । तत्र मुष्टियोग-विधानम् । खदिराष्टकविधानञ्च । अथ क्षुद्ररोगचिकित्सा । तत्र मुष्टियोगकथनम् । चाङ्गेरी-घृतविधानम् । मञ्जिष्ठाद्यतैलविधानम् । कुङ्कुमाद्यतैलविधानम् । हरिद्राद्यतैलविधानम् । गुञ्जा-तैलविधानम् । मध्यमभृङ्गराजतैलविधानम् । महाभृङ्गराजतैलविधानञ्च । अथ मुखरोग-चिकित्सा । तत्र मुष्टियोगकथनम् । कनकचूर्णविधानम् । पीतकचूर्णविधानम् । बृहत्खदिरादि-वटिकाविधानम् । वकुलाद्यतैलविधानम् । सहकारवटिकाविधानञ्च । अथ कर्णरोगचिकित्सा तत्र मुष्टियोगविधानम् । क्षारतैलविधानम् । दशमूलीतैलविधानम् । शम्बूकतैलविधानम् कुष्ठादितैलविधानञ्च । अथ नासारोगचिकित्सा । तत्र मुष्टियोगकथनम् । व्योषादिचूर्णविधानम् पुष्याद्यतैलविधानम् । चित्रकहरीतकीविधानम् । दूर्वातैलविधानञ्च । अथ चक्षूरोगचिकित्सा । तत्र मुष्टियोगकथनम् । बिल्वाञ्जनविधिः । षड़ङ्गगुग्गुलुघृतविधानम् । पटोलाद्यघृतविधानम् शशकघृतविधानम् । कुमारिका-वर्त्तिकथनम् । सुखावती वर्त्तिकथनम् । चन्द्रप्रभा-वर्त्तिकथनम् चन्द्रोदया-वर्त्तिकथनम् । नयनसुखा-वर्त्तिकथनम् । नयनाञ्जनविधानम् । त्रिफलाघृतविधानम् नृपवल्लभतैलविधानम् । महामृतलौहविधानञ्च । अथ शिरोरोगचिकित्सा । तत्र मुष्टियोग कथनम् । षड्बिन्दुतैलविधानम् । अपामार्गतैलविधानम् । शिरोवज्ररसविधानञ्च अथ स्त्रीरोग चिकित्सा । तत्र मुष्टियोगकथनम् । शीतकल्याणघृतविधानम् । शतावरीघृतविधानम् । कल्याण घृतविधानञ्च । अथ प्रदरचिकित्सा । तत्र मुष्टियोगकथनम् । अथ योनिव्यापच्चिकित्सा तत्र महाश्वगन्धाघृतविधानम् । अथ गर्भिणीचिकित्सा । तत्र मुष्टियोगकथनम् । गर्भविलास-रसविधानञ्च । अथ गर्भस्रावचिकित्सा । तत्र गर्भिणीकल्याणाभ्रविधानम् । भद्रोत्कटावलेह-विधानञ्च । अथ स्तनरोगचिकित्सा । तत्र श्रीपर्णीतैलविधानम् । मुष्टियोगकथनम् । काशीशतैल-विधानञ्च । अथ बालरोगचिकित्सा । तत्र मुष्टियोगकथनम् । बालचातुर्भद्रावलेहविधानम् । धातक्यवलेहविधानम् । पञ्चकोलावलेहविधानम् । लाक्षाद्यवलेहविधानम् । अश्वगन्धाघृत-विधानम् । अष्टमङ्गलघृतविधानञ्च । अथ विषरोगचिकित्सा । तत्र मुष्टियोगकथनम् । पाचन-स्वेदन-वमन-विरेकादिविधिः । दुग्धामयरसविधानञ्च । अथ वस्तिकर्मविधानम् । तत्र नस्य-धूम-रक्त-मोक्षणादिविधिः । अथ प्रकीर्णकाधिकारः । तत्र मानाध्यायः । गणाध्यायः । अथ ऋतु-चर्या । अथ वृष्याधिकारः । तत्र गोधूमाद्यघृतविधानम् । रतिवल्लभमोदकविधानम् । कामेश्वर-मोदकविधानम् । पूर्णचन्द्रमोदकविधानम् । कामाग्निसन्दीपनमोदकविधानम् । मदनमोदक-विधानम् । दुग्धवटीविधानम् । चन्द्रोदयरसविधानञ्च । अथ रसायनाधिकारः । तत्र अमृत भल्लातकविधानम् । खण्डाभ्रकविधानम् । पूगखण्डविधानम् । महाभ्रवटिकाविधानम् । शृङ्गाराभ्र कथनम् । मन्मथाभ्रकथनम् । चतुर्मुखरसकथनम् । पूर्णचन्द्ररसकथनञ्च । अथ धातूनां मारण-शोधनपुटीकरणपाचन स्वेदनादिविधिः । रससिन्दूरादिविधिश्च । इति शम् ॥

**No. 267.** मनःशिक्षाश्लोकः . By दासगोस्वामी . Substance, country-made paper, 14½ × 8½ inches. Folia, 3. Lines, 6 on a page. Extent, 46 çlokas. Character, Bengali. Date, ? Place of deposit, Āgartalā Vṛddhanagara Tripurā, Paṇḍita Mīneçvara Sārbbabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीश्रीकृष्णचन्द्राय नमः ।
गुरौ गोष्ठे गोष्ठालयिषु सुजने भूसुरगणे
स्वमन्त्रे श्रीनाम्नि व्रजनवयुवद्वन्द्वशरणे ।
सदा दम्भं हित्वा कुरु रतिमपूर्व्वामतितरा-
मये स्वान्त भ्रातश्चटुभिरभियाचे धृतपदः ॥ इत्यादि ।

**End.** मनःशिक्षादैकादशकवरमेतन्मधुरया
गिरा गायत्युच्चैः समधिगतसर्व्वार्थततयः । (?)
सयूथश्रीरूपानुग इह भवन् गोकुलवने
जनो राधाकृष्णातुलभजनरत्नं स लभते ॥

**Colophon.** इति श्रीमद्दासगोस्वामिविरचितो मनःशिक्षाश्लोकः सम्पूर्णः ॥

**विषयः ।** वैष्णवग्रन्थोऽयम् । अत्र च यदि श्रीकृष्णराधिकयोः सेवारत्नं लब्धुमिच्छसि तर्हि सगण-श्रीगौराङ्गरूपगोस्वामिप्रभृतिभिरनुष्ठितां सेवां कुरु इति मनः प्रति शिक्षाप्रदानम् ॥

---

**No. 268.** मनःशिक्षाश्लोकावलीटीका . By विश्वनाथचक्रवर्त्ती . Substance, country-made paper, 14½ × 4½ inches. Folia, 6. Lines, 9 on a page. Extent, 153 çlokas. Character, Bengali. Date, San 1245. Place of deposit, Āgartalā Vṛddhanagara Tripurā, Paṇḍita Mīneçvara Sārvvabhauma. Appearance, new. Prose. Generally correct.

**Beginning.** श्रीश्रीश्रीनित्यानन्दचैतन्यौ जयेताम् ।
निर्व्वीय साध्यं बहुसाधनानि
कुर्व्वन्ति विज्ञाः परमादरेण ।
श्रीरूपपादाब्जरजोऽभिषेकं
मन्ये हि चैतन्मम साधनानि ॥
कृपानुसारिणी सेवा मनसि क्रियते यदि ।
श्रीराधाकृष्णयोः कुञ्जे सिद्धरूपेण गम्यते ॥

स्वाभीष्टदेवधामवर्णनपूर्वकं मङ्गलरूपं श्रीरूपाविरूपितेश्वर्य्यज्ञानविचारकानु-
कूलभजनं दर्शयति गुराविति । इत्यादि

End. यूथेन सह श्रीरूपानुगो भवन् यः श्रीकुञ्जवने उभयोः सेवारतं स्वभवे
श्रीरूपस्यानुगतिं विना मुख्यकामानुगा न स्यात् यतो यूथेन सह श्रीरूपस्या-
नुसारिणीं सेवां कुर्व्वित्याशयः ।

Colophon. इति श्रीविश्वनाथचक्रवर्त्तिना विरचिता मनःशिक्षास्तोकावलीटीका समाप्ता ॥
समाप्तश्चायं ग्रन्थः ॥

विषय: । मनःशिक्षास्तोकावलीनामकवैष्णवग्रन्थस्य व्याख्यानम् ॥

---

No. 269. मधुमञ्जरी, (मनीषापञ्चकटीका). By बालगोपालेन्दुः. Substance, country-made paper, 12 × 5 inches. Folia, 13. Lines, 8 on a page. Extent, 214 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodal, District Mayamanasiṁha, Paṇḍita Harinātha Tarkabhūṣaṇa. Appearance, tolerable. Prose. Correct.

Beginning. श्रीमन्मङ्गलमूर्त्तये नमः ।
श्रीमन्मुनीन्द्रमानम्य जगन्नाथमुनिं गुरुम् ।
मनीषापञ्चकव्याख्या तन्यते मधुमञ्जरी ॥
तत्रादौ कथा निरूप्यते । इत्यादि ।

End. सर्व्वसिद्धो ब्रह्मविद्वरिष्ठः । सुरेन्द्रवन्दितपदं सुराः देवाः तेषामिन्द्रः स्वामी
प्रणमथस्तेन वन्दितं नमस्कृतं पदं पादो यस्य स तथा । नूनं सत्यं चास्मि-
न्नर्थे न संशयः ॥ एवं मम मनीषेति स्वरूपम् ।
मनीषापञ्चकस्यैवं कृता टीका मनोहरा ।
बालगोपालेन्दुनाम्ना मुनिना मधुमञ्जरी ॥

Colophon. इति मनीषापञ्चकव्याख्या सम्पूर्णा ।

विषय: । शङ्कराचार्य्यकृतस्य मनीषापञ्चकनामकस्य वेदान्तग्रन्थस्य व्याख्या ।

---

**No. 270.** मनोरमा. By रमानाथशर्म्मा. Substance, country-made paper, 13×4½ inches. Folia, 105. Lines, 4 on a page. Extent, 2,054 çlokas. Character, Bengali. Date, Sk. 1780. Place of deposit, District Tripurā, Parganā Nurnagara, grāma Pattana, Paṇḍita Tārānātha Çiromaṇi. Appearance, new. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । श्रीगुरवे नमः ।
सम्यक् प्रणम्य तां वाणीमानीय च सतां वचः ।
मनोरमा रमानाथशर्म्मणा परिनिर्म्मिता ॥
प्रायेण धातुवैषम्यात् सर्व्वेषां घूर्णते शिरः ।
या तत्क्रियायै प्रभवेत् सैव वृत्तिर्मनोरमा ॥
भूरिसूरिकृता वृत्तिर्भूयसी युक्तयुक्तिका ।
निषेवितुं धातवस्तस्यां न शक्यास्तेन मे श्रमः ॥
यो मत्परं प्रथयति प्रथितस्य नाम्ना
कस्यापि वा निजमनस्वसमीहया वा ।
उच्छिद्य नाम मम वीक्ष्य कृती समन्तात्
तस्यैव नश्यतितरां सुकृतं कृतञ्च ॥
भूसत्तायां सतो भावः प्रवृत्तिनिमित्तं सत्ता तस्याश्च सिद्धरूपाया अपि क्रियात्वम् । इत्यादि ।

**End.** परिहारस्तु पूर्व्ववत् भूधुराद्योरपरिसमाप्तत्वात् न वृत्तंकारणं (?) ततः कर्त्तां नार्च्चन्ति मोक्षमीम् । विक्रमणे परिविघ्नताः । ग्रन्थिमुद्रुपयितुं क्षुद्रा यशः । इति माघः ॥ इत्यादयोऽप्यनुसर्त्तव्या इति ॥

**Colophon.** इति वेदगर्भतर्काचार्य्यात्मज-राथिकुलप्रसूत-श्रीरमानाथशर्म्मणा विनिर्म्मितायां मनोरमायां कातन्त्रधातुवृत्तौ चुरादिविवरणं समाप्तम् ॥

**विषयः ।** नानाहृष्टान्तपूर्व्वकं कातन्त्रीयधातुगणवृत्तिकथनम् ॥

---

**No. 271.** मन्नपुरश्चरणम्. By गोविन्दकविकङ्कणः. Substance, country-made paper, 16×4½ inches. Folia, 5. Lines, 7 on a page. Extent, 140 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, District 24-Parganās, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

मौलं किमपि किशोरं निधाय हृदये पुरस्क्रियाचर्य्याम् ।
मन्त्राणामभितनुते श्रीगोविन्दकविकङ्कणाचार्य्यः ॥
यस्मात् पुरस्क्रियां कुर्य्यान्मन्त्रवित् सिद्धिकाङ्क्षया ।
जीवहीनो यथा देही सर्व्वकर्म्मसु न क्षमः ।
पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्त्तितः ॥ इत्यादि ।

**End.** चण्डितत्वात् शेषो नास्ति

**विषय:** । तत्र प्रथमं पुरश्चरणस्थानादिनिरूपणम् । ततो मालादिनिरूपणम् । पुरश्चरणविधिस्तत्प्रयोगादिश्चेति ।

---

**No. 272.** मन्त्ररत्नावली . By विद्याधरः . Substance, country-made paper, $12 \times 1\frac{1}{2}$ inches. Folia, 189. Lines, 5 on a page. Extent, 4,843 çlokas. Character, Bengali. Date, ? Place of deposit, Viṣṇupura, District Vāṅkuḍā, Candranārāyaṇa Bhaṭṭāçāryya. Appearance, old. Prose. Incorrect.

**Beginning.** (अस्य प्रथमपत्रत्रयाभावात् चतुर्थपत्रस्य प्रारम्भवाक्यं लिखितम् ॥) ये मन्त्रा भवन्ति ते स्थानभ्रष्टाः । ये मन्त्रास्त्रयोदशाक्षराः पञ्चदशाक्षरा वा ये मन्त्रास्ते विफलाः । चतुःशताक्षराण्यारभ्य सप्तत्यर्णा ये मन्त्रास्ते दृप्ताः । शताक्षरा ये मन्त्राः सार्द्धशताक्षरा वा ये मन्त्राः त्रिशताक्षरा वा ये मन्त्रास्ते निःस्नेहाः । सप्ततिवर्णाधिका ये मन्त्रास्ते पीडिताः ॥
दोषानिमानविज्ञाय यो मन्त्रं भजते जडः ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ इत्यादि ।

**End.** प्रवाले रचिता माला प्रयच्छेत् पुष्कलं धनम् ।
सौभाग्यं स्फाटिकी माला मौक्तिकैर्विहिता श्रियम् ॥
निर्म्मिता रौप्यमालाभिः कुरुते कीर्त्तिमक्षयाम् ।
एतैरेव विरचिता माला स्यान्मुक्तये नृणाम् ॥
योगास्तु अथ योगं प्रवक्ष्यामीत्यादि कालादिविवर्जिते इति श्लोकान्तग्रन्थेन मूलग्रन्थप्रतिपादितेन बोद्धव्याः । केवलं ग्रन्थविस्तृतिभयान्नेह लिखिताः ॥

वाच्यं न वाचा मनसा न गम्यं
ज्ञेयं परं यद्गुरुसेवयैव ।
ब्रह्मादिदेवस्थितिमितिसंस्तुतीयं
वन्दे मदस्रनुजं दैवतीयम् ॥
रामानुजो देशिकसत्तमो यत्
श्रीशारदातिलकनाम चकार तन्त्रं ।
स ...... शिष्यकप्रश्रीविद्याधरो
रचितवान् मन्त्ररत्नमालाम् ॥
श्रीमद्गुरुः प्रवरदृन्दं भट्टन्दपरामस्य बोधविभवाय ।
सद्गागमाब्धो विश्वोपकारविषयं मया निबद्धः ॥
सम्यक् निबद्ध इव सम्मतिरस्तु क्षमा ॥ (?)
सत् सिंहासनमासने जनपदे श्रीश्रीवत्सूत्तौ ।
मीमांसातर्कतन्त्रप्रवरमतिरभूमूर्त्तिशर्म्मा द्विजेन्द्रः ।
तत्सूनुः स जगद्दरो गामरवाजाम्बनन्दनोधरः । (?)
श्रीविद्याधर एतदीयतनयस्रक्रे सुरत्नावलीम् ॥
कायस्थचक्रधरवर्म्मकुलावतंसः
श्रीमत्प्रतापदत्त्वत्प्यनतासमीपे । (?)
सेनायिनाम्नि नगरे मनुरत्नमालां
विद्याधरो ग्रथितवान् भुवनातिवत्या ॥ (?)
आचार्य्यभट्टपदद्युत्कविवल्लभस्य
श्रीवल्लभस्य चरणौ प्रणिपत्य मूर्द्ध्ना ।
विद्याधरेण रचिता मनुरत्नमाला
सम्पूर्ण एष पटलो दशमो हि यत्र ॥

**Colophon.** इति श्रीजगद्वल्लभभट्टाचार्य्यान्तेवासि + + + + + विद्याधरशर्म्मविरचितायां मन्त्ररत्नावल्यां शारदातिलकपद्धतौ प्रकीर्णकमालं नाम दशमः पटलः समाप्तः ॥ • ॥ श्री ॥ * ॥

**विषयः ।** प्रथमपटले योनिमुद्रादिनिरूपणम् । राश्यादिविचारः । दीक्षादिनिरूपणञ्च ॥ (२ यपटलात् ५ मपटलपर्य्यन्तं नास्ति ।) ६ ष्ठपटले दीक्षापूर्व्वाङ्गकृत्यप्रयोगादिः । होमादिनिरूपणञ्च । ७ मपटले विष्णुपूजाविध्यादिः । द्वादशाक्षरमन्त्रविध्यादिः । हयग्रीवमन्त्रविधिः । वामनमन्त्रयन्त्रधारणादिनिरूपणम् । वराहमन्त्रादिविधिः । गोपालादिसकलमन्त्रविधिः प्रयो-

गादिश्च । ८ मपटले न्यासादिनिरूपणम् । उमामहेश्वरादिविधिः । मृत्युञ्जयमन्त्रादिनिरूपणम् । नीलकण्ठमन्त्रपूजाप्रयोगादिः । चिन्तामणिमन्त्रादिनिरूपणम् । पाशुपतास्त्रमन्त्रविध्यादिः । वटुकभैरवमन्त्रविधिः । पूजायन्त्रादिनिरूपणम् । चण्डेश्वरमन्त्रविध्यादिः । शैवमन्त्रराशिविवेचनादिश्च । ९ मपटले गायत्रीप्रमुखमन्त्रादिनिरूपणम् । वशीकरणहोमादिनिरूपणम् । वायवीक्षग्निविध्यादिः । प्राणप्रतिष्ठामन्त्रयन्त्रादिश्च । १० मपटले पुरश्चरणमन्त्रप्रयोगादिनिरूपणमिति ।

---

**No. 273.** मन्त्रव्यक्तिः. By जगन्नाथः. Substance, country-made paper, 18 x 3 inches. Folia, 8. Lines, 6 on a page. Extent, 180 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Vāḍari, Paṇḍita Rāmakamala Bhaṭṭāçāryya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमस्तारिण्यै ।

नत्वानन्दमयीं देवीं भारतीं सर्व्वसिद्धिदाम् ।
मन्त्रव्यक्तिं वितनुते जगन्नाथो द्विजोत्तमः ॥
अथ व्यक्तिं प्रवक्ष्यामि वर्णानां वदने स्थिताम् ।
प्रेरितां वामनासिकां सुसुम्नारन्ध्रनिर्गताम् ॥ इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** मन्त्राक्षरादिव्यक्तीकरणादिः । मन्त्राक्षरादिमाहात्म्यकथनञ्च ।

---

**No. 274.** मन्त्रार्थदीपिका वा सारसंग्रहः. By श्रीहर्षः. Substance, country-made paper, 13 x 2½ inches. Folia, 18. Lines, 4 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, Kṛṣṇapurā, District Ḍhākā, Post Office Vaidyerbāzār, Paṇḍita Kālikṛṣṇa Vidyāvinoda. Appearance, very old. Verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।

देवतायाः पदद्वन्द्वं प्रणम्य भक्तितो गुरुः ।
तन्त्रसारं समालोक्य वक्ष्ये मन्त्रार्थदीपिकाम् ॥
आगमस्य च संक्षेपो मन्दधियां विबुद्धये ।
श्रीहर्षंकृतिना चैव लिख्यते सारसंग्रहः ॥

चरचक्रं विचार्य्यैव नामचक्रं विचारयेत् ।
ऋणिधनीति पश्चाद्धि नचत्रं राशिचक्रकम् ।
नाड़ीचक्रं विचार्य्यैव चक्रान्यानि विचारयेत् ॥
तत्र प्रथमतो चरचक्रं निरूप्यते ।
चतस्रः पूर्व्वगा रेखास्ततो दक्षिणगकाः ।
कोष्ठे + + ततो दत्त्वा चरचक्रमिदं भवेत् ॥
ऐशान्यादिग्रहद्वन्द्वं शोभितं त्रिपुरादिभिः ।
दिक्षु दुर्गाञ्च वाणीञ्च ताराञ्च भैरवीं तथा ॥
ईशानाद्यं कुवेरान्तं क्रमाच्च विन्यसेत् तथा ।
इन्द्राणीञ्चैव चेरम्बं पितामहमनन्तरम् ॥
महामायाञ्च काली च यदन्यत् सौम्यदैवतम् ।
त्रिपुरादौ ... ... शिवः ... ... ... ... ... ॥
त्रिपुरां भुवनेशीञ्च पीठेशीञ्चैव त्र्यम्बकम् ।
वासुदेवं श्रियञ्चैव छिन्नमस्ताञ्च चण्डिकाम् ॥
अस्यार्थः । पूर्व्वस्यां दुर्गां, दक्षिणस्यां वाणीं, पश्चिमस्यां तारां, उत्तरस्यां भैरवीं, ईशानकोष्ठद्वये इन्द्राणीहेरम्बौ, वह्निकोष्ठद्वये पीठेशीत्र्यम्बकौ, नैर्ऋतकोष्ठद्वये वासुदेवश्रियौ, वायुकोष्ठद्वये छिन्नमस्ताचण्डिके ॥ इत्यादि ।

End.

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।
रविसंक्रमणे चैव युगाद्यायां सुरेश्वरि ॥
मन्वन्तरासु सर्व्वासु षड़शीतिमुखेषु च ।
शिवचिजन्मदिवसे समक्षे सुखदा भवेत् ॥
युगाद्यायां जन्मदिने विवाहदिवसे तथा ।
पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ॥
प्रयागे श्रीगुरौ काश्यां कालाकालं न शोधयेत् ॥
पीठचतुष्टये उड्डीयान-जालन्धर-पूर्णगिरि-कामरूपाख्ये ।
देव्या बोधं समारभ्य यावत् स्याद्दशमी तिथिः ।
... ... ... ... ... ... ... ... ... ... ... ... ॥
निषिद्धतीर्थानि ।
गयायां भास्करक्षेत्रे तथैव चन्द्रपर्व्वते ।
कोङ्कणे च मतङ्गे च तथा कन्यावनेषु च ॥

... ... ... ... ... ... ... ... ... |

कन्यागमे जयपुर इति ख्याते । यदा गते दैत्यगुरौ शिशौ च ... ...

... ... ... ... ... जीवे यदौ दैत्यगुरौ यद्यर्थे केतूद्गमे भूपकादिदोषे ।

इत्यादि । अतःपरं खण्डितम् ।

**विषयः ।** परचक्रनिर्णयः । अकथहचक्रनिर्णयः । ऋणिधनिचक्रनिर्णयः । नक्षत्रमैत्रीविचारः । राशिचक्रकथनम् । भौतिकचक्रकथनम् । अकडमचक्रनिरूपणम् । कूर्मचक्रनिरूपणम् । दीक्षाफलनिरूपणम् । गुरुलक्षणकथनम् । शिष्यलक्षणकथनम् । दीक्षायां मासतिथिनक्षत्रग्रतीर्थस्थाननिर्णयः । एतत् सर्वनिरूपणवचनपरम्पराया व्याख्यानञ्च ॥

---

**No. 275.** मन्त्रोद्धारः. Substance, country-made paper, 16×3 inches. Folia, 20. Lines, 7 on a page. Extent, 437 çlokas. Character, Bengali. Date, ? Place of deposit, Kātihālī, District Mayamanasiṁha, Paṇḍita Parāṇacandra Tarkālaṇkāra. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः परदेवतायै ।

अथ क्रमान्मन्त्रोद्धारो लिख्यते ; तत्रादौ भुवनेश्वर्याः । ह्रीं ।

नकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।

बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥ इत्यादि ।

**End.** ह्रीं गौरि रुद्रदयिते योगेश्वरि ह्रीं फट् स्वाहा । ह्रीं गौरि रुद्रदयिते योगेश्वरि सर्व्वं फट् ॥ * ॥ (?)

**विषयः ।** मन्त्रोद्धारादिनिरूपणम् ।

---

**No. 276.** मलमासार्थसंग्रहः. By गुरुप्रसादशर्म्मा. Substance, country-made paper, 17×3 inches. Folia, 30. Lines, 8 on a page. Extent, 990 çlokas. Character, Bengali. Date, ? Place of deposit, Pargaṇa Vagḍi, District Medinīpura grāma Telivani, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

स्मृते श्रुतिवचनस्य एकवाक्यविवक्षितम् ।

नानाश्रुतिवचनानां व्याख्येयत्वात् तत्त्वं अर्थविशेषं वाक्यविकार्थमिति यावत्

वक्ति निरूपयति । निरूपणं ज्ञानानुकूलवचनं । वाक्येयस्मृतिवचनस्य सामान्यतो विषयाभाव मलिम्लुच इत्यादि । अत्र सप्तम्यर्थो विषयत्वं यत्र निर्णयपदोत्तरं सप्तमी तत्र जनकत्वरूपं विषयत्वं अन्यत्र ज्ञानजनकत्वरूपमिति विशेषः ॥ इत्यादि ।

**End.** तथाविधकन्यादात्री विमाता सपिण्डनाधिकारिणी तत्र कथं तद्दिने नापकर्षः । कालबाधाभावादिति चेदुच्यते ।
बहूनामेकधर्म्माणामेकस्यापि यदुच्यते ।
सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः ॥
इति बौधायनवचनात् यद्दर्वेत्यनेन सर्व्वेषामसन्नपूर्व्वदिनेऽपकर्षः ।

**Colophon.** इत्यास्तां मलमतिविस्तरेण ॥ ० ॥
छात्राणां स्मरणार्थन्तु श्रीगुरुप्रसादशर्म्मणा ।
संकलितान्यमूनीह वचनानि मलिम्लुचे ॥
धूलिधवलभुजाभ्यां गलमवलम्ब्य स्थितो यशोदायाः ।
रजतस्तवग्रथितो हरिरिह नीलमणिर्जयति ॥

**विषयः ।** संक्षेपेण मलमासार्थव्यवस्थादिनिरूपणम् ।

---

**No. 277. महाप्रदीपदानपद्धतिः.** Substance, country-made paper, 14 × 3 inches. Folia, 2. Lines, 6 on a page. Extent, 48 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, District 24-Parganās, Paṇḍita Ramatāraṇa Ṭhākūra. Appearance, old. Prose. Correct.

**Beginning.** अथ महाप्रदीपदानविधिः । मार्कण्डेय उवाच ।
येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तत्र दीपप्रदानेन कुलानामुद्धरेच्छतम् ॥ इत्यादि ।

**End.** ततस्तावच्छलाकया दीपं प्रबोधयेत् ततः प्रभाते दक्षिणां दत्वाच्छिद्रावधारणं कुर्य्यात् ।

**Colophon.** इति महाप्रदीपदानपद्धतिः समाप्ता ॥

**विषयः ।** दीपान्वितामावास्यायां महाप्रदीपदानविधिस्तत्प्रयोगादिश्च ।

---

**No. 278. महामोक्षतन्त्रम्.** Substance, country-made paper, 13×3 inches. Folia, 112. Lines, 8 on a page. Extent, 3,024 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ।
कैलासशिखरे रम्ये संस्थिते भवसन्निधौ ।
पप्रच्छ भक्तियोगेन पार्व्वती शङ्करं प्रति ॥
शङ्कर्य्युवाच ।
शास्त्रोक्त सर्व्वशास्त्राणि यानि यानि श्रुतं प्रभो ।
भूयो भूयो विचार्य्यं हि ब्रह्माण्डञ्च देहकम् ॥
बृहद्विश्वन्तु यद्रूपं तद्रूपं क्षुद्रविश्वकम् ।
यानि गुणानि ब्रह्माण्डे तानि सन्ति कलेवरे ॥
अधिकन्तु मुक्त्यर्थं च विचारार्थं दयान्वयाः ।
यस्मान्निराकारं ब्रह्म सहस्रारे स्थितं प्रभो ॥
ब्रह्माण्डाख्ये तु मध्ये यत् सर्व्वं तिष्ठ कलेवरे ।
अथान्तं तव वाक्यं हि तद्ब्रह्म चरिर्व्वचः (?) ॥
तथापि परमेशान सन्देहो मां न मुञ्चति ।
बृहद्ब्रह्माण्डमध्ये तु महाभीमः सुमेरुकः ॥
सुमेरुश्च सप्तस्वर्गं हरभागे सुरेश्वर ।
स एव सप्तपद्मं स मूलावधि सहस्रकम् ॥
ततःक्रमो हरिकिंपुरुषभारतवर्षं क्रमात्त्रयम् (?) ।
इलावृतकुरुवर्षान्तं चतुर्वर्षोत्तरे क्रमात् ।
केतुमालभवद्वर्षौ पूर्व्वपश्चिमतः स्थितः ॥ इत्यादि ।

**End.** चैतन्याकारजीवस्य यद्यद् दुःखमवस्थितम् ।
तत्तत् ज्ञातृत्वं सभेदुःखं गर्भागारे यावत् स्थितः ॥
ब्रह्मध्यानं ब्रह्मज्ञानं ब्रह्मज्ञानञ्च तद्वद ।
महामोक्षतन्त्रविद् यः स सर्व्वज्ञ एव मोक्षमः ॥

**Colophon.** इति महामोक्षतन्त्रे शङ्करीशङ्करसंवादे महामोक्षकल्पे स्थूलसूक्ष्मादिब्रह्मयोगविवरणे चतुःषष्टितमः पटलः समाप्तः ॥

विषयः। १ मे पटले,— शङ्करीशङ्करयोः संवादेन शरीरस्य ब्रह्माण्डरूपत्वकथनम्। बृहद्ब्रह्माण्डे भारतवर्षादिनिरूपणम्। धर्म्मयागादिविषये दिङ्‌निरूपणम्। महाकाल्याः प्रकृतित्व-कथनपूर्व्वकं प्रकृतिपुरुषयोर्जगत्सृष्टिप्रक्रियाकथनञ्च। २ये पटले,— अष्टादशमहाविद्योत्पत्ति-कथनम्। अष्टादशभैरवोत्पत्तिकथनम्। तत्र तत्र तेषां रूपादिवर्णनञ्च। ३ये पटले,— कालि-कायाः शववाहनादिकारणकथनम्। शिवलिङ्गोत्पत्तिकथनम्। शिवस्य शवरूपत्वे कारणादि-कथनञ्च। ४र्थे पटले,— शिवस्य चित्याद्यष्टमूर्त्तिष्टनामकथनम्। योनिबीजकथनम्। लिङ्ग-बीजकथनम्। महाबीजकथनम्। वस्तुवमिति गण्डवाद्यमाहात्म्यादिकथनञ्च। ५मे पटले,— कालीस्वरूपककारादिशतनामस्तोत्रकथनम्। ६ष्ठे पटले,— तारैकजटा-नीलसरस्वतीस्वरूप-तकारादिशतनामकथनम्। ७मे पटले,— त्रिपुरसुन्दरीसकारादिशतनामस्तोत्रकथनम्। ८मे पटले,— भुवनेश्वरीभकारादिशतनामस्तोत्रकथनम्। ९मे पटले,— भैरवीस्वरूपभकारादिशत-नामस्तोत्रकथनम्। १०मे पटले,— छिन्नमस्तास्वरूपछकारादिशतनामस्तोत्रकथनम्। ११शे पटले,— धूमावतीस्वरूपधकारादिशतनामस्तोत्रकथनम्। १२शे पटले,— बगलामुखीस्वरूप-बकारादिशतनामस्तोत्रकथनम्। १३शे पटले,— मातङ्गीस्वरूपमकारादिशतनामस्तोत्रकथनम्। १४शे पटले,— कमलास्वरूपककारादिशतनामस्तोत्रकथनम्। १५शे पटले,— वाग्वादिनी-स्वरूपवकारादिशतनामस्तोत्रकथनम्। १६शे पटले,— अन्नपूर्णास्वरूपाकारादिशतनामस्तोत्र-कथनम्। १७शे पटले,— प्रत्यङ्गिरास्वरूपशतनामस्तोत्रकथनम्। १८शे पटले,— त्वरिता-स्वरूपतकारादिशतनामस्तोत्रकथनम्। १९शे पटले,— दुर्गास्वरूपदकारादिशतनामस्तोत्र-कथनम्। २०शे पटले,— मातङ्गीस्वरूपमकारादिशतनामस्तोत्रकथनम्। २१शे पटले,— कामाख्यास्वरूपककारादिशतनामस्तोत्रकथनम्। २२शे पटले,— बालास्वरूपबकारादिशतनाम-स्तोत्रकथनम्। २३शे पटले,— निगमशास्त्रपुराणशास्त्रादीनामुद्भवकथनम्। तत्र रुद्रयामल-ब्रह्मयामलादितः सामवेदादीनामुत्पत्तिकथनम्। अश्वक्रान्त रथक्रान्त विष्णुक्रान्तविवरणकथनञ्च। अथ अष्टाविंशत्युत्तरशतसंख्यतन्त्रशास्त्रोत्पत्तिकथनम्। तत्र तेषां नामकथनम्। यथा,— काली-तन्त्रं, मुण्डमालातन्त्रं, तारातन्त्रं, वीरतन्त्रं, शिवसारतन्त्रं, दीक्षातन्त्रं, बृहत्सारतन्त्रं, महा-सारतन्त्रं, निर्व्वाणतन्त्रं, विश्वसारतन्त्रं, तत्त्वसारतन्त्रं, वर्णसारतन्त्रं, गुरुतन्त्रं, गुप्तसारतन्त्रं, शतसहस्रतन्त्रं, लिङ्गार्च्चनतन्त्रं, भैरवतन्त्रं, भैरवीतन्त्रं, लतार्च्चनतन्त्रं, तोड़लतन्त्रं, बृहत्तोड़ल-तन्त्रं, नीलतन्त्रं, बृहन्नीलतन्त्रं, कङ्कालमालिनीतन्त्रं, महानिर्व्वाणतन्त्रं, बृहन्निर्व्वाणतन्त्रं, राधातन्त्रं, माहेश्वरीतन्त्रं, सिद्धेश्वरतन्त्रं, मातृकाभेदतन्त्रं समयातन्त्रं, सिद्धतन्त्रं, गुप्तसाधनतन्त्रं, सर्व्वस्वतन्त्रं, मातृकातन्त्रं, महातन्त्रं, शिवतन्त्रं, अघयातन्त्रं, कुमारीतन्त्रं, सारात्सारतन्त्रं, कुलार्णवतन्त्रं, कालिकाकुलसर्व्वस्वतन्त्रं, कालीकल्पतन्त्रं, कालीतन्त्रं, वाराहीतन्त्रं, योगिनी-तन्त्रं, योगिनीहृदयतन्त्रं, गौरीतन्त्रं, योगतन्त्रं, धर्म्मतन्त्रं, श्रीतन्त्रं, विष्णुतन्त्रं सनत्कुमार-तन्त्रं, त्रिपुरासारतन्त्रं, योगिनीविजयतन्त्रं, महायोगिनीतन्त्रं, बृहद्योगिनीतन्त्रं, शिवार्च्चन-

तन्त्रं, उमरतन्त्रं, मालिनीतन्त्रं, गुह्यमालिनीतन्त्रं, महामालिनीतन्त्रं, बृहन्मालिनीतन्त्रं, कुब्जिकातन्त्रं, महामोक्षतन्त्रं, बृहन्मोक्षतन्त्रं, मोक्षतन्त्रं, गणेशतन्त्रं, शारदातन्त्रं, श्यामातन्त्रं, गोपीतन्त्रं, भूततन्त्रं, भूतलिपितन्त्रं, उड्डीशतन्त्रं, कामधेनुतन्त्रं, कामिनीतन्त्रं, मोहन-तन्त्रं, मोहिनीतन्त्रं, सम्मोहनतन्त्रं, समीरणतन्त्रं, वीरभद्रतन्त्रं, महावीरतन्त्रं, कामकेश्वर-तन्त्रं, कुलचूडामणितन्त्रं, चूडामणितन्त्रं, भावचूडामणितन्त्रं, चिन्तामणितन्त्रं, वरदातन्त्रं, ज्ञानार्णवतन्त्रं, चम्पतन्त्रं, कालीविलासतन्त्रं, नित्यातन्त्रं, चिदम्बरतन्त्रं, विज्ञापनतन्त्रं, फेत्कारिणीतन्त्रं, उत्तरतन्त्रं, नारायणीतन्त्रं, ऊर्द्धाम्नायतन्त्रं, ज्ञानदीपतन्त्रं, निरुत्तरतन्त्रं, गौतमीयतन्त्रं, गन्धर्वतन्त्रं, कुब्जिकातन्त्रं, योनितन्त्रं, मुक्तावलितन्त्रं, कामाख्यातन्त्रं, श्रीक्रमतन्त्रं, स्वतन्त्रतन्त्रं, बृहच्छ्रीक्रमतन्त्रं, बालाविलासतन्त्रं, गुर्वर्चनतन्त्रं, तीक्ष्णतन्त्रं, कामरत्नतन्त्रं, डामरतन्त्रं, समयाचारतन्त्रं, चन्द्रातन्त्रं, राजराजेश्वरीतन्त्रं, मेरुतन्त्रं, गोप्यगोपनलीलामृततन्त्रं, सङ्केततन्त्रं, महिषमर्दिनीतन्त्रं, मङ्गलतन्त्रं, चीनतन्त्रं, गायत्रीतन्त्रं, सिद्धलहरीतन्त्रं, ब्रह्माण्डतन्त्रं, महानिर्वाणतन्त्रं, भूतेश्वरतन्त्रञ्च । २४ शे पटले,—कलौ संसर्गजपापनिरूपणम् । तत्र घटकादीच्चिततब्राह्मणादीनां संसर्गपरित्यागावश्यकतानिरूपणम् । तुलसीमालातिलकाद्यलङ्कृतस्य राधे कृष्णेति मुहुर्भाषमाणस्य भिक्षापरायणस्य मन्त्रकरणे रौर-वादिप्राप्तिकथनम् । कन्याविक्रयादिदोषकथनम् । शूद्रादियाजनदोषकथनम् । शूद्रादि-गमनदोषकथनञ्च अथ तान्त्रिकप्रायश्चित्तविधिः । २५ शे पटले,—स्त्रीशूद्रबालकादीनां प्रायश्चित्तार्द्धविधानम् । अथ विस्तरतो नरकवर्णनम् । स्वर्गादिवर्णनञ्च । २६ शे पटले,—काली-तारयोः महामहाविद्यात्वकथनम् । २७ शे पटले,—हरिशयने मन्त्रसिद्ध्युपायकथनम् । २८ शे पटले,—कौलाचारस्य सर्व्वथा प्राधान्यकथनम् । कौलाचारनिरूपणम् । २९ शे पटले,—जीवन्मुक्त्युपायादिकथनम् । ब्रह्मयोगादिकथनम् । ३० शे पटले,—धर्म्मार्थकाममोक्षरूप-चतुर्व्वर्गविवरणम् । ३१ शे पटले,—परममुक्तियोगविवरणम् । तत्र भक्तियोगविवरणम् । ३२ शे पटले,—महायोगकथनम् । तत्र विस्तरतः षड्ङ्गयोगादिकथनम् । ३३ शे पटले,—महामोक्षकल्पकथनम् । तत्र ब्रह्मयोगप्राणायामस्वरूपादिकथनञ्च । ३४ शे पटले,—वर्णमाला-विवरणम् । अक्षमालाकथनम् । ३५ शे पटले,—अं अः परविन्दुप्रकरणे लकारद्वयविवरणम् । ३६ शे पटले,—महाक्षरमालाविवरणम् । तत्र सहस्रारपद्मस्वरूपादिकथनञ्च । ३७ शे पटले,—वर्णब्रह्मस्तोत्रकथनम् । ३८ शे पटले,—अन्तर्होमविधिः । तत्र आब्रह्म-स्तम्बपर्य्यन्तं मन्त्रपुटादि-विवरणञ्च । ३९ शे पटले,—शून्यस्थब्रह्माण्डगोले कालराज्यादिविवरणम् । ४० शे वह्नियोग-विधिः । तत्र कुण्डकादिस्वरूपकथनम् । ४१ शे पटले,—वह्नियोगलक्षणादिकथनम् । ४२ शे पटले,—प्राणायामस्वरूपादिकथनम् । ४३ शे पटले,—भूतशुद्ध्यादिविधिः । ४४ शे पटले,—न्यासादिन्यासविधिः । षोढान्यासादिविधिश्च । ४५ शे पटले,—षोड़शोपचारविधिः । तत्र धूपपुष्पादिविवेचनम् । मुद्रालक्षणकथनञ्च । ४६ शे पटले,—वह्नियोगाकर्षणजनयोः स्मरण-

कौर्मादिविधिः । ४७ शे पटले गायत्रीजपविधिः । ४८ शे पटले,— गायत्रीस्तोत्रकथनम् । ४९ शे पटले,— होमविधिः । बलिदानविधिश्च । ५० शे पटले,— एकादशाश्रमकथनम् । सन्यासिलक्षणादिकथनम् । दण्डिलक्षणकथनम् । अवधूतलक्षणादिकथनम् । वानप्रस्थादि-लक्षणकथनम् । ५१ शे पटले,— ब्राह्मणलक्षणकथनम् । ५२ शे पटले,— मन्वन्तरादिगुण-लक्षणकथनम् । वंशादिस्वरूपकथनञ्च । ५३ शे पटले,— मत्स्यपुराणादिविधिः । ५४ शे पटले,— षट्चक्रविवरणम् । तत्र विशेषतो मूलाधारविवरणञ्च । ५५ शे पटले,— स्वाधिष्ठान-विवरणम् । ५६ शे पटले,— मणिपूरचक्रविवरणम् । ५७ शे पटले,— अनाहतचक्रविवरणम् । ५८ शे पटले,— विशुद्धचक्रविवरणम् । ५९ तमे पटले,— आज्ञाख्यचक्रविवरणम् । ६० तमे पटले,— विस्तरतः सहस्रदलविवरणम् । ६१ तमे पटले,— भक्तिस्वरूपादिकथनम् । गन्धद्रव्यादि-माहात्म्यकथनम् । वेदादिलक्षणञ्च । ६२ तमे पटले,— ब्रह्मज्ञानयोगकथनम् । अमरयोग-कथनञ्च । ६३ तमे पटले,— ब्रह्मयोगविवरणम् । ६४ तमे पटले,— ब्रह्मणः सूक्ष्मत्वादिरूप-कथनम् । सुखदुःखयोः स्वरूपादिकथनञ्च ॥ इति ग्रन्थः ।

---

**No. 279.** महिम्नःस्तवकौमुदी. By गोविन्दानन्दतर्काचार्य्यः. Substance, country-made paper, $13 \times 2\frac{1}{2}$ inches. Folia, 11. Lines, 7 on a page. Extent, 298 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganas, Paṇḍita Haraprasāda Çāstrī. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥

श्रीगोविन्दपदद्वन्द्वनखेन्दुद्युतिसन्ततिः ।
अन्तश्चिन्तातिसम्भ्रान्तचित्तध्वान्तं धुनोतु मे ॥
क्रियते श्रीमता तातपादरेणूपदेशतः ।
गोविन्दसुधिया ग्रन्थो महिम्नः स्तवकौमुदी ॥ इत्यादि ।

**End.** कुसुम इति ॥ पुष्पदन्तनामा गन्धर्वराजः इन्दुमौलेर्महादेवस्य दासः तस्य निर्माल्यलङ्घनेन रोषात् निजमहिम्नो भ्रष्टः सन् स्तवनमकार्षीत् कीदृशं स्तवनं × × × गुरु गुह्यार्थं दिव्यानां देवानां दिव्यमुपादेयं इत्यर्थः ॥

**Colophon.** इति श्रीगोविन्दानन्दाचार्य्यविरचिता महिम्नः स्तवकौमुदी समाप्ता ॥ ० ॥

**विषयः ।** पुष्पदन्तप्रणीतस्य "महिम्नः पारन्ते" इत्यादिस्तवस्य व्याख्यानम् ।

---

**No. 280.** महिम्नःस्तवपञ्जिका. Substance, country-made paper, 15 × 3 inches. Folia, 9. Lines, 9 on a page. Extent, 364 çlokas. Character, Bengali. Date, Sk. 1774. Place of deposit, District Vãkuḍā Viṣṇupura, Kādākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ॥

अनुसर सततं प्रभोः स्वरूपं
शमयति यः परमापदो नराणाम् ।
शितकमलतरोः शशाङ्कमौले-
र्विमलस्तोचन × × नूपुराङ्गिः ॥
स्तोत्रराज-सुविस्तीर्ण-दुर्ब्बोध-पदपञ्जिका ।
श्लोकपाठविग्रहार्थं क्रियते पञ्जिका मया ॥
पुरा किलासीदखिलापरे शान्तिकर्षिनामस्यपतेरुद्याने शिवनिर्म्माल्यलङ्घना-
द्यपहतगतिः पुष्पदन्तनामा कश्चन गन्धर्व्वराजभूमराहरणान्तः । अनन्तरं
स्वर्गगमनाय बन्धनमोचनाय च स्तुतिमिमां चकार सः ॥ इत्यादि ।

**End.** असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रं
सुरतरुवरशाखा लेखनी पत्रमुर्व्वी ।
लिखति यदि गृहीत्वा सारदा सर्व्वकालं
तदपि तव गुणानामीश पारं न याति ॥
श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्विषहरेण हरिप्रियेण
कण्ठस्थितेन पठितेन गृहास्थितेन
संप्रीणितो भवति भूतपतिर्म्महेशः ॥

**Colophon.** इति पुष्पदन्तविरचितमहिम्नःस्तोत्रटीका समाप्ता ॥ ॥ शकाब्दाः १७७४ ।

विषयः । पुष्पदन्तविरचितस्य महिम्नःस्तोत्रस्य व्याख्यानम् ।

---

**No. 281.** महिम्नःस्तवरहस्यप्रकाशः. By जगदीशपञ्चाननभट्टाचार्य्यः. Substance, country-made paper, 20 × 4 inches. Folia, 20. Lines, 6 on a page. Extent, 817 çlokas. Character, Bengali. Date, Sk. 1570. Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstri. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अर्द्धव्याधुविलग्नाध्यर्द्धमपर्णानिता कापि ।
अधिकफलजनयित्री भवतां भूत्यै चिरं भूयात् ॥
पुष्पदन्तसम्प्रणीतस्तवे सम्प्रति धूर्जिटेः ।
विदुषा जगदीशेन रहस्यार्थः प्रकाश्यते ॥ इत्यादि ।

**End.** वाग्देवताया अपाङ्गलेन सुमरां देवताक्षरमतिदूरपराखतमिति । पारं । समाप्ति । याति प्राप्नोति । पक्षयेऽपि तुल्यमिति दिक् ।

**Colophon.** इति श्रीजगदीशपञ्चाननभट्टाचार्य्यविरचितः श्रीशिवमहिम्नःस्तवरहस्यप्रकाशः सम्पूर्णः ॥ हरये नमः शुभमस्तु शकाब्दाः १५७० ता० १५ चैत्र ।

**विषयः ।** पुष्पदन्तप्रणीतस्य "महिम्नः पारन्ते" इत्यादिस्तवस्य व्याख्यानम् ॥

---

**No. 282.** महिषमर्द्दिनीतन्त्रम् . Substance, country-made paper, 6 x 3 inches. Folia, 9. Lines, 5 on a page. Extent, 95 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, District 24-Parganās, Paṇḍita Navinacandra Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.** नमः परदेवतायै ॥ श्रीचण्डिकोवाच ॥

प्रासादं मण्डपं वापीं यदि देव्यै निवेदयेत् ।
विधानं तस्य माहात्म्यं वद मे परमेश्वर ॥
श्रीशङ्कर उवाच ।
शृणु देवि प्रवक्ष्यामि येन प्रासादमुत्सृजेत् ।
तस्यैव पश्चिमे भागे वेदिकां चतुरस्रिकाम् ॥
प्रकुर्य्याद्दृढयत्नेन वस्त्रेण वेष्टमाचरेत् ।
तदभावे महेशानि सूत्रेण वेष्टयेत् सुधीः ॥ इत्यादि ।

**End.** गुरोरन्यं महेशानि देवताकारमुत्तमम् ।
गुरोः क्रिया महेशानि पूजामूलं भवत् परम् ॥
गुरोर्वाक्यं मूलमन्त्रं परं ब्रह्ममयो गुरुः ।
अनेन विधिना देवि भावयेत् प्रत्यहं गुरुम् ॥
तदैव सफला सिद्धिर्जायते कमलेक्षणे ॥ ० ॥

**Colophon.** इति भविष्यमहिंगीतन्त्रे देवीदेवसंवादे द्वमः पटलः ॥ ० ॥ श्रीदुर्गा ।

**विषयः ।** देवीप्रासादादुत्सर्गनिरूपणम् । गुरुपूजाविधानादिनिरूपणञ्च ।

---

**No. 283. महोड्डीशतन्त्रम् .** Substance, country-made paper, 8 × 4 inches. Folia, 21. Lines, 11 on a page. Extent, 462 çlokas. Character, Nāgara. Date, Sambat 1821. Place of deposit, at the Kālīmaṭha, Ramnā, Ḍhākā. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

उड्डीशे च समाकीर्णे योगिहृन्दसमाकुले ।
प्रणम्य शिरसा गौरी परिपृच्छति शङ्करम् ॥
विशेषेण तु तत्सर्व्वं कथयस्व प्रभो मम ।
अन्यांश्च विविधैः कार्य्यान् मन्त्रांश्च ब्रूहि भैरव ॥
ईश्वर श्रोतुमिच्छामि लोकनाथ जगद्गुरो ।
प्रसादं कुरु मे देव ब्रूहि कर्म्मार्थसाधनम् ॥
शुभङ्कर महाभाग सर्व्वसिद्धिप्रदायक ।
पृच्छामि त्वां जगन्नाथ संसारस्थितिकारणम् ॥
पृच्छामि देवदेवेश लोकानां हितकाम्यया ।
वशीकरणमुच्चाटं मोहनं स्तम्भनं तथा ॥
शान्तिकं पौष्टिकं कर्म्म विविधानि महेश्वर ।
चतुर्ष्वानि मनोज्ञानिः श्रुतिज्ञानिस्तथैव च ॥
ज्ञानहानिः क्रियाहानिः कौलकञ्च तथापरम् ।
कार्य्यस्तम्भः सुरेशान शोषणं पोषणं तथा ॥
तद्द्रव्याणि विशेषेण तत्परं ब्रूहि मे प्रभो ।
अन्यांश्च विविधान् कार्य्यान् सात्त्विकान् ब्रूहि भैरव ॥ (?) इत्यादि ।

**End.** लोहत्रिशूलं कृत्वा विषवधिरखिस्रसमयुतेनाभिमन्त्रितं यस्य नाम्ना भूमौ लिखति तस्योपरि त्रिशूलं रोपणीयम् । तस्य मृत्युर्भवति । पलाशबीज मेदा करीये मन्दारको दुधसों पुटदेव ।१०१। फेरि दुधसों गोलि बांधि राखनु । जहां बिछु मारे तहां मन्दारके दुधसें घषि लगावै बिछु अवश्य उतर जाए ॥

**Colophon.** इति श्रीमत्तान् उड्डीशोऽग्रात् समाप्तम् ॥ संवत् १८२१ ।

**विषयः ।** आकर्षणविधिः । उन्मादनविधिः । विद्वेषणविधिः । उच्चाटनविधिः । स्तम्भनविधिः । वशीकरणविधिः । वन्ध्यीकरणविधिः । मूकीकरणविधिः । गात्रसङ्कोचनविधिः । खञ्जीकरणविधिः । भूतज्वरकरणविधिः । शस्त्रशास्त्रदूषणविधिः । पानीयशोषणविधिः । दधिमथनाशनविधिः । मद्यकरणविधिः । गजवाजिप्रकोपनविधिः । भुजगावेशनविधिः । सर्पविनाशनविधिः । पुरप्रवेशनादिविधिः । वेतालसिद्धिकथनम् । पादुकासिद्धिकथनम् । अञ्जनादिविधिः । क्वचित् क्वचित् हिन्दीभाषया तत्तत्प्रक्रियादिकथनञ्च । इति शम् ।

---

**No. 284. मातृकाभेदतन्त्रम् .** Substance, country-made paper 19 x 5 inches. Folia, 36. Lines, 5 on a page. Extent, 664 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ॥

कैलासशिखरे रम्ये नानारत्नोपशोभिते ।
पप्रच्छ परया भक्त्या भैरवं परमेश्वरम् ॥
श्रीचण्डिकोवाच ।
त्रिपुरापूजनं नाथ सर्व्वरत्नैर्विशेषतः ।
कलिशेषे सर्व्वरत्नं गुप्तभावं तथा मणिम् ॥
केनोपायेन देवेश स्वर्णरत्नादि लभ्यते ।
तद्वदस्व विशेषेण यथा रत्नादिकं भवेत् ॥
यन्नोक्तं सर्व्वतन्त्रेषु तद्वदस्व दयानिधे ।
श्रीशङ्कर उवाच ।
शृणु देवि प्रवक्ष्यामि यथा रत्नादिकं भवेत् ।
सत्तेजसा पावकेन किं रत्नं न हि लभ्यते ॥
यथा सामुद्रकेणैव शुभ्रसम्बलकेन च ।
सम्बलस्य प्रकारं हि शृणु देवि प्रयत्नतः ॥
चीनतन्त्रानुसारेण पूजयेत् सिद्धकालिकाम् ।
अथवा पूजयेद्देवीं दक्षिणां कालिकां पराम् ॥
कालीतन्त्रोक्तविधिना सम्प्राप्य जपपूजनम् ।
सत्ये चैकगुणं त्रेतायां द्विगुणं द्वापरे त्रयम् ॥

एवं सर्व्वंच आनीयाचतुर्गुणजपं कलौ ।
आनीय बहुयत्नेन सम्यक्लं तोलकद्वयम् ॥
बहु वाद्यं शिवं चाद्यं मायाबिन्दुविभूषितम् ।
बीजत्रयं चाष्टशतं प्रजपेत् सम्यक्लोपरि ॥
अशीतितोलकं मानं छाग्याधेनुसमुद्भवम् ।
दुग्धमानीय यत्नेन चाष्टोत्तरशतं जपेत् ॥
वस्त्रयुग्मेन सूत्रेण दुग्धमध्ये विनिःक्षिपेत् ।
उत्तापं जनयेद्धीमान् मन्दमन्देन वह्निना ॥ इत्यादि ।

**End.** अभक्त्या परमेशानि यदि धारणमाचरेत् ।
जपपूजादिकं तस्याः मन्दरेत् तेन तेजसा ॥
श्रीचण्डिकोवाच ।
प्राणान्तेऽपि च कर्त्तव्यं पूजनं मोक्षदायकम् ।
न यजेद् यदि मोहेन सैव पापनयी भवेत् ॥

**Colophon.** इति मातृकाभेदतन्त्रे चतुर्दशः पटलः ॥

**विषयः ।** चण्डिकया सह शङ्करस्य संवादेन स्वर्णरत्नादिप्राप्त्युपायकथनम् । तत्र स्वर्णादि-लिप्सया युगभेदेन जपपूजादिनियमः । कारणस्य दुग्धीकरणविधिः । कारणस्य गन्धहीनत्व-करणविधिश्च । अथ पुत्रोत्पादनकारणकथनम् । तत्र नाभिपद्मादिनिरूपणञ्च । अथ भोगेनैव मोक्षप्राप्तिकथनम् । कुण्डलिनीमुखे आहुतिक्रमकथनम् । प्रसङ्गात् होमकुण्डविधिः । आहुति-परिमाणादिकथनम् । ब्राह्मणानां कारणपानाधिकारकथनम् । ब्राह्मणलक्षणादिकथनम् । कारणग्रहणविधिः । शिवनिर्म्माल्यग्रहणविधिः । गङ्गामाहात्म्यकथनम् । सुरादेवीमाहात्म्य-कथनम् । महामालामाहात्म्यकथनम् । महामालाया गङ्गाजलस्पर्शदोषकथनञ्च । अथ पारद-भस्मीकरणक्रमकथनम् । स्वयम्भूकुसुमादिनिरूपणम् । पारदभस्मपरीक्षाप्रकारः । पारदभस्म-माहात्म्यकथनञ्च । अथ रोगभयादिनिवारणोपायकथनम् । ततः चामुण्डामन्त्राराधनाविधिः । तत्र चण्डीपाठक्रमकथनम् । तत्पाठमाहात्म्यकथनञ्च । अथ त्रिपुरामहामन्त्रादिकथनम् । तत्र प्रातःकृत्यादिकथनम् । गुरुस्तोत्रादिकथनम् । गुरुकवचकथनम् । श्रीविद्याध्यानादिकथनम् । शिवपूजां विना शक्तिपूजायामनधिकारकथनम् । शिवपूजाधारादिनिरूपणम् । शिवलिङ्ग-गठनादिविधिः । तत्र पारदशब्दनिर्व्वचनम् । पारदलिङ्गपूजामाहात्म्यादि[illegible]थनम् । पारद-ताडनादौ शान्तिविधिः । तद्विषये मत्स्यमांसादिविधिः । पारदभ[illegible]नकथनम् । तत्र होमद्रव्यकथनञ्च । अथ मद्यपादिवलि[illegible]म् । शक्तिविषये वलि[illegible]वस्य-कालकथनम् । मातृकाभेदतन्त्रश्रवणादि[illegible]माहात्म्यकथनञ्च । अथ प्रायश्चि[illegible]

सामिषके कर्म्मणि तन्त्रधारणादेर्मावश्यकत्वकथनञ्च । अथ कूपादिदानविधिः । · मन्त्रफलादि-कथनञ्च । अथ यन्त्रे स्रुवादिपरिमाणकथनम् । अथ पूजाधारनिरूपणम् । तत्र दर्पणस्थापनादि-विधिः । यन्त्रसन्निधाने प्रतिमादिकरणदोषकथनम् । बिल्वपत्रमाहात्म्यकथनम् । शिवपूजादि-माहात्म्यकथनञ्च । अथ शक्तिभेदनिरूपणम् । मन्त्रग्रहणविधानादिः । मालाग्रहणादिविधिः । जपविधिः । दिव्यवीरादिभावलक्षणादिकथनम् । ब्राह्मणादिभेदेन मोक्षाधिकारनिरूपणम् । साधिकाया लक्षणादिकथनञ्चेति ।

---

**No. 285. मायातन्त्रम् .** Substance, country-made paper, 16 × 5 inches. Folia, 5. Lines, 6 on a page. Extent, 140 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta Çyāmavāzāra, Viçvakoṣa office, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीमहादेव उवाच ।

शृणु प्रिये प्रवक्ष्यामि योगसाधनमुत्तमम् ।
विना भावेन देवेशि न सिध्यति कदाचन ॥
त्रिधा भावो महेशानि साधकानां सुखप्रदः ।
वरं मुक्तिमवाप्नोति भावाद्धि साधकाग्रणीः ॥
पशुभावस्थितो मन्त्री बहुक्लेशेन सिध्यति ॥ इत्यादि ।

**End.** तथैवासितपक्षे तु पञ्चदश्यां निशार्द्धके ।
पूजयेच्च फलैर्लक्षैः शक्तितो वापि कालिकाम् ॥
भाद्रे मास्यसिते पक्षे रोहिणीसहिताष्टमी ।
तस्यां निशार्द्धसमये पूजयेच्चण्डिकां पराम् ॥
नभस्ये शुक्लपक्षे तु नवमी दौर्गसंज्ञिता ।
तस्यां प्रपूजयेद्दुर्गां शतपत्रे महेश्वरि ॥ ० ॥

**Colophon.** इति मायातन्त्रे सप्तदशः पटलः ।

**विषयः ।** अथ प्रथमं भावादिनिरूपणम् । ततो भुवनेश्वरीकवचादिः । चण्डीपाठ-विध्यादिः । चण्डीपाठफलादिकथनञ्च । अथ दिव्यपश्वादिभावत्रयनिरूपणम् । कलौ स्नानो-पायादिनिरूपणञ्चेति ।

---

**No. 286.** **मुक्तिकोपनिषद् .** Substance, country-made paper, 10 × 6 inches. Folia, 7. Lines, 11 on a page. Extent, 173 çlokas. Character, Bengali. Date, ? Place of deposit, Teliveni *viâ* Gaḍveta, District Medinīpura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ तत् सत् ॥ अथ मुक्तिकोपनिषत् ।
ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः हरिः ॐ ॥
ॐ अयोध्यानगरे रम्ये रत्नमण्डपमध्यमे ।
सीता-भरत-सौमित्रि-शत्रुघ्नाद्यैः समन्वितम् ॥
सनकाद्यैर्मुनिगणैर्वशिष्ठाद्यैः शुकादिभिः ।
अन्यैर्भागवतैश्चापि स्तूयमानमहर्निशम् ॥ इत्यादि ।

**End.** तदेतत् तदृचाभ्युक्तं तद्विष्णोः परमं पदम् ।
सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥
तद्विप्रासोऽतद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदं ॐ सत्यमित्युपनिषत् सत्यमित्युपनिषत् ॥
ॐ पूर्णमदः इति शान्तिः । ॐ तत् सत् ।

**Colophon.** इति शुक्लयजुर्वेदगता मुक्तिकोपनिषत् समाप्ता ॥ ॥

**विषयः ।** मुक्त्युपायादिनिरूपणम् ।

---

**No. 287.** **मुक्तिविचारः .** Substance, country-made paper, 18 × 2½ inches. Folia, 8. Lines, 7 on a page. Extent, 357 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā, Viṣṇupura, Kāḍākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ॥ अथ कस्तावदपवर्गः तत्रात्यन्तिकी दुःखनिवृत्तिरपवर्गः इत्याचार्य्यप्रभृतयः । तत्र निवृत्तिः ध्वंसः । तस्यात्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वं स्वसमानाधिकरणदुःखासमानकालीनत्वं वा । तदयमन्तरञ्च तस्य पुंसो दुःखानुत्पादात् । इत्यादि ।

End. च सेकपक्षो विचारः प्रयातीति नद्द्वत् ताहशकर्म्मणां तत्त्वज्ञानस्य प्रति-बन्धकदुरितनिवर्त्तकतया प्रागपेक्षितत्वेऽपि नोपदर्शितगुत्योरुपकारत्वेन उभाभ्यामुपपत्तेः तेषां मुक्तिकारणत्वे मानाभावादित्याद्यां विस्तरः ॥

Colophon. इति समाप्तोऽयं मुक्तिविचारः ॥

विषय: । विचारमुखेन मुक्तिनिरूपणम् ।

---

No. 288. मुग्धबोधटीका. By कार्त्तिकेयसिद्धान्तः. Substance, country-made paper, 20 × 4 inches. Folia, 217. Lines, 7 on a page. Extent, 9,399 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstri. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।

प्रणम्य पार्व्वतीशानौ वृद्धानां ज्ञानदौ यतः ।
क्रियते मुग्धबोधस्य टीकेयं यत्नतो मया ॥
यद्यहं श्रीकार्त्तिकेयो मन्दबुद्धिस्तथापि च ।
पूर्व्वकोविदपन्थानमवलम्ब्य-चिकीर्षितम् ॥
सारांशः प्राज्ञविद्याश्च वरमेकं पदान्ततः ।
यदर्थं यस्य संचिन्त्य तस्य कार्य्या परिष्क्रिया ॥

चन्द्रान्व्याकरणविद्यावद्विद्वद्गणगुणनिचयाशेषविज्ञमयूखमञ्जुलकुञ्जरवरपराभूतसंख्यावद्विवेकद्विरदोदारनिपणीकरण-प्रक्तमुग्धबोधार्थकठिनकूटपद्यस्य-श्रीमन्महामहोपाध्यायाशेषबुधालङ्कार-जनशार्द्दूल-चातुर्य्यार्णवतरणैक-तरणि-विविधविद्यावज्ञानसम्पादक-श्रीमन्नदीश्वरोपदेष्टचरणसरसीरुहं शिरसा विधृत्य तत्कृतमुग्धबोधव्याकरणाश्रीभूत च इ उ इत्यादि बहुलं प्रत्येकीत्यर्मतसूत्रावल्या यथामति व्याख्यानमारभते । इत्यादि ।

End. चादिः । च आदिर्यस्य सः । चैकाच्चुदन्तो ऽरित्यनेन विहितो योऽप्रत्ययः तमारभ्य एतत् पादसमाप्तिपर्य्यन्तं ये प्रत्यया उक्तास्ते तसंज्ञाः तद्धित संज्ञाः सुरित्यर्थः॥ इति पादः । स्यादिरन्ते येषां तानि स्यादन्तानि पदानि तेषामध्यायः स्यादन्ताध्यायः । सुबन्ताध्यायः इति पाणिनीयाः ।

Colophon. इति श्रीकार्त्तिकेयसिद्धान्तसंग्रहीत-तद्धितपादटिप्पनी सम्पूर्णा ॥०॥ श्रीरामः

विषय: । वोपदेवगोस्वामिकृतस्य मुग्धबोधव्याकरणस्य टीका ।

---

**No. 289.** मुग्धबोधपरिशिष्टम्. By नन्दकिशोरशर्म्मा. Substance, country-made paper, 14×4 inches. Folia, 17. Lines, 6 on a page. Extent, 302 çlokas. Character, Bengali. Date, ? Place of deposit, Rājapura, Post office, Sonārpur, District 24-Parganās, Paṇḍita Rājendranārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य गौरीचरणौ सुरार्च्चितौ
बहूविबन्धानवलोक्य यत्नतः ।
सुमौग्धबोधं परिशिष्टमुच्यते
समासतो नन्दकिशोरशर्म्मणा ॥ इत्यादि ।

**End.** नद्यन्ते वर्त्तमानात् पुत्त्रार्थात् परात् पुनर्वसोर्बहुत्वे द्विवचनं न स्यात् । नित्यं द्वन्द्वे । उभयः उभये । दारादेर्ब्बम् । दारादेरेकत्वद्वित्वयोरपि बहुवचनं स्यात् । दाराः वर्षाः अप्सरसः आप इत्यादि ।

**Colophon.** इति मुग्धबोधपरिशिष्टे कारकप्रकरणं समाप्तम् ।

**विषयः ।** मुग्धबोधव्याकरणानुक्तानां विषयाणां पूरणम् । अत्र च सन्धिप्रकरणम् शब्दप्रकरणम् । णत्वप्रकरणम् । षत्वप्रकरणम् । कारकप्रकरणञ्चेति पञ्च प्रकरणानि सन्ति ।

---

**No. 290.** मूर्त्तिप्रतिष्ठा. Substance, country-made paper, 13×6 inches. Folia, 18. Lines, 9 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, Tamluk, Kelomāl, Babu Amaranātha Ghoṣa. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।
श्रीचैतन्यप्रतिष्ठोऽस्मि शरणं सन्तु येन चि ।
आविष्टां याति दुष्टोऽपि प्रतिष्ठां सद्भिष्टुतां ॥
अथ श्रीमूर्त्तिप्रतिष्ठा ।
प्रतिष्ठयैव भगवद्दाविर्भावो विशेषतः ।
प्रतिमासु ततस्तासां प्रतिष्ठां विधिनाचरेत् ॥
तथाचोक्तमेकादशस्कन्धे श्रीभगवता । प्रतिष्ठाजोवमन्दिरमिति ॥ अथ प्रतिष्ठालक्षणम् । श्रीहयशीर्षपञ्चरात्रे ।

परमात्मा हरिर्देवस्तच्छक्तिः श्रीरिहोदिता ।
श्रीर्देवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः ॥ इत्यादि ।

**End.** पञ्चाङ्गुलप्रमाणेन चिकाहिकार उच्यते ।
नित्यं करतलं कुर्य्यात् शुभरेखाविभूषितम् ॥
अतःपरं खण्डितम् ।

**विषयः** । अत्र प्रथमं प्रतिष्ठालक्षणम् । ततः प्रतिष्ठामाहात्म्यनिरूपणम् । शिल्पिकृत्यादि-निरूपणम् । शिलालक्षणादिनिरूपणम् । मूर्त्तिनिर्माणादिप्रकारनिरूपणञ्चेति ।

---

**No. 291. मृत्युञ्जयगीता.** Substance, country-made paper, 12×2 inches. Folia, 51. Lines, 6 on a page. Extent, 1,062 çlokas. Character, Bengali. Date, Sk 1713. Place of deposit, District Mayamanasiṁha, Serapura. Paṇḍita Candrakānta Tarkālaṅkāra. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः काल्यै ॥
कैलासशिखरे रम्ये नानारत्नविभूषिते ।
नानावृक्षलताकीर्णे नानापक्षिरवैर्युते ॥
चतुर्मण्डपसंयुक्ते शृङ्गारमण्डपान्विते ।
समाधौ संस्थितं शान्तं क्रीडन्तं योगिनीप्रियम् ।
तत्र मौनधरं दृष्ट्वा देवी पप्रच्छ शङ्करम् ॥
देव्युवाच ।
किं त्वया जप्यते नाथ किं त्वया स्मर्य्यते सदा ।
सृष्टिः कुत्र विलीनास्ति पुनः कुत्र प्रजायते ॥
ब्रह्माण्डकारणं तत्र किमाद्यं कारणं भवेत् ।
मनोरथमयी सिद्धिस्तथा वाञ्छामयी शिव ॥ इत्यादि ।

**End.** स्थिरो मनो भवेन्नित्यं चिन्ता-निद्राविवर्जितः ।
आत्मा संजायते सिद्धिर्नान्यथा शिवभाषितम् ॥
य इदं पठते नित्यं शृणोति च दिने दिने ।
सर्व्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥
ब्रह्मज्ञानमिदं शास्त्रं समग्रं शिवभाषितम् ।
अमरीगाः स्वयं मार्गे इति शास्त्रस्य निर्णयः ॥

Colophon. इति मृत्युञ्जयगीतायां हरगौरीसंवादे मृत्युचिन्ता नाम प्रथमोऽध्यायः ॥ ० ॥
ॐ तत्सत् ॥ ० ॥ श्रीगुरुचरणे भक्तिरस्तु शकाब्दाः १७१३ ।

विषयः । अपमारणकौवादिनिरूपणमुखेन जगतः स्थितिध्वंसकारणादिनिरूपणम् । तथा मृत्युचिन्तादिवृत्तादिनिरूपणञ्च ॥

---

**No. 292.** मृत्युञ्जयमन्त्रोद्धारटीका (सारदाख्या). Substance, country-made paper, $18 \times 3\frac{1}{2}$ inches. Folia, 2. Lines, 7 on a page. Extent, 68 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Kāṭihāli, Paṇḍita Ānandakiçora Nyāyālaṅkāra. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमो मृत्युञ्जयाय । अथ मृत्युञ्जयमन्त्रोद्धारटीका । शान्त्यर्थमित्यादि अस्यार्थः । मृत्युञ्जयनाम यन्त्रं समासतः संक्षेपतः प्रवक्ष्यामि किमर्थं सर्व्वलोकानां शान्त्यर्थम् ॥ इत्यादि ।

End. शुभे दिने रिक्तेतरे तिथौ शनिकुजवारे शान्त्युत्तरे काले तच्चिह्न भुवि निःक्षिपेत् ।

Colophon. इति सारदायां टीकायां मृत्युञ्जयप्रकरणं समाप्तम् ॥ ० ॥

विषयः । मृत्युञ्जयमन्त्रोद्धारटीका ।

---

**No. 293.** मेघदूतटीका. Substance, country-made paper, $13 \times 3$ inches. Folia, 22. Lines, 10 on a page. Extent, 1,127 çlokas. Character, Bengali. Date, Sk. 1751.' Place of deposit, District Vā̃kuḍā, Viṣṇupura, Paṇḍita Raghurāma Tarkaratna. Appearance, fresh. Prose. Generally correct.

Beginning. श्रीशिवाय नमः । कश्चिदित्यादि । कश्चिद्यक्षो रामगिर्य्याश्रमेषु वसतिं चक्रे कृतवान् । अभिशप्ततयास्य नाम न कीर्त्तितम् । तथाच ।
न नामग्रहणं कुर्य्यात् कृपणस्य गुरोरपि ।
अभिशप्तस्य पल्याश्च जनकस्य विशेषतः ॥ इति ।
रामेणाश्रितो गिरौ रामगिरिः । तस्याश्रमा रामगिर्य्याश्रमास्तेषु विरहानलसन्तप्तोऽयं नैकत्र वसतीति आश्रमस्य बहुलं वर्णितम् । अत स्थिता श्रीरामः कान्तामचिरेण लेभे अतोऽहमपि कान्तामचिरेण लप्स्ये इति स्थानान्तरमनादृत्य तत्र वसतिं चक्रे इत्यभिप्रायः । इत्यादि ।

**End** यमत् क्षमेत्यादि ॥ हे जलद मेघ एतत् प्रियसमुचितं प्रियस्योचितं कार्यं कृत्वा इष्टान् विचर गच्छ मे विधुरस्य प्रार्थनाचेतसः प्रार्थनायां चेतो यस्य तस्य सौहार्दात् स्नेहात् विधुरोऽविधुःखितोऽयमिति मयि अनुक्रोश-बुद्ध्या वा । कृपा दयानुकम्पा स्यादनुक्रोशोऽपीत्यमरः । त्वं विद्युतः प्रावृषा वर्षाभिः संभृतश्रीः । ते तव क्षणमप्येवं यथा मम प्रियया वियोगः तथा विद्युता विप्रयोगो माभूत् न भूयात् मायोगे चाश्रिपि कुरु ॥*॥

**Colophon.** इति मेघदूतव्याख्याकाव्यटीका समाप्ता ॥*॥ ॐ शिवः शरणम् । शकाब्दाः १७५१ ।

**विषयः ।** कालिदासकृतस्य मेघदूतकाव्यस्य व्याख्यानम् ।

---

**No. 294.** मेरुतन्त्रम् . Substance, country-made paper, 16 x 6 inches. Folia, 282. Lines, 12 on a page. Extent, 14,170 çlokas Character, Bengali. Date, ? Place of deposit, Calcutta, Çyāmavāzāra, Viçvakoṣa office, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीश्रीगणेशाय नमः ॥

यथाधत् यद्विभाभाति न च भाति कदापि यत् ।
यस्मिन् ज्ञानेन सा भाति तस्मै तस्मै नमो नमः ॥
जलभरेव विजिते सुरासुरनरेऽखिले ।
सुखरूपेव ते सर्वे मत्वेमं शरणं गताः ॥
हिमान्यम्बुधवाचि समाधिस्थं विलोक्य तम् ।
प्रार्थिता चार्चिता तेन नामद्विषमार्गिभिः ॥
अमरा वाद्या पोषयुता गत्वा तं संव्यजिज्ञपत् ।
ध्यायन्ति विविधर्य्याचार्य्यास्त्वां त्वं ध्यायसि कं पुनः ॥
त्वां वदन्ति परां शक्तिं त्वां वदन्ति परं शिवम् ।
आवयोरपि किं ध्येयं तत्त्वं मे कृपया वद ॥
इति श्रुत्वा वचस्तस्याः श्रुत्वा किञ्चिन्महेश्वरः ।
उपदेश्य विद्याचारीन् धावमेतदुवाच च ॥
नराणां परमं ह्येतत् सौराः स्वर्गं समाः ।
तदर्थं देवयोनीनां दिव्यमायुश्च तत्कृतम् ॥

सर्वेते परमं तस्य मार्गं कलियुगस्य तत् ।
सष्टाविंशावंशसंपूर्णं सष्टांशाम्नं प्रमाणतः । (?)
इदं भूमैकनिवसमैन्द्रायुर्मानं परम् ।
शतप्रमाणमब्दस्तु समये कायपूरकः । (?)
एवमिन्द्रैरिन्द्रसंख्यैर्मन्वो दिनमुच्यते ॥ इत्यादि ।

**End.**

ध्यानेन विधिना देवं पूजयेदिष्टसिद्धये ।
दासाद्यैरङ्गकैश्चापि महिषीभिश्च तत्परम् ॥
वसुदेवादिभिः पश्चात् कल्पद्रुमैरनन्तरम् ।
इन्द्राद्यैश्च तदस्त्रैश्च सन्नावरणसंयुतम् ॥
अर्चयित्वा तु गोविन्दं विधिवत् साधकोत्तमः ।
नैवेद्यं काञ्चने पात्रे पूर्वोक्तञ्च निवेदयेत् ॥
षडाधिकं शतं पश्चाद्धुनेत् साधु पयोन्धसा ।
शर्कराघृतयुक्तेन बलिं पश्चात् प्रकल्पयेत् ॥
देवर्षियोगिसर्वेभ्योऽप्युपदेवेभ्य आदरात् ।
स्वभक्तियुतो विद्वान् भक्तियुक्तः प्रसन्नधीः ॥
नवनीतं दधिदुग्धा तांथैः समर्पयेन्मुखे ।
अष्टकं शतनामं वा साहस्रं पूजयेज्जपेत् ॥
मध्याह्ने त्वन्यमेवं यः पूजयेद्भक्तितत्परः ।
गीर्वाणवृन्दवन्द्योऽसौ भवतः सर्वजन्तुषु ॥

( अतःपरं खण्डितत्वात् समाप्तिवाक्यं नोपलभ्यते ।)

२५९ पत्रस्य शेष ।

विन्दुधर्मप्रज्ञोत्सारो जायन्ते पञ्चवर्णिनः ।
पूर्वांशाये नवमतं चक्रीभिः प्रकीर्तिता ॥
किरातभाषया मत्वा तेषां संसाधनाकृति ।
अधिपतस्थानाच संग्रामेषु पराजिताः ॥
इन्द्रेणा नवषट्पञ्चाशदाशापि भाविनः ।
विद्या बौद्धनिद्र्मिन्धः पञ्च प्रोक्तास्तु या मया ॥
महीजपूर्वाः सर्वेऽपि भवतो मनसिविदा ॥

**विषयः ।** प्रथमप्रकाशे,— इतरग्रन्थानुयोगेन तत्त्वमानादिव्यवस्था । द्वितीयप्रकाशे,— षोडशसंस्कारादिनिरूपणम् । तृतीयप्रकाशे,— दीक्षादिनिरूपणम् । चतुर्थे प्रकाशे,— दीक्षाविध्यादिः ।

पञ्चम प्रकाशे,– चाक्रिकादिनिरूपणम्। षष्ठे प्रकाशे,– पुरश्चरणादिनिरूपणम्। सप्तमे प्रकाशे,– शिखिस्थिरीकरणादिनिरूपणम्। अष्टमे प्रकाशे,– मुद्राज्ञापनादिनिरूपणम्। नवमे प्रकाशे,– पार्थिवपूजाविध्यादिः। दशमे प्रकाशे,– पुरश्चर्य्या-कौलिकाचारादिनिरूपणम्। एकादशे प्रकाशे,– सन्निधिमन्त्रादिकथनम्। द्वादशे प्रकाशे,– वेदमन्त्रादिनिरूपणम्। त्रयोदशे प्रकाशे,– नवपञ्च-वैदिकमन्त्रादिनिरूपणम्। चतुर्दशे प्रकाशे,– प्रत्यङ्गिरामन्त्रादिकथनम्। पञ्चदशे प्रकाशे,– वैदिकमन्त्रादिनिरूपणम्। षोडशे प्रकाशे,– दक्षिणाम्नायगणपतिमन्त्रकथनम्। सप्तदशे प्रकाशे,– ऊर्द्ध्वाम्नायगणपतिमन्त्रादिनिरूपणम्। अष्टादशे प्रकाशे,– पूर्व्वाम्नायगणपतिमन्त्रादिकथनम्। ऊनविंशे प्रकाशे,– पश्चिमाम्नायगणपतिमन्त्रादिनिरूपणम्। विंशेप्रकाशे,– उत्तराम्नायगणपति-मन्त्रकथनम्। एकविंशे प्रकाशे,– सूर्य्यमन्त्रादिनिरूपणम्। द्वाविंशे प्रकाशे,– नवग्रहमन्त्रादि-कथनम्। त्रयोविंशे प्रकाशे,– बहुभाग्नीमन्त्रनिरूपणम्। शास्तमन्त्रादिनिरूपणञ्च। चतुर्विंशे प्रकाशे,– दशदिग्गीशमन्त्रादिनिरूपणम्। पञ्चविंशे प्रकाशे,– दीपविध्यादिनिरूपणञ्च। अतःपरं नोपलभ्यते ॥

---

**No. 295.** **मोक्षधर्म्मार्थदीपिका**. By **अर्जुनमिश्रः**. Substance, Palm-leaf, $16 \times 2\frac{1}{2}$ inches. Folia, 212. Lines, 5 on a page. Extent, 4,439 çlokas. Character, Bengali. Date, Sk. 1456. Place of deposit, Tamluk, Kelomāl, Bābu Sāradāprasanna Ghoṣa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः कृष्णाय ॥

नत्वा जगद्गुरुं विष्णुं व्यासं पितरमेव च।
क्रियतेऽर्जुनमिश्रेण मोक्षधर्म्मार्थदीपिका ॥

सर्व्वोत्कृष्टधर्म्मजिज्ञासया प्रश्नं कृतवान्। युधिष्ठिर उवाच। धर्म्माः पिता-महेनेत्यादिना। अत्र प्रश्ने भीष्म उवाच उत्तरं दत्तवान्। मनूनां भयहेतु-त्वात् भीष्मः। इत्यादि।

**End.** त्वयि चाचमित्यनेन सर्व्वमतममन्योऽन्यसाहाय्यञ्च दर्शयता रागद्वेषविषय-भूता जन्तवः कः समन्ते चलः कार्य्यं इत्युपदेशोऽपि मुमुक्षुकर्त्तव्यप्रवृत्तिकया-भावाद्युत्पन्नतत्त्वज्ञानं प्रतीत्याशयः। उपदिष्टपरम्पराकथनं युधिष्ठिरस्य चौदार्य्यंच। तस्यानुष्ठानद्वारा परमश्रेयोऽनुमितमिति सूचितम् ॥०॥

**Colophon.** इति भारताचार्य्यपाठकराज-श्रीमदीशानतनयस्य भारताचार्य्य-श्रीमदर्जुन-मिश्रस्य कृतौ महाभारतार्थदीपिकायां टीकायां शान्तिपर्व्वणि मोक्षधर्म्मे उञ्छवृत्त्युपाख्यानं समाप्तम् ॥ ० ॥ समाप्तञ्च मोक्षधर्म्मार्थविवरणमिति।

प्रागुपायस्य संशुद्धिर्मशाकादि यथामति ।
मोक्षधर्म्मार्थविहती कः समर्थोऽस्ति सम्प्रति ॥
पितुः सदुपदेशेन विद्वद्भावानुरोधतः ।
प्राक्निबन्धस्य संशुद्धो क्षतो यत्नोऽधुना मया ॥
अपाधीति-लिपिग्रन्थशुद्धावरसमुच्चयः ।
विदुषां वेक्षया प्राच्यग्रन्थो नागमुपेयिवान् ॥
बुधैर्विमत्सरैरेव क्षन्तव्यं मम चापलम् ।
मूलग्रन्थोऽपि सोपायो लिपिभूषणवाञ्छितः ॥
गौड़ेश्वरसद्मावमन्त्रि श्रीमद्विश्वासरायतः ।
सम्यागुग्रेन लिखिता मोक्षधर्म्मार्थदीपिका ॥ ० ॥
श्रीलक्ष्मीमन्मनिवेद्य लिखितमिदम् । शकाब्दाः १४५६ ।

विषयः । महाभारतस्य शान्तिपर्व्वीयमोक्षधर्म्मप्रकरणस्य व्याख्यानम् ।

---

**No. 296.** मोक्षोपायसारः. Substance, country-made paper, $16 \times 2\frac{1}{2}$ inches. Folia, 245. Lines, 5 on a page. Extent, 5,297 çlokas. Character. Bengali. Date, Sk. 1588. Place of deposit, District Vâkuḍā, Viṣṇupura, Kādākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमः श्रीरामचन्द्राय ।
दिवि भूमौ तथाकाशे बहिरन्तश्च मे विभुः ।
यो विभात्यवभासात्मा तस्मै सर्व्वात्मने नमः ॥
अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान् ॥
गुरुमासीनमेकान्ते वाल्मीकिं सर्व्वदर्शिनम् ।
पप्रच्छ प्रणतो भूत्वा भरद्वाजो बहुस्वरम् ॥
भगवन् ज्ञातुमिच्छामि कथं संसारसङ्कटे ।
रामो व्यवहृतो ह्यस्मिन् कारुण्याद् ब्रूहि मे गुरो ॥
वाल्मीकिरुवाच ।
साधु वत्स भरद्वाज योग्योऽसि कथयामि ते ।
श्रुतेन येन सम्मोहमलं दूरं करिष्यसि ॥

क्षमस्य आपतस्यास्य (?) आतस्याकाशवर्णनम् ।
अपुनः स्मरणं साधो मन्ये विस्मरणं वरम् ॥
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्तदुत्पन्ना परा निर्व्वाणनिर्वृतिः ॥
अशेषेण परित्यागो वासनानां य उत्तमः ।
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः ॥
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥
अज्ञानसुघनाकारा वासनाहङ्कारशालिनी । (?)
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥
पुनर्जन्मान्तरं त्यक्त्वा स्थिता संभृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥
या शुद्धवासना भूयो न जन्मानर्थभाजनम् ।
ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥
जीवन्मुक्तिपदं प्राप्तो यथा रामो महामनाः ।
तत्तेऽहं शृणु वक्ष्यामि जरामरणशान्तये ॥
विद्यागृहाद्विनिष्क्रम्य रामो राजीवलोचनः ।
दिवसान्यनयद्गेहे लीलाभि चाकुतोभयः ॥
अथ गच्छति काले तु रामस्य गुणशालिनः ।
तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितं मनः ॥
राघवश्चिन्तयन्नेवं समुपेत्य चरणौ पितुः ।
हंसः पद्माविवा + + जग्राह नखकेशरौ ॥ इत्यादि ।

**End.** इच्छाविस्फुरितो जीवो विजहाति न दीनताम् ।
असद्वेदनयत्नस्तु तूष्णीमेवास्तु वासनम् ॥
अबोधाद्यदि निर्मुक्तं भुक्तं शरगतं यथा ।
तं प्रत्याहारवड़िशेनेच्छामत्स्यं नियच्छति ॥
इदमस्त्विति सोद्वेगमाङ्कः कल्पनमुत्तमम् ।
तत्सर्व्वाभावनं तस्य कल्पनात्याग उच्यते ॥
स्मरणं विद्धि सङ्कल्पं शिवमस्मरणं विदुः ।
तत्र प्राणानुभूतश्च नानुभूतं तदुच्यते ॥ (?)

अनुभूतां नानुभूतां स्मृतिं विस्मृत्य काष्ठवत् ।
सर्व्वमेवाशु विस्मृत्य मूढ़स्तिष्ठ महामतिः ॥
ऊर्द्धबाहुर्विरौम्येष न च कश्चित् शृणोति मे ।
असङ्कल्पः परं श्रेयः स किमर्थं निषेव्यते ॥
किल तूष्णीं स्थितेनैव कल्पदं प्राप्यते यदा ।
परमं यत्र साम्राज्यमपि राम तृणायते ॥
गम्यदेशैकनिष्ठस्य यथा पान्थस्य पादयोः ।
स्पन्दो ... ... ... तथा स्पन्दः स्वकर्म्मसु ॥
अत्यन्तं तन्मयो भूत्वा तथा तिष्ठ यथास्ति नो ।
अहं ममेति संविन्न दुःखतोऽपि विमुच्यसे ॥
असंविदन् प्रमुच्यसे यदिच्छसि तथाचर ।
शिवं सर्वगतं शान्तं बोधात्मकमजं शुभम् ॥
तदेकभावनं राम कर्म्मत्याग इति स्मृतः ॥ * ॥

Colophon. इति श्रीमदीश्वरस्वच्छन्दाचार्य्यमङ्गलालङ्कारपण्डित—श्रीमदभिनन्दसमुद्धृते वाल्मीकीये रामायणे मोक्षोपायसारे निर्व्वाणप्रकरणं समाप्तम्॥०॥ शुभमस्तु
शाकेऽष्टाचलवाणभूमिगणिते सूर्य्ये धनूराशिगे ।
ग्रामे काञ्चनपाड़के सुरधुनीतीरे च दर्शे तिथौ ॥
एषा श्रीद्विजरामलक्ष्मणकरजावष्टावलिपुस्तके (?)
वाशिष्ठे रघुनन्दनस्तदनया प्रीणातु वर्णस्त्रिया ॥
मासपौषलिखितम् । शकाब्दाः १५८८ ॥०॥

**विषयः।** योगवाशिष्ठस्य निर्व्वाणप्रकरणमिदम् । अत्र च प्रथमसर्गे विश्वामित्रस्य दशरथसम्भाषणम् । वैराग्योत्पत्तिनिरूपणञ्च । २ य सर्गे जगद्दोषप्रकाशादिनिरूपणम् । ३ य सर्गे भोगदोषादिनिरूपणम् । ४ र्थ सर्गे मुमुक्षुव्यवहारादिनिरूपणम् । ५ मसर्गे प्रकरणार्थनिर्द्देशादिः । ६ष्ठ-७ मयोः सर्गयोः सूच्युपाख्यानादिः । ८ मसर्गे ऐन्दवोपाख्यानम् । ९ मसर्गे कृत्रिमेन्द्रोपाख्यानम् । १० मसर्गे चित्तोपाख्यानादिः । ११ शसर्गे बालाख्यायिकादिः । १२ शसर्गे शम्बरिकोपाख्यानादिः । १३ शसर्गे उत्पत्तिप्रकरणम् । १४ शसर्गे भार्गवोपाख्यानादिः । १५ शसर्गे दामाद्युपाख्यानम । १६ शसर्गे भीमाद्युपाख्यानम् । १७ शसर्गे दाशूराख्यायिकादिः । १८ शसर्गे उपशमप्रकरणादिः । १९ शसर्गे गाधिवृत्तान्तादिः । २० शसर्गे उद्दालकोपाख्यानादिः । २१ शसर्गे सरघूपाख्यानादिः । २२ शसर्गे भासविलाससंवादादिः । २३ शसर्गे वीतहव्योपाख्यानादिः । २४ शसर्गे निर्व्वाणादिनिरूपणम् । २५ शसर्गे आध्यात्मिकपूजनादिनिरूपणम् ।

१६ पटले बिन्दुनिदर्शनम् । १७ पटले मीनाख्यायिका । १८ पटले पक्षिणोपाख्यानादिः । १९ पटले वैतालोपाख्यानादिः । २० पटले किरातोपाख्यानम् । २१ पटले मत्स्यकाख्यानादिः । २२ पटले शिखिध्वजज्ञानप्राप्तिः । २३ पटले शिखिध्वजोपाख्यानादिः । २४ पटले मतत्रय-निरूपणम् । २५ पटले इक्ष्वाकुबोधनादिनिरूपणम् ।

---

**No. 297.** यन्त्रचिन्तामणिः, (यन्त्रकल्पः). Substance, country-made paper, 12 × 3 inches. Folia, 38. Lines, 9 on a page. Extent. 662 çlokas. Character, Bengali. Date, Sambat, 1843. Place of deposit, Ḍhākā, Ramuṇā's Kālimaṭha. Appearance, old, Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । शिव उवाच ।
साधु साधु महाप्राज्ञे लोकानां हितकारिके ।
इममर्थं न केनापि पृष्टोऽहं पद्मलोचने ॥
शृणुष्वैकाग्रचित्ता त्वं रहस्यं चपविविद्रम् ।
कल्पचिन्तामणिर्नाम गुह्याद्गुह्यतमं महत् ॥
सर्व्वागमस्य सारञ्च तन्त्राणां सारमुत्तमम् ।
आथर्व्वणस्य वेदस्य सारात्सारतरं परम् ॥
अस्मिन् कल्पे भविष्यन्ति चिन्तामणिमये शुभे ।
यन्त्राणि बहुधा देवि कामकर्म्मकराणि च ॥
एतत् कल्पं सदा यस्य लिखितं तिष्ठते गृहे ।
संपूज्यते प्रतिदिनं प्रभावं तस्य मे शृणु ॥
अपमृत्युभयं नास्ति नास्ति चौरभयं तथा ।
भूत-प्रेत-पिशाचानां प्रभावो नैव जायते ॥ इत्यादि ।

**End.** बन्धमोचनसन्देहो बन्दी देवीप्रसादतः ।
शृणोति यस्तु धर्म्मात्मा बाध्यमानं कदाचन ॥
नापमृत्युश्च नान्यच्च जायते मत्प्रसादतः ॥

**Colophon.** इति श्रीहरगौरीसंवादे द्वादशशतश्लोकनिर्गतयन्त्रचिन्तामणौ यन्त्रकल्पः सम्पूर्णः ॥ संवत् १८४३ ॥

**विषयः ।** शिवाशिवयोः संवादेन अभीष्टदायकविविधयन्त्रविधिः । तत्र तत्र प्रत्येकं यन्त्राणां संस्थानकथनञ्च । अनेकानि यन्त्राणि प्रदर्शितानि । यथा,— मोहनयन्त्रम् ।

राजवशीकरणयन्त्रम् । यावज्जीवं कामिनीवशीकरणयन्त्रम् । स्त्रियस्तम्भनयन्त्रम् । राजकोप-मोचनयन्त्रम् । दुष्टवशीकरणमृत्युञ्जययन्त्रम् । धनिकवशीकरणयन्त्रम् । राजदुष्टवशीकरण-यन्त्रम् । विवादविजययन्त्रम् । जगद्वशीकरणयन्त्रम् । भृत्यवश्यपिशाचयन्त्रम् । कामिनीस्म-कालावस्थयन्त्रम् । कोपहरयन्त्रम् । सौसौभाग्यप्रदयन्त्रम् । प्रियवशीकरणयन्त्रम् । कामराज-यन्त्रम् । कामिनीमदनभञ्जनयन्त्रम् । राजाङ्गनावश्यकरयन्त्रम् । आकर्षणयन्त्रम् । निधद्दर्शन-यन्त्रम् । मानिनीकर्षणयन्त्रम् । मुखस्तम्भनादियन्त्रम् । गमनस्तम्भनादियन्त्रम् । पिशुनमर्द्दन-यन्त्रम् । दौर्भाग्यवर्द्धनयन्त्रम् । शत्रुविद्वेषणयन्त्रम् । बन्धुविद्वेषणयन्त्रम् । मारणयन्त्रम् । उच्चाटनयन्त्रम् । रक्षाकरयन्त्रम् । शान्तिकयन्त्रम् । पौष्टिकयन्त्रम् । दौर्भाग्यनाशनयन्त्रम् । ज्वरोपशमनयन्त्रम् । बालकरक्षाकरयन्त्रम् । भूतापस्मारादिनाशनयन्त्रम् । सर्पस्तम्भनयन्त्रम् । भूतनाशनादियन्त्रम् । एकाहिकज्वरनाशनयन्त्रम् । गर्भरक्षाकरयन्त्रम् । सर्व्वरक्षाकरयन्त्रम् । बन्धमोचकरयन्त्रम् । दुष्टसत्त्वमोचनयन्त्रम् । निगड़मोचनयन्त्रञ्च । इति शम् ।

---

No. 298. यन्त्रचिन्तामणिः (वश्याधिकारः). Substance, country-made paper, 10 × 5 inches. Folia, 16. Lines, 8 on a page. Extent, 384 çlokas. Character, Bengali. Date, ? Place of deposit, District 24-Parganās, Post Office Naihāṭi, Kā̃ṭhālpāḍā, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ श्रीगुरवे नमः ।

स पातु देव्याः कबरीविलासो
व्याजेन यत्या गिरिकन्यकायाः ।
यः पश्यतो वालवशाङ्कमौलेः
चवं न सर्व्वमलपदं बभूव ॥ (?)
एकान्ते देवदेवेशं गत्वा देवी शुचिस्मिता ।
उपगम्य शनैर्वाक्यं प्रोवाच जगदम्बिका ॥ इत्यादि ।

**End.** इति वश्याख्यं महायन्त्रं कथितं मया पुरा ।
न देयं यस्य कस्यापि साधकेन वरानने ॥ ० ॥

**Colophon.** इति यन्त्रचिन्तामणौ प्रत्यक्षसिद्धिप्रदे वश्याधिकारे तृतीयपाठिका ॥ ० ॥

**विषयः ।** महामोहनयन्त्रनिरूपणम् । श्रीराजसम्पुटयन्त्रादिनिरूपणम् । राजमोहन-यन्त्रादिनिरूपणम् । मृत्युञ्जययन्त्रादिनिरूपणम् । शत्रुघातनकृत्यन्त्रनिरूपणम् । क्रोधशमन-

यन्त्रनिरूपणम् । सौभाग्यकरयन्त्रनिरूपणम् । औषधयन्त्रनिरूपणम् । मदनमर्दनयन्त्र-निरूपणम् । कामाख्यायन्त्रादिनिरूपणम् ।

---

**No. 299.** योगकल्पलतिका. By रामगतिसेनः. Substance, country-made paper, 10×4 inches. Folia, 101. Lines, 7 on a page. Extent, 1,988 çlokas. Character, Bengali. Date, ? Place of deposit, Ḍhākā, Paṭuyāṭuli, Bābu Rājakumāra Sena. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥
यस्यैषत्करुणारजोऽप्युरसतोऽज्ञानान्धकारं हरन्
बोधेन्दूदय ... ... ... ... श्रीनाथपादाम्बुजम् ।
सञ्चाचारणमञ्जुचिन्तनरसैर्मध्ये सुखं चिन्तयन्
श्रीमद्रामगतिर्भिषग्वर इमं प्रथ्नाति सत्संग्रहम् ॥
ये ये योगविशेषवैद्यविषयादुद्योगिनो योगिनो
ये योगागमनं च सत्सुलभं कर्त्तुं यतन्ते बुधाः ।
ये वा जन्मसमस्तपापनियतं ... ... द्योगका-
ङ्क्षे तेऽमृतमयोगकल्पलतिकां ... ... भजन्तु द्रुतम् ॥
अज्ञानदैन्यचयखण्डनचारुशीला
या सेवया सकलवर्गधनं ददाति ।
आनन्दपुष्परचिरस्तवकावदीप्रा
सा योगकल्पलतिकास्तु सतां मुदेऽसौ ॥
... ... ... ... ... ... ... ... ... ... ।
यावद्धर्मक्षयो न स्यात् ममता यावदेव हि ।
यावद्देहाभिमानोऽस्ति तावत् तत्त्वकथा कुतः ॥
अतएव रामादौ विवेकोदयमाह । तदुक्तं कुलार्णवे ।
दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः कृतो येन स सुखी नापरः प्रिये ॥

आरब्धं सर्व्वदुःखानामाश्रयं सकलापदाम् ।
आलयं सर्व्वपापानां संसारं वर्जयेत् प्रिये ॥
अरण्यवस्मनं घोरं निर्मीलनमहाविषम् ।
अमलकायं देवि संसारासक्तचेतसाम् ॥ इत्यादि ।

End. यथा इदं मुने प्रोक्तं मयि कल्याणमस्तु ते ।
देयं प्रणामोऽभिमतमागच्छोत्तिष्ठ पार्व्वति ॥
इत्युक्त्वा नीलकण्ठोऽसौ त्वत्पुण्याञ्जलिर्मयि ।
ममार परिवारेण सममम्बरकोटरम् ॥
ततः प्रभृति तेनैव क्रमेणार्चनमात्मनः ।
अद्य यावत् गतव्ययः कुर्व्वन्नमरसंस्थितः ॥
अनेनार्चाविधानेन मये ... वासना ।
... ... ... ... ... ... ... ... ॥
इष्टा मया रघुपते सन्नमुक्तेन चेतसा ।
संसारविरसारण्ये विचरास्मिन् ... ॥
राम उवाच ।
इदानीं संशयो ब्रह्मन् विनिष्टो विशेषतः ।
ज्ञातं ज्ञातव्यमखिलं जाता ... ... ... ... ॥
परामभेद्यामपरैर्दलितामामतन्नजाम् ।
संसारसमरे सम्यग् धीरतामागतं मनः ॥
परिगलितविकल्पतामुपेतं
प्रगलित ... दीनसारसत्वम् ।
विजगति यदतिप्रसन्नरूपं
प्रमुदितमम्बर ... ... मनो मे ॥
इति निर्व्वाणप्रकरणे पूजोपाख्यानम् ॥

Colophon. इति श्रीरामगतिसेनकृत सारसंग्रहे योगकल्पलतिकायां जीवन्मुक्तलक्षणं नाम चतुर्दशस्तवकः समाप्तः ॥

विषयः । चतुर्दशस्तवकपल्लवितेऽस्मिन् योगकल्पलतिकाग्रन्थे कुलार्णवादितन्त्रोक्तनानाविध-प्रमाणवचनैर्योगविवरणं सम्यक् प्रमापितम् । तत्र प्रथमे स्तवके विवेकोदयविवरणम् । द्वितीये स्तवके योगस्थल-कुण्डज्ञान-योगिनियमादिकथनम् । तृतीये स्तवके योगासनविवरणम् । चतुर्थे

स्तवके षट्शुद्धिविवरणम्। पञ्चमे स्तवके नाडीशुद्धिविवरणम्। षष्ठे स्तवके प्राणायामविवरणम्। सप्तमे स्तवके प्रत्याहार-धारण-पञ्चभूतचिन्तन-द्विविधध्यानसमाधीनां विवरणम्। अष्टमे स्तवके पञ्चामरयोगविवरणम्। नवमे स्तवके मुद्राभेदविवरणम्। दशमे स्तवके कुम्भकभेद-षट्चक्रभेद-कथनम्। एकादशे स्तवके मणिचालनविवरणम्। द्वादशे स्तवके नादसन्धानविवरणं, वायोर्ध्वसहद्विनिरूपणं, सप्तपदाज्ञानभूमिनिरूपणं, संसारबन्धात् मुक्त्युपायकथनञ्च। त्रयोदशे स्तवके चित्तशमनोपाय-व्यवहारबोध-जीवन्मुक्तलक्षणादिविवरणम्। चतुर्दशे स्तवके योगशास्त्रे अभ्यासस्यैव योगाधिकारित्वमिति कीर्त्तनम्।

---

**No. 300.** योगविचारणम्. By गोपीकान्तः. Substance, country-made paper, 17 × 5 inches. Folia, 8. Lines, 9 on a page. Extent, 252 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasimha, Vādari, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीगुरवे।

नत्वा श्रीगुरुपादाब्जं नखचन्द्रविराजितम्।
निष्कलङ्कं रश्मिछन्दप्रकाशितदिगन्तरम्॥
सहस्रदलमध्यस्थं चन्द्रमण्डलमध्यगम्।
हंसपीठे तु सततं ध्यानगम्यञ्च शान्तिदम्॥
अज्ञानतिमिराध्वान्त नाशनं सर्व्वसिद्धिदम्।
योगशास्त्रमतं ज्ञात्वा योगिनाञ्च मतं तथा॥
स्वदेहे भावयेन्नित्यं योगं नान्यमनाः सदा॥
श्रीगुरोरुपदेशेन गोपीकान्तेन धीमता।
योगतत्त्वं हि संक्षेपात् तन्यते यत्नतो मुदा॥
स्वदेहे भावयेदिति कथमित्याह उक्तः कौलार्णवे शिवेन पार्व्वतीं प्रति॥
इत्यादि।

**End.** मात्राभिः परिपूरितैः कुलगतं विशुद्धिशुद्धाम्बुजम्
चक्रं स्वरसंयुतं द्विदलकं रत्नाभमाज्ञापुरम्।
तस्मादूर्द्ध्वमधोमुखं विकसितं पद्मं सहस्रच्छदम्
नित्यानन्दमयीं सदा शिवपुरीं शक्तिं मनः भावनीम्॥

द्रुतमतरलशोभाशोणवत्पूर्वचन्द्रो
हिमरचितविरागो चंचपीडान्तरज्ञः ।
अभयवरकराब्जो योगपूर्वेकनेत्रः
कुलकमलविलासी पातु मां देवदेवः ॥
यस्यानां ध्यानमेवं विदितनवयुवा रामलन्नानवाशी
ज्योत्स्नाजालैर्नवेन्दुकुलकमलवनीकान्तकान्तिप्रकाशम् ।
मञ्जाकाश्यादितीर्थैरजरलमलमचापुष्पपुञ्जप्रचारं
वन्दे दीक्षागुरूणां चरणसरसिजं वन्द्यमानन्दकान्तम् ॥

**Colophon.** इति योगविचाराख्यं समाप्तम् ।

**विषयः ।** तन्त्रोक्तवाक्यादिविचारमुखेन योगतत्त्वनिरूपणम् ।

---

**No. 301. योगसारः.** Substance, country-made paper, 17 × 4 inches. Folia, 24. Lines, 8 on a page. Extent, 684 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihāri Rāya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
श्रीमहादेव उवाच ।
मानसे देवदेवेशि योगेशि प्राणवल्लभे ।
सर्व्वज्ञातः सुरेशानि संसारतारिणि शिवे ॥
मरणामलदीनानांपरित्राणपरायणे ।
त्वां विना देवदेवेशि संसारं त्यजत् प्रिये ॥
एकं संप्रष्टुमिच्छामि यदि तेऽनुग्रहो मयि ।
योगसारं महेशानि कथयास्मानुकम्पया ॥
संसारतारणे देवि नरचित्तं यतः प्रिये ।
अपारघोरसंसारे सर्व्वे दुःखमलीमसाः ॥
जायन्ते च म्रियन्ते च असंख्या जीवराशयः ।
तेषामन्तो महेशानि विद्यते न मतीनते ॥
अनेकदुःखसम्भूताश्चेन्द्रियां × × तत्पराः ।
भवन्त्येव महेशानि सम्भूतानि युगे युगे ॥
केनोपायेन देवेशि नरा मोक्षमवाप्नुयुः ॥

श्रीदेव्युवाच ।
अस्ति देव परब्रह्मस्वरूपी निर्गुणः परः ।
सर्व्वज्ञो विश्ववेत्ता च सर्व्वेशो निर्म्मलोद्वयः ।
स्वयं ज्योतिर्म्मयो देवो निर्व्विकारो निरञ्जनः ॥ इत्यादि ।

**End.** ततो ज्ञात्वा ब्रह्मवर्त्मं योगकर्म्म समभ्यसेत् ।
शरीरस्थापि नित्यं तज्ज्ञात्वा योगं समभ्यसेत् ॥
परं ब्रह्म नित्यरूपं सर्व्वस्मिन्नस्ति भैरव ।
ज्ञात्वा च साधयेद् योगं परं ब्रह्मस्वरूपकम् ॥
इति ते कथितं किञ्चिद् दिव्यचक्रस्य वर्णनम् ।
विस्तरेण महेशान किमन्यत् कथयामि ते ॥

**Colophon.** इति श्रीमद्योगसारसङ्ग्रहे सर्व्वागमोत्तमे श्रीपार्व्वतीशिवसंवादे ब्रह्मसारस्यां संहितायां षट्चक्रादिचक्रे द्विपात्रदिव्यचक्रस्य वर्णनं नवमः परिच्छेदः ॥

**विषय:।** महादेवं प्रति देव्या ब्रह्मस्वरूपादिकथनम् । ब्रह्मणो योगगम्यत्वकथनम् । तदादौ नीरोगत्वेन योगाधिकारकथनप्रसङ्गेन व्याधिनाशनोपायकथनम् । तृष्णानाशनोपायकथनम् । वनाचारीकरणोपायकथनम् । मूत्रपुरीषनाशनोपायकथनम् । शुक्रस्तम्भनोपायकथनम् । आलस्यनाशनोपायकथनम् । निद्रानाशनोपायकथनम् । इन्द्रियनियमनोपायकथनम् । मन्त्रसिद्धिकथनम् । इष्टविद्यानां मन्त्रादिकथनञ्च । अथ पुरश्चरणविधिः । भक्ष्याभक्ष्यकथनम् । आसनादिकथनम् । जपमालानिरूपणम् । जपसंख्यायां निषिद्धद्रव्यकथनम् । वर्णमालाकथनम् । विविधयोगनिरूपणम् । वज्रासनमाहात्म्यादिकथनम् । योगिमाहात्म्यादिकथनम् । शरीरस्थचक्रादिनिरूपणम् । षट्चक्रदेवतानां ध्यानपूजादिविधिः । षट्चक्रवर्णनञ्च ।

---

**No. 302. योगावली.** Substance, country-made paper, 12×3 inches. Folia, 19. Lines, 11 on a page. Extent, 836 çlokas. Character, Bengali. Date, SK. 1644. Place of deposit, Brāmhaṇamaṇḍalī, *viâ* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.** (खण्डितत्वात् प्रारम्भवाक्यं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम् ।)
इके शिवालये दृष्टा मधुना रक्तचन्दनम् ।
मैत्रयो रक्तवेषस्य तिमिरं हन्ति लेखितम् ॥

वटबीजं समानीय मधुना चापि सेवितम् ।
समे शिलातले घृष्ट्वा चक्षुषोरञ्जनात्तथा ।
त्रिफलाबीजमानीय मरीचं तत्र योजयेत् ॥ इत्यादि ।

**End.**

गोदुग्धं हरितालेन संयुक्तं काकजिह्वया
चूर्णयित्वा यस्याः शिरसि दीयते सा वशीभवति ।
अपामार्गं शम्बूकञ्च शिञ्जिडीहलकङ्गुकम् ।
द्रव्यं हत्वा लौहकिट्टं शोधयित्वा समं नयेत् ॥
यवक्षारं टङ्कणञ्च समभागं तथैव च ।
रसनायां स्थापयित्वा जलेन चर्वितं पिबेत् ॥
यत्किञ्चिदौदरं रोगमामजन्यं हरेत् क्षणात् ।
अम्लपित्तं नाशयति प्लीहगुल्मादिकं तथा ॥

**Colophon.**

इति शिवदुर्गासंवादे योगावली समाप्ता ॥ ० ॥
श्रुतिश्रुतीतीन्दुमिते शकाब्दे
नत्वा महेशं द्विजरामरामः ।
रवौ धनुःस्थे शुभशुक्लपक्षे
तिथौ चतुर्थ्यां व्यलिखत् स्वपुस्तम् ॥ ० ॥
इयं योगावली प्राप्ता ग्रामे कटकसंज्ञके ।
श्रीजगन्नाथमालोक्यागमद्दिष्टे सुराधिपम् ॥ ॐ

**विषयः** । चक्षूरोगादिचिकित्सा । मुखरोगादिचिकित्सा । शूलचिकित्सा । इन्द्रलुप्तरोगादिचिकित्सा । कामगुल्मोदररोगादिचिकित्सा । यक्ष्मवातरोगादिचिकित्सा । बन्ध्याया गर्भधारणोपायकथनम् । भगरोगचिकित्सा । अतिसाररोगादिचिकित्सा । श्लीपदकुष्ठरोगादिचिकित्सा । कुष्ठरोगादिचिकित्सा । निर्गुण्डीकल्पनिरूपणम् । गन्धकभल्लातकादिकल्पनिरूपणम् । वशीकरणादिच ।

---

**No. 303. योगावलीतन्त्रम् .** Substance, country-made paper, 8 x 3 inches. Folia, 18. Lines, 8 on a page. Extent, 297 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, Post Office Naihāṭi, District 24-Parganās, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, tolerable. Verso. Generally correct.

**Beginning.** ॐ गौरावाहव्या ॥

श्रीमहादेव उवाच ।

एकीभूतं यथाकामं शरीरं जायते तथा ।
पद्मं सम्पदलं चाग्रं प्रमाणं द्वादशाङ्गुलम् ॥
तस्य मध्ये गते वायौ तदा गर्भः प्रजायते ।
वामपक्षे भवेन्नारी दक्षिणे पुरुषोत्तमः ॥
वामामतिश्च तथाग्रं द्विपक्षं दक्षिणामतिः ।
एकीभवेद्यदा कामं तदा क्लीवः प्रजायते ॥
कर्म्मणा दैवनेत्रेण जन्तुर्देहं प्रपद्यते ।
स्त्रियः प्रविश्य उदरं पुंसोरेतकणाश्रयः ॥
कललं चिरात्रेण पञ्चरात्रेण बुद्बुदम् ।
शोणितं दशरात्रेण मांसपिण्डं चतुर्द्दशे ॥ इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

विषयः । स्त्रीपुंनपुंसकादिजन्मकारणनिरूपणम् । शरीरादीनां शोणितमांसाद्युत्पत्ति-कालनिरूपणम् । देहस्थनाड्यादिनिरूपणम् । नाड्यादिनिरूपणम् । नाड्यादिस्थितिनिरूपणम् । वायुनाड्यादिदोषादिना चिन्तनोपायनिरूपणञ्च ।

---

**No. 304.** योनितन्त्रम् . Substance, country-made paper, 13 × 3 inches. Folia, 22. Lines, 8 on a page. Extent, 473 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः परदेवतायै ।

कैलासशिखरारूढं देवदेवं जगद्गुरुम् ।
सदा तपस्तुष्टौ दुर्गा पप्रच्छ नगनन्दिनी ॥
चतुःषष्टीनि तन्त्राणि कृतानि भवता प्रभो ।
तेषां मध्ये प्रधानानि वद मे करुणानिधे ॥

श्रीशिव उवाच ।

शृणु पार्व्वति चार्व्वङ्गि अतिगुह्यतमं प्रिये ।
कोटिवारं प्रयत्नाच्च तथापि श्रोतुमिच्छसि ॥

जीवां जभावाचार्य्येऽपि प्रयत्नात् परिरक्षयेत् ।
गोपनीयं प्रयत्नेन न प्रकाश्यं कदाचन ॥
मन्त्रपीठं यन्त्रपीठं योनिपीठञ्च पार्व्वति ।
योनिपीठं प्रधानं हि तव स्नेहात् प्रकाश्यते ॥
हरिहरादिदेवाश्च सृष्टिस्थित्यन्तकारकाः ।
सर्व्वे योनिसमुद्भूताः प्रभुञ्च नमन्ति हि ॥
शक्तिमन्त्रमुपास्यैव यदि योनिं न पूजयेत् ।
तेषां दीक्षा च मन्त्रश्च नरकायोपपद्यते ॥
अहं मृत्युञ्जयो नाम तव योनिप्रसादतः ।
तव योनिं महादेवि भावयाम्यहर्निशम् ॥
पूजयामि सदा दुर्गे स्तुतपद्मे चैव सुन्दरि ।
दिव्यभावो वीरभावो यस्य चित्ते विराजते ॥
अनायासेन देवेशि मुक्तिस्तस्य करे स्थिता ।
शक्तिमन्त्रं पुरस्कृत्य यो वै योनिं प्रपूजयेत् ॥
स धन्यः स कविर्धीमान् × × पि च सुरासुरैः । इत्यादि ।

**End.**

कृष्णपुष्पैः पूजयित्वा ध्यात्वा चैव दिगम्बरीम् ।
जप्त्वा मुक्तं श्मशाने च मधूनां मरणं भवेत् ॥
कालीकल्पमिदं प्रोक्तं गोपयेन्मातृजारवत् ।
गोपने सर्व्वसिद्धिः स्यात् प्रकाशान्मरणं भवेत् ॥

**Colophon.** इति योनितन्त्रे हरपार्व्वतीसंवादे सप्तदशः पटलः ॥

**विषयः ।** अत्र प्रथमं योनिपूजाप्रशस्त्यादिकथनम् । ततः पूज्यापूज्ययोनिकथनम् । अचलाया योनेः पूजने दोषादिकथनम् । पञ्चतत्त्वविधिः । कौलानामुत्तमादिभेदकथनम् । योनौ महाविद्योपासनाविधिः । तत्त्वेन तिलकविधिः । तत्त्वेन पूजाविधिः । वीरसाधनविधिः । आसवोपासनाविधिः । अन्तर्य्यागविधिः । मन्त्रराजविधिः । कालीप्रीतिजननोपचारादिकथनम् । वीरपुरश्चरणविधिः । पञ्चतत्त्वशोधनादिविधिः । पूजास्थानादिनिरूपणम् । साधनविधिश्च ।

---

**No. 305.** रत्नकोषविचारः . By रत्नेश्वरन्यायालङ्कारः . Substance, country-made paper, 16½ × 3 inches. Folia, 32. Lines, 8 on a page. Extent, 1,456 çlokas. Character, Bengali. Date, ? Place of deposit, Sātbheyepāḍā, *viâ* Vaidyerbāzār, District Ḍhākā, Paṇḍita Tārākānta Vācaspati. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । परोक्षज्ञानं निश्चयात्मकमेवेति सिद्धान्तः । रत्नकोषकारस्तु सत्प्रतिपक्षसम्बलनदशायां संशयात्मिकानुमितिं स्वीकरोति तत्र संशयत्वस्य लिङ्गपरामर्शादिजन्यतावच्छेदकतया कथं तत्र संशय उत्पद्यते इति नाशङ्कनीयं संशयत्वस्य जन्यतावच्छेदकत्वेऽपि एकधर्म्मिकविरुद्धोभयव्याप्यवत्ताज्ञानदशायामर्थवशादेकधर्म्मिकविरुद्धोभयधर्म्मप्रकारकज्ञानरूपसंशयत्वावच्छिन्नोत्पत्तेरावश्यकत्वात् । अतएव सामग्रीसमाजादेव सर्व्वत्र संशयोत्पत्तिनिर्व्वाहात् विरुद्धधर्म्मप्रकारकज्ञानत्वादिरूपसंशयत्वं न कस्यापि जन्यतावच्छेदकमिति नव्याः । न चैकधर्म्मिकविरुद्धोभयव्याप्यवत्तानिर्णयदशायामेकधर्म्मिकवास्तवविरुद्धोभयधर्म्मप्रकारकानुमित्युत्पत्तावपि तत्र प्रयोजनविरहेण विरोधाभासकस्याकल्पनात् तादृशानुमितिविरोधावगाहित्वं न सम्भवतीति कथं तस्याः संशयत्वं विरोधविषयकज्ञानस्यैव तथात्वादिति वाच्यं । वह्न्यभावविरुद्धवह्नित्वादिना व्यापकत्वावगाहिपरामर्शस्य तेनैव रूपेण वह्न्याद्यनुमित्युत्पादकतया तादृशपरामर्शकालीनविरुद्धोभयप्रकारकानुमितौ तत एव विरोधभानसम्भवात् एककोटिव्याप्यवत्तानिर्णयस्यापरकोट्यनुमितिप्रतिबन्धकत्वात् कथमुभयव्याप्यवत्ताज्ञानकालेऽनुमितिरिति तु नाशङ्कनीयं तादृशप्रतिबध्यप्रतिबन्धकभावे मानाभावात् ॥ इत्यादि ।

**End.** अथ प्रतिबन्धकताकल्पनाधिक्यविरहेऽपि परामर्शादिघटितानुमित्युत्पादप्रयोजकसामग्रीव्याप्तौ विरोधिकोट्यनुमितिसामग्र्यभावनिवेशे प्रयोजनाभावादुक्तसंशयानुयोगापत्तिर्दुर्व्वारेति तु नाशङ्कनीयं स्वपरकोट्यनुमितिसामग्र्यभावस्य सामग्रीव्याप्तावनिवेशे उपदर्शितनानाविधशाब्दादिसामग्र्यभावनिवेशप्रसङ्गात्तदपेक्षया लाघवेनापरकोट्यनुमितिसामग्र्यभावस्यैव निवेशयितुमुचितत्वमिति न किञ्चिदप्यनुमितेः संशयत्वापत्तिरिति कृतमतिविस्तरेण ॥

**Colophon.** इति श्रीरत्नेश्वरन्यायालङ्कारस्य रत्नकोषविचारः ॥

**विषयः ।** निश्चयात्मकस्य परोक्षज्ञानस्य सत्प्रतिपक्षसम्बलनदशायां संशयात्मिकानुमितिस्वीकाररूपस्य रत्नकोषकारमतस्य च सम्यग्विचारणम् । तत्र संशयस्य लक्षणकथनम् । चक्षुरादिगोचराणां लक्षणकथनम् । अनुमितेर्लक्षणकथनम् । प्रत्यक्षस्य लक्षणकथनम् । अथ विशेष्यविशेषणविचारः । अवच्छेदकविचारः । जातिविचारः । सामग्रीविचारः । विरुद्धधर्म्मविचारश्चेति ।

---

**No. 306.** रत्नमाला . Substance, country-made paper, 13 × 3 inches. Folia, 8. Lines, 8 on a page. Extent, 176 çlokas. Character, Bengali. Date, Sk. 1696. Place of deposit, District Ḍhākā, Vikramapura, Bharākor, Bābu Dvārakānātha Dāsa Vaidya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः परदेवतायै।

मूर्द्धन्यब्जे निषण्णं तुहिनकरसमं पुस्तकवर्णं द्विहस्तम्
वामोर्व्वासीनकान्तं सकलभयहरं कल्पवृक्षस्वरूपम् ।
ध्यानस्थं ध्यानगम्यं दुरितचयमहाध्वान्तविध्वंसदीपं
दिव्यज्ञानप्रदीपं स्मितसुभगमुखं श्रीगुरुं संस्मरामि ॥
के कञ्जे कर्णिकायां कमलवरमुखीं कान्तकञ्जायताक्षीं
कान्तं कञ्जं दधानामशुभभयहरां रक्तवर्णां द्विहस्ताम् ।
कान्तालङ्कारयुक्तां त्रिभुवनजननीं कान्तसव्योरुसंस्थां
कान्तां कान्ताङ्घ्रिकञ्जां सुकलितकरुणां नाथकान्तां स्मरामि ॥ इत्यादि ।

**End.** कस्त्वां स्तोतुं समर्थस्त्रिजगति वरदां पुण्यवान् लब्धवर्णो
नाहं विद्याविनोदी गुणमपि सुतरां नास्तवान् पापयुक्तः ।
मत्वैतद्देवि दीने मयि कुरु करुणालेशमम्ब प्रसन्ने
दीनत्वं नैव सिन्धुर्व्रजति जललवत्यागतः क्वापि काले ॥
स्तोत्रमेतत् पठेद् यो गुरुपदकमलध्यानयुक्तान्तरात्मा
मर्त्त्यं तस्य कदाचित् कुलस्वगमथनास्मारसम्याधिरूढः ।
कीर्त्तिं कान्तिञ्च लक्ष्मीं रिपुकुलविजयं दिव्यकान्ताञ्च पुत्रान्
दीर्घायुष्ट्वञ्च धर्म्मं धनमपि विपुलं मुक्तिमन्ते समेति ॥

**Colophon.** इति रत्नमालाग्रन्थरहस्यस्तोत्रं समाप्तम् ॥ शकाब्दाः १६९६ ।

**विषयः ।** स्तुतिव्याजेन भगवत्या रूपगुणमाहात्म्यादिवर्णनम् ।

---

**No. 307.** रसकल्पसारतत्त्वम् . By वृन्दावनदासः . Substance, country-made paper, 13 × 5 inches. Folia, 6. Lines, 9 on a page. Extent, 135 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीश्रीराधाकृष्णः ।

नित्यानन्दावधूताय नमस्ते जाह्नवीपते ।
नमः कृष्णस्वरूपाय नमस्तेऽनङ्गमञ्जरि ॥

नमस्ते भक्तपादाब्जौ नमो भक्तिष्ठ प्रेमदाम् ।
गुरुं जगद्गुरुश्चैव नमः परात्परेश्वरम् ॥ (?)
या धर्मार्थकाममोक्षनिस्पृहा चपला श्रीकृष्णसुखमोदका । तेन ताभक्तिं वन्दे मनसा मुदा निर्भया नित्यताम्बिताम् ॥ वन्दे श्रीगुरुपादद्वयं वै मुदा यत्पादाश्रयादस्मात् कृष्णे रति र्नित्यं वर्द्धते । यत्र तत्तत्त्वाज्ञानुपचार्यार्थ भवेत् प्रसन्नता गुरोः । इत्यादि ।

End. त्रैलोक्ये पृथिवी धन्या यत्र कृष्णः पुनः पुनः ।
लीलया स्वयमानन्दी स्वेच्छामयः स्वयं प्रभुः ॥

Colophon. इति सर्व्वग्रन्थसारमाकृष्य श्रीनित्यानन्दतन्त्रे यथोक्तम् । श्रीप्रबोधानन्द-प्रश्नोत्तर-श्रीवृन्दावनदास-श्रीमत्‌रसकल्पसारतन्त्रे षट्प्रकरणम् ॥ ० ॥

विषयः । वृन्दावनमाहात्म्यादिनिरूपणम् । लीलावर्णनमुखेन राधाकृष्णादीनां माहात्म्यादिनिरूपणञ्च ।

---

**No. 308.** रसरत्नाकरः. By नित्यनाथः. Substance, country-made paper, 19×4 inches. Folia, 29. Lines, 6 on page. Extent, 830 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Kāṭihālī, Paṇḍita Viçvanātha Tarkabhūṣaṇa. Appearance, tolerable. Verse. Incorrect.

Beginning. ॐ नमः परदेवतायै । अथ रत्नाकरस्य मन्त्रखण्डो लिख्यते । सर्व्वजनस्य वश्यमाह ।
एकचित्तस्थितो मन्त्री मन्त्रं जप्त्वायुतद्वयम् ।
ततः क्षोभयते लोकान् दर्शनादेव साधकः ॥
भूतारवटमूलञ्च जलेन सह घर्षयेत् ।
विद्युत्या संयुतं मन्त्रं तिलके लोकवश्यकृत् ॥ इत्यादि ।

End. भद्रकल्पाग्रमविषयाद्यष्टभविलोचनैः ।
श्रोताञ्जनयुतैश्चापि दिवावद्दर्शते निशि ॥
ॐ नमो चन्द्राय ज्योतिषां शिवाय यतयेत् यन्ते बीजम् ॥ ० ॥

Colophon. इति श्रीपार्व्वतीपुत्र-नित्यनाथसिद्धविरचिते रसरत्नाकरे मन्त्रखण्डः समाप्तः ।

विषयः । सकलवशीकरणमन्त्रौषधादिनिरूपणम् ।

---

**No. 309.** रससारः. By गोविन्दाचार्य्यः. Substance, country-made paper, 10 × 5 inches. Folia, 74. Lines, 8 on a page. Extent, 1,217 çlokas. Character, Nāgara. Date, ? Place of deposit, Dhākā, Ramnā's Kālimatha. Appearance, new. Verse. Generally correct.

**Beginning.** गणेशं प्रणिपत्यादौ शिवञ्च शिवया सह ।
गुरुभैरवसिद्धेभ्यो योगिनीप्रथमम्बरम् ॥
प्रणम्य शिरसा नित्यं भक्त्या तत्पादपङ्कजम् ।
हरिं ध्यात्वा परं देवं रसेन्द्रं शिवमव्ययम् ॥
आलोक्य सर्व्वशास्त्राणि अनुभूय यथाक्रिमम् ।
सारात् सारं समुद्धृत्य संक्षेपादर्थगौरवम् ॥
रससारं प्रवक्ष्यामि नानासिद्धैश्च भाषितम् ।
साधकानां हितार्थाय लोकानामनुकम्पया ॥
मूर्च्छितो यदा सूतः पितामहसमो भवेत् ।
स बद्धो विष्णुः × साक्षात् रञ्जितः शिव उच्यते ॥
मारितो मारितश्चैव स एव जगदीश्वरः । इत्यादि ।

**End.** लभयत्यक्षसंघातं कामोन्मादनकारकः ।
पुनर्नववपुः कुर्य्यात् साधको नात्र संशयः ॥
अतिवेगो भवेत् कामी महाबलपराक्रमः ।
सुद्राधो जायते सद्यो × × थैं जापयेद्गुरुम् ॥
अनया जनयेत् कामप्रत्ययेश्च सुखं भवेत् ।
अत्यर्थं लभते पुष्टिं बलहानिर्न जायते ॥
इति सिद्धिगुडिका ॥

**Colophon.** इति श्रीमद्गोविन्दाचार्य्यविरचितो रससारः समाप्तः ॥

**विषयः।** पारदविधिः । नवबद्धादिपारदगुणकथनम् । तत्पूजाविधिः । तदधिकारिकथनम् । रसकर्म्मकरणे द्रव्यसङ्ग्रहविधिः । रससंस्कारादिविधिः । रसशोधनादिविधिः । उपरसशोधनविधिः । रसलोहशुद्धिविधिः । रससत्त्वनिरोधकरणविधिः । विड्पाकविशोधनसारणादिविधिः । रत्नलक्षणादिकथनम् । रत्नग्रासभेदनादिविधिः । बीजपाकादिविधिः । महारसजारणादिविधिः । शतवेधादिक्रमकथनम् । उपरसभस्म-मारण-पेषण-लक्षणादिविधिः । रसप्रयोगादिविधिः । कल्कादिविधिः । मणिमूषादिविधिः । रसगुडिकाविधिः ।

अथ वयःक्रमनविधिः । अष्टाङ्गनादिविधिः । सर्व्वथाविनिवारणविधिः । यानुसारेण प्रयोगादिश्च । इति क्रमः ।

---

**No. 310.** रागानुगाविवृतिः. Substance, country-made paper, 12 × 5 inches. Folia, 22. Lines, 8 on a page. Extent, 572 çlokas. Character, Bengali. Date, Sk. 1719. Place of deposit, District Vākuḍā, Viṣṇupura, Kādākuli, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, old. Prose and verse. Incorrect.

**Beginning.** ॐ श्रीश्रीगुरवे नमः । श्रीश्रीचैतन्यचन्द्राय नमः ।

आदद्दानः तृणं दन्तैरिदं याचे पुनः पुनः ।

श्रीमद्रूपपदाम्भोजधूलिर्भूयां भवे भवे ॥

अथ साधनचतुष्टये प्रथमं मुख्यसाधनविवृतिः ।

इष्टे स्वारसिकी रागः परमाविष्टता भवेत् ।

तन्मयी या भवेद्भक्तिः सात्र रागात्मिकोच्यते ॥

आविष्टता रागकार्य्यरूपा तस्यास्तटस्थलक्षणेनानुवादत्वम् चेष्टितप्रचाराय । ननु रागानुगायां चेष्टितप्रचारापेक्षया । सा तु तस्यां कायिकी वाचिकीति द्वयलीकाराय । स तु सर्व्वथा व्रजलोकानुसाराय स श्रीव्रजेन्द्रनन्दनप्राप्तये अन्यथा न स्यात् । अत आविष्टता त्रिधा मनोगता रागगता कायगतेति । अत्र मनोगता स्मरणादिरूपा । अतो रागानुगायां तदनुसारिणी साधकरूपेण सिद्धरूपेण च सेवा प्रत्येकं त्रिधा मानसी वाचिकी कायिकीति । रागानुगालक्षणम् ।

विराजन्तीमभिव्यक्तां व्रजवासिजनादिषु ।

रागात्मिकामनुसृता या सा रागानुगोच्यते ॥ इति ।

रागात्मिका द्विधा । सम्बन्धरूपा कामरूपेति । अथ सम्बन्धरूपालक्षणम् । सम्बन्धरूपा गोविन्दे पितृत्वाद्यभिमानितेति । पितृत्वाद्यभिमानिता पितृत्वाद्यभिमानकार्य्यरूपा । स्वारसिकी परमा मनोवाक्‌कायाविष्टता । इत्यादि ।

**End.** पूर्व्वमारोपस्फूर्त्तिभ्यां द्विविधस्य विचारतः ।

लोभस्य साधुसङ्गस्य सद्भावाङ्कुरनेऽपि च ॥

तयोर्द्वयाया अवस्थायाः कायिकं नहि रचितम् ।

सिद्धरूपस्य सम्भूतिः केवलात्मदृशां विना ॥

सानुमेया विना तान्तु केवलो न हि सम्भवेत् ।
सञ्जोकानुसाराणां विना रूपक्रपां कुतः ॥
प्रतिलोमेन विज्ञेयः प्रयोगोऽत्र मनीषिभिः ।
इत्याचतुष्टयं व्याख्या वाक्यादिप्रक्रमुच्यते ॥
रागानुगाविवृतेस्तद्विना नैषा प्रयोजिका ।
सिद्धान्तकथनाद्दो यत् लक्ष्मीश्चर्य्यं प्रकाशते ॥
व्रजेन्द्ररतिमूलं तत्प्रामं भक्तौ तदुत्थितम् ।
रसो द्विधा प्राकृतश्चाप्राकृतश्चेति तच हि ॥
प्राकृते वात्सल्यादि× ईश्वररतिमूलका ।
अप्राकृते ईश्वररतिर्वात्सल्यादिमूलका ॥ ० ॥

**Colophon.** इति रागानुगाविवृतिः समाप्ता ॥
समझ्रषा ईश्वरतिसमाधानकरैर्जनैः ।
समाधेया ईश्वरति द्वितीयादिदशाचये ॥ * ॥
शाके रन्ध्रेन्दुमचिसु ... मासे च तापे तथा रन्दुसुतवासरे द्वितीयायाञ्च शुक्लायां रात्रौ च इष्टदये रागानुगाविवृतिरियं सम्पूर्णा । लिप इति १७१९ लिखितं रागानुगादिपुस्तकम् ॥ * ॥

**विषयः ।** राधाकृष्णयोः रागानुगादिलक्षणनिरूपणमुखेन तद्व्याख्यानादिः ।

---

**No. 311.** राघवपाण्डवीयकाव्यटीका. By रामचन्द्रन्यायालङ्कारः. Substance, country-made paper, 16 × 3 inches. Folia, 105. Lines, 8 on a page. Extent, 2,730 çlokas. Character, Bengali. Date, ? Place of deposit, Ḍhākā, Bābu Bhagavāncandra Kavirāja. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
विपक्षनाशाश्रितरक्ष्यकीर्त्तिं
वामार्त्तिनाशं ++ देवसूनुम् ।
नमामि भूयः प्रणतेन मूर्द्ध्ना
भीमानुजं पावकजं सदारम् ॥
प्रणम्य नारायणमादिदेवं
श्रीरामचन्द्रो द्विज एष धीरः ।

मनोज्ञरामायणभारताख्य

काव्यस्य टीकां कुरुते सुयत्नात् ॥

ग्रन्थारम्भे बहुतरविघ्नविनाशकानेकदेवतानतिरूपं मङ्गलं कविनायकं कर्त्तव्यं तत् शिष्ययितुमाह साधिष्ठानेत्यादि। तथाच श्लिष्टकर्णुलेन प्रस्तावमेवादौ नमस्कुरुते प्रभवे नमः श्लिष्टकर्णे नमः इत्यर्थः। एवेन च सर्वेषां श्लिष्ट-कर्णुलेन तदन्तःपातितया एतद्ग्रन्थस्य सुतरामेव श्लिष्टकर्णकर्णुलमुपपन्नम्। किम्भूताय साधीति। स आत्मा ईश्वरः विष्णुः तस्य अधिष्ठानं स्थिति-र्यस्य। इत्यादि।

End. पक्षे गौरलक्ष्मीः यस्य यशस्त्वात्मनः आश्रयं यस्यं प्रतापमिव राजा नरदेवपुत्रं युधिष्ठिरं सेवते स्म। अथ हृष्टात्मनः शृङ्गारलक्ष्मीः यथा कामदेवं सेवते। तद्वत्। सुगममन्यत्॥

Colophon. इति रामचन्द्रन्यायालङ्कारभट्टाचार्यकृतायां राघवपाण्डवीयटीकायां क्रोध-निकुम्भवधो नाम एकादशः सर्गः॥

विषयः। कविराजकृत-राघवपाण्डवीयकाव्यस्य व्याख्यानम्।

---

**No. 312.** राजादिवृत्तिः. Substance, country-made paper, 14 × 2 inches. Folia, 5. Lines, 9 on a page. Extent, 169 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Āṭpāḍā, Paṇḍita Prasannacandra Vidyāratna. Appearance, old. Prose. Correct.

Beginning. ॐ नमो गणेशाय।

नत्वा हरपदद्वन्द्वं बालानामाशुबोधनम्।

राजादिगणसूत्राणां व्याख्यानं क्रियते मया॥

राजाहःसखि। तत्पुरुषसमासे एते राजादयो भवन्ति। देवानां राजा देवराजः। परमश्च तदहश्चेति परमाहः। देवानां सखा देवसखः। तत्-पुरुष इति किम्। इत्यादि।

End. स्त्री च पुमांश्च स्त्रीपुंसौ स्त्रीपुंसाभ्याम्। ऋक् च साम च ऋक्सामे। वाक् च मनश्च वाङ्मनसे। धेन्वनडुहादिः

Colophon. इति समाप्तः।

विषयः। कातन्त्रीय-राजादिगणसूत्राणां सोदाहरणं व्याख्यानम्।

---

**No. 313.** **राधाचरितम्.** By **रामचन्द्रः.** Substance, country-made paper, 15×2½ inches. Folia, 9. Lines, 4 on a page. Extent, 144 çlokas. Character, Bengali. Date, Sk. 1758. Place of deposit, District Vākuḍā, Viṣṇupura, Kūḍākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीरामः ।

काचिद्गोपी विमुग्धा मुरहरविरहैः सखवेषी धरण्यां
सा मन्मात्मा भुजङ्गी इव जपति सततं गच्छ गच्छेति माथ ।
अस्मिन् कुञ्जे मनोज्ञे विश विश नयवन् ज्ञानमात्रा कदाचिद्
विश्रभ्मं मं अगाद् सकलमिपिपसमुद्भूतवेपुं विलोक्य ॥ इत्यादि ।

**End.** आलम्बेऽवं प्रकृत्या वत मितममयं व्याप्य धैर्य्यं निगूढं
यावत् कृष्णागमां नो मधुनगरपथि प्राप्नवामा प्रतीचे ।
एतद्ध्यायं प्रगच्छेत च लघु चरिणा साईमनेव यूयं
नो चेत् प्राणान् प्रजाखे दिवसपतिसुतातोयमा सक्तभक्त्या ॥

**Colophon.** देवश्रीगुनवीरसिंहकृतिनादिष्टेन शुश्रूषया
श्रीमद्विष्णुपुरापवासुकृति-श्रीरामचन्द्रेण तु ।
श्रीराधाचरिते कृते परिपरिच्छेदो द्वितीयो महान्
श्रीमद्वैष्णवमोदको हरिकथाराधाप्रबोधाभिधः ॥ ० ॥
श्रीरामो जयति । शकाब्दाः १७५८ ।

**विषयः ।** प्रथमपरिच्छेदे—कृष्णे मथुरां गतवति विरहविधुराया राधिकाया कृतत्वेन वेणुप्रेरणादिकम् । २ ये परिच्छेदे—राधिकाप्रबोधनम् ।

---

**No. 314.** **रामगीताटीका.** Substance, country-made paper, 14×2½ inches. Folia, 14. Lines, 7 on a page. Extent, 367 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṃha, Serapura, Paṇḍita Candrakānta Tarkālaṃkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः श्रीरामचन्द्राय ।

श्रीकृष्णाय नमो नित्यं गुरवे बुद्धिदायिने ।
कृपया तत्त्वमाख्यातं लक्ष्मणाय विपश्चिते ॥

पञ्चाननैर्दिं पञ्चाशैचतुर्भिश्चतुराननैः ।
षट्पञ्चाशैरयं शेषैरजितं किञ्च सर्वशे ॥
अपचः पञ्चशोकर्षुं भविज्ञा रावणस्य तु ।
चारब्धं येन सीताया व्याख्यानं मे यथामति ॥ इत्यादि ।

End. अमुर्ष एनं मां दृष्ट्वा मनसा यः सेवते च हि भद्रप इत्यतः संयुग्मम् अपाद्-मतरेणुभिः लोकचितयं पुनाति यथा रवि मेदाग्रवदेवो लोकचितयं प्रका-शयति तद्दित्यर्थः ॥ * ॥ श्रीरस्तु मयि ।

विषयः । रामसीताया व्याख्यानम् ॥

---

No. 315. रामचरितकाव्यम्. Substance, country-made paper, 12 × 3 inches. Folia, 53. Lines, 7 on a page. Extent, 1,113 çlokas. Character, Bengali. Date, Sk. 1754. Place of deposit, Tamluk, Kelomāl, Bābu Amaranātha Ghoṣa. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो भगवते रामचन्द्राय ।
अथ रामोऽश्वमेधेन यज्ञं यज्ञेश्वरो हरिः ।
समचक्रेऽतिधर्मात्मा निहत्तो राजसूयतः ।
प्रजानां राजसूयेन प्रायशो वै क्षयो भवेत् ।
यः प्रजारक्षणात्प्रायः कथं नाम समाचरेत् ॥
इति निश्चित्य मतिमान् भ्रातृभिश्च पुरोधसः ।
मन्त्रिभिश्च कुशलान् रामो वाक्यमथाब्रवीत् ॥ इत्यादि ।

End. केचित् पर्यपुटं नीता वन्यपुष्पफलोत्करैः ।
समवाजस्रजातानि प्रफुल्लकमलानि च ॥
अदौला प्रययुः केचित् कुशांश्च कुशद्रक्षिणः ।
मुनिश्च सपरीवारो मुनी च सपरिच्छदाम् ॥
आरयन् जानकीं यायां चक्रे मङ्गलपूर्विकाम् ॥ ० ॥

Colophon. इति श्रीरामचरितोत्तरकाण्डमहाकाव्ये वाल्मिकीये प्रतोत्थानं नाम चतुर्दश सर्गः ॥ ० ॥ शकाब्दाः १७५४ ।

विषयः । रामायणोत्तरकाण्डमवलम्ब्य श्रीरामचन्द्रचरितवर्णनम् ।

---

**No. 316.** रामपूजापद्धतिः. Substance, country-made paper, 17 × 3½ inches. Folia, 8. Lines, 7 on a page. Extent, 287 çlokas. Character, Bengali. Date, ? Place of deposit, Teliveni *viâ* Gaḍbetâ, District Medinipura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो रामाय। अथ रामपूजापद्धतिः। प्रातरुत्थाय कृतप्रातःकृत्यः स्नात्वा गृहमागत्य आचम्य शुभासने उपविश्य रामं ध्यायेत्। ध्यायेत्‌ कल्पतरोर्मूले नवरत्नादिनिर्मिते। रक्तसिंहासने रामं श्यामलं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं सप्रकाशरूपं सर्वालङ्कृततया सप्रकाशरूपया प्रत्यक्षेण चिन्तितं मूर्त्तं विभाव्य मानसोपचारैराराध्य ॐ इति इत्यादि नमस्कुर्य्यात्‌। इत्यादि।

**End.** निर्माल्यं शिरसा धार्य्यं सर्व्वाङ्गे चानुलेपनम्‌।
नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने॥
पादोदकं पीत्वा नैवेद्यं किञ्चित्‌ स्वीकृत्य अन्यद्‌यथायोग्याय दत्त्वा यथासुखं विचरेत्‌॥

**Colophon.** इति रामपूजापद्धतिः॥

**विषयः।** रामपूजाविधितत्प्रयोगादिश्च।

---

**No. 317.** रामलीलामृतम्. By कृष्णमोहनः. Substance, country-made paper, 18 × 2½ inches. Folia, 46. Lines, 5 on a page. Extent, 920 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Phursāil, Paṇḍita Advaitacandra Nyāyaratna. Appearance, old. Verse. Incorrect.

**Beginning.** (आदितश्चौषि पत्राणि न सन्ति।)
या प्राणप्रतिमा सुहृत्त्रितयमा या पापपुण्ये समा
यामाश्रित्य गृहाश्रमः सुखमिहान्यत्रापि दुःखापहा।
पुत्रान्मुक्तिपदं सदुक्तिसुखदं सर्व्वेव भव्यास्पदं
तत्पुत्रस्य जनौ रसैकशरणौ कस्तां त्यजेत्‌ कामिनीम्‌॥
नित्यं नव्यजनं निषेकनिपुणं तेजस्विनं शोभनं
रामा कामयते स्थितेऽपि दयितेऽप्यासे यदान्योद्यते।

आत्मा नं दूषितं त्यजत्यपि सुतं कः प्रत्ययस्तेन चेत्
त्यक्ता तन्नु जनं भ्रमप्रणयिनं धर्मं दया न क्षमम् ॥
दुष्प्रेक्षे दहने चिताधिशयने मित्रान्ध्ययोद्दीपने
पुत्राद्प्यजरं वपुः प्रियतरं प्रेमृणा प्रिया कातरम् ।
++ यानुपतिं स्वधर्मविरतिं निःशेषपापस्थितिं
सम्यक्कारयते कृताति ++ ते कथां त्यजेत् मानवे ॥ इत्यादि ।

**End.**

दुर्ज्ञेयं चरितं सुरैरपि तु यत् तस्या + शेषो मया
तद्दो++मतीव यत्नकलितो रामेति मे प्रासनम् ।
आज्ञाग्नो प्रियतामिव ++++ कृत्वाथ भक्त्याम्बुधौ
नो चे+क्षिप घोरजन्मजलधेः पारे जगन्नायक ॥
येनाकारि गुणद्विजाच्युतरमामाधौपिपाकीश्वरी
गङ्गा भक्तसुतात्मजा चरिस्वरादित्यादिकानां परा ।
रम्या सत्स्तुतिमालिकातिविमले ++++
नानातन्त्रसमूहसङ्ग्रहमयः सत्प्रीतये तद्यथा ॥
मन्त्राद्दानविधानपूजनपुरश्चर्यादि यत्रेरितं
तद्ग्रन्थागमचन्द्रिकाख्य इतरश्चानन्दसिन्ध्वाश्रयः ।
यत्रोक्ताप्युपचारभक्तियजना ++ क्रिया प्रायशो-
ऽत्र ज्ञानमितोऽत्रदाक्रुरितं पौर्व्वेन यत्रेरितम् ॥
ध्यानावल्यभिधोऽपरः सुमनसां ध्यानं यतो भाषितं
नानाकोशतकाव्यविचरचितं श्रीरामलीलामृतम् ।
काव्यं नव्यमिदं कृतञ्च कविना तेनैव किञ्चित् तत-
श्छन्दः प्राकृतपारसीकतुलसीवाणीविमिश्रैः पृथक् ॥
सीतारामानुजननुजनद्याकृतं सौधकन्दं
सर्व्वानन्दाननुपनयेत् जीवनत्राण पावनम् ।
तत्सुज्ञानं फलमनुतनं सत्पदे सेवकाके
काव्ये सन्तः कलयत चितं सावधानं तदेतत् ॥

**Colophon.**

तारा या जननी सुधीरजठरा+तीव दुर्गापदौ
मुक्ता रामयती तु यत्कृपया सर्व्वं समुन्मीलितम् ।
तत्प्रीतौ चितकल्पमौलजकृते श्रीरामलीलामृते
काव्ये भवजनैकमोदजनके सर्गोऽगमत् सप्तमः ॥

विषयः । विश्वामित्रपुरस्कृतस्य रामस्य अहल्याशापविमोचनादिरावणवधान्तं यावच्चरित-वर्णनम् । तत्र चतुर्थे सर्गे चित्रकाव्यप्रदर्शनव्याजेन विविधबन्धकथनम् । यथा,— खड्गबन्धः । पद्मबन्धः । सोपानबन्धः । गोमूत्रबन्धः । चक्रबन्धः । कुण्डलचक्रबन्धः । पत्तिबन्धः । चङ्गबन्धः । दुर्गबन्धः । सुदर्शनचक्रबन्धः । मुरजबन्धः । नागपाशबन्धः । वारणबन्धश्चेति ।

---

**No. 318.** रामार्चनचन्द्रिका. By आनन्दवनः. Substance, country-made paper, 14×3 inches. Folia, 102. Lines, 7 on a page. Extent, 2,499 çlokas. Character, Bengali. Date, ? Place of deposit, District Văkuḍā, Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमः श्रीरामचन्द्राय ।

सर्वं संसृतिवारिधिं त्रिजगतां गीतामि यस्य प्रभो-
र्येनेदं सकलं विभाति सततं जातं स्थितं संहृतम् ।
यस्मिन्नो निगमा भवन्ति न गतो मानं धराधीश्वरे
तं वन्दे सहजप्रकाशममलं श्रीरामचन्द्रं परम् ॥
विश्वव्यापितनोः प्रभा रघुपतेर्मूर्त्तिरमूर्त्तिस्तयो-
र्वाक्यार्थप्रतिपादनैकचतुरः शान्त्यादिश्रीलः शुचिः ।
अज्ञानान्ध + वारणैकतरणिर्विज्ञानचिन्तामणि-
र्नित्यानन्दपदैकभूर्विजयते श्रीमान्मुकुन्दो मुनिः ॥
वेदान्तवाक्यार्थरविर्विराजते
यस्मिन् गताः काममदादयो न चि ।
बुधाः सदानन्दपदं प्रपेदिरे
वन्दे मुकुन्दाश्रमनं गुरुं परम् ॥
पूर्व्वोत्तरतापनीयमखिलं कल्पं यतं गायते
ग्रन्थानसियमिस्तनामसचिताः कल्पाखया संचिताः ।
प्राप्तं मन्त्रमयं मया कुवलयं आलोच्य गीतादिकं
श्रीरामार्चनचन्द्रिका कलिमलप्रध्वंसिका प्रोच्यते ॥
तत्तद्ग्रन्थमतैर्नानावाक्यैरेव च संस्कृतैः ।
सौकर्य्यार्थं क्रमः सम्यक् संक्षेपेण प्रतन्यते ।
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययोः ॥ इत्यादि ।

End. योऽप्यनुभवमनुविवेचनमपि प्रेमाकूतं चाप्ततं
संसारदावानलतापशान्त्यै × × श्रीरामार्चनचन्द्रिकेयम् ।
आत् संहितागमैस्तुपाश्रयन्निर्वादिविभिर्निन्दितशोधयत् । (?)
पटलैः पञ्चभिः प्रोक्ता श्रीरामार्चनचन्द्रिका ।
आनन्दवनमाला हि यतिना चरितुष्टये ॥ •

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमन्मुकुन्दवनश्रीचरणशिष्यानन्दवन-विरचितायां रामार्चनचन्द्रिकायां पञ्चमः पटलः ॥ समाप्तश्चायं ग्रन्थः ॥

विषयः । गुरुशिष्यलक्षणादिनिरूपणम् । सुप्रबोधकालादिनिरूपणम् । राशिचक्रादि-निरूपणम् । मन्त्रसंस्कारादिः । रामसीताध्यानादिः । बीजार्थनिरूपणम् । मातृकान्यासादि-शुद्धिनिरूपणम् । होमविध्यादिः । दीक्षाप्रकरणादिः । तिलकधारणविध्यादिः । द्वितीयदिन-भागकृत्यविधिः । शुद्धिचतुष्टयादिः । भूतशुद्ध्यादिः । न्यासादिनिरूपणम् । प्रथमे द्वितीये च पटले एते विषयाः सन्ति । ३ यपटले ध्यानपूजाप्रयोगादिः । तीर्थधारणादिश्च । ४ र्थपटले षष्ठदिनभागकर्त्तव्यादिः । पुरश्चरणादिः । सर्व्वयन्त्रधारणमादिश्च । ५ मपटले रामनवमी माहात्म्यादिनिरूपणमुखेन पूजादिनिरूपणमिति ।

---

No. 319. रावणचेटकम् . Substance, country paper. Folia, 5. Lines, 8 on a page. Extent, 115 çlokas. Character, Nāgara. Place of deposit, Gobardhanasarāi, Benares, Paṇḍita Vindhyeçvarīprasāda Dube. Appearance, fresh. Generally correct.

Beginning. श्रीगणेशाय नमः ॥ अथ रावणचेटकस्य सर्व्वोपद्रवनाशकचेटकानां इत्यारा-धनेन सिध्यति । अथ मन्त्रः ॐ ह्रों ह्रीं हुं फां फीं फूं फें फौं फः ॐ नमो भगवते दशकण्ठाय दशग्रीवाय दशाननविंशतिनेत्रधराय एकादश-शिरश्छेदनमोच-नवनाथ-विंशत्योष्ठाय विंशतिपाणिने विंशतिभुजाभूषि-ताय नागयज्ञोपवीताय नमः सर्व्वविद्याविशारदाय । इत्यादि ।

End. अथार्जुनचेटकं ॐ ह्रों ह्रीं श्रीं श्रीं श्रीकार्त्तवीर्य्यार्जुन-सहस्रकरसंस्थित-सहस्रायुधधर-सहस्ररश्मिधर—सहस्रशूलधर—सहस्रकमलधर—सहस्र—चक्र-धर—दण्ड-पाश—गदा-शक्ति—वज्राङ्कुश-मुसल-मुद्गर-मुषल-तोमर-कुठाराङ्कुश-चक्र-करवाल-परिघचक्र-राजशिरोधर सर्व्वदुष्टचौरान् नाशय नाशय,

सर्वलोकान् पातय पातय ॐ ह्रीं चण्डकारि ह्रं फट् स्वाहा परस्य नाम राष्ट्रं समुच्चार्यात्मनो परि परितोषलोचनार्थेन रक्षा च इत्यक्षरं जपेत् ।

**Colophon.** इत्यागमोक्तकुम्भकर्णचेटकानां रावणोक्तं चयोदशचेटकं समाप्तिमगात् । श्रीशिवशक्तिशङ्करो जयति जय शङ्कर जय शङ्कर जय शङ्कर जय शङ्कर जय शङ्कर ।

विषयः । रावणचेटकम् । रक्तकचेटकम् । भृङ्गिचेटकम् । विद्यावश्यचेटकम् । चौरा-चेटकम् । कुम्भकर्णचेटकम् । वाचाटचेटकम् । विषचेटकम् । रक्तकम्बलचेटकम् । क्षोभ-चेटकम् । चामरचेटकम् । निशाचरचेटकम् । घुघुकचेटकम् । रूपकचेटकम् । प्रेरकचेटकम् । भयचेटकम् । अर्जुनचेटकम ।

---

**No. 320.** रुग्विनिश्चयटीका (वैद्यमनोरमा) By रामकृष्णभट्टः. Substance, palm-leaf, 18 × 1 inches. Folia, 241. Lines, 4 on a page. Extent, 5,061 çlokas. Character, Bengali. Date, Sk. 1685. Place of deposit, District Ḍhākā, Vikramapura, Vāsirā, Bābu Bhagavāncandra Kavirāja. Appearance, tolerable. Prose. Correct.

**Beginning.** नमो गणेशाय ।

लोकेशं व्यक्तमव्यक्तं निर्गुणं त्रिगुणात्मकम् ।
सदसद्रूपिणं वन्दे तं कारणमकारणम् ॥
वन्दे चरणसरोजं श्रीगौरीगौरीवल्लभयोः पित्रोः ।
यन्नत्वा जनतत्यास्तरन्ति दुःखाम्भोधिं लोकाः ॥
... ... ... ... ... ... ... ... ... ... ।
तन्यते रामकृष्णेन टीका वैद्यमनोरमा ॥

अथ खलु तन्त्रताधिवेदविश्रुतविप्रबन्धुविमोचनकरो निखिलजननितयसद्गुण-प्रापकं निखिलमिथ्यासुत्पादनाय ... ... ... परम्परापरिप्राप्तनिखिलप्रत्यूह-व्यूहव्यपोहहेतुगौरीचरणनमस्कारं प्रागकार्षीत् । प्रणम्येत्यादि । रुग्विनिश्चयसंज्ञकोऽयं ग्रन्थो निबध्यते । इति श्लोकद्वयेन—इत्यादि ।

**End.** प्रसन्नदोषमिति । प्रसन्ना अविकृता दोषा यस्य तम् । तमेव कथं जानीयात् इत्याह । प्रतिज्ञधातुमित्यादि धातुशब्देन वातादयो रसादयो-ऽपि विशेषादुच्यन्ते ।

Colophon. इति श्रीरामतर्कवागीशकृतायां समिन्तिसारटीकायां वैयाकरणीरसायां विभक्तिप्रवृत्तिः समाप्ता ॥ शुभमस्तु शकाब्दाः १६८५ ।

विषयः । माधवकरणादि-विभक्तिप्रकरणाद्यर्थसमिन्तिसाराभिधान-वैयाकरणग्रन्थस्य व्याख्यानम् ।

---

No. 321. सन्ध्यादिवृत्तिः. By मधुसूदनः. Substance, country-made paper, 16×3 inches. Folia, 16. Lines, 5 on a page. Extent, 230 çlokas. Character, Bengali. Date, Sk. 1702. Place of deposit, District Mayamanasiṁha, Kānihārī, Paṇḍita Mukundacandra Smṛtiratna. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमो हरये ।

नत्वा पदाब्जं शिवदं शिवाया विलोक्य कातन्त्रविचारसारम् ।
यत्नेन सन्धेर्विवृतिं विपश्चित्तले तनोति श्रीमधुसूदनोऽयम् ॥
नैर्विशः । नैः परो विसर्गो सन्ध्यादिर्भवति । इत्यादि ।

End. व्युत्पन्नानयनसद्यशाये लेकवचनमपि यतिवुनीते संगेति ।
इह टीकायाः समाहृत्य यत्नेनोक्तं विदुषां मुदे ।
सन्ध्यादिवृत्तिर्नेता तु धीमान् श्रीमधुसूदनः ॥ * ॥

Colophon. इति सन्ध्यादिवृत्तिः समाप्ता ॥ ० ॥ शकाब्दाः १७०२ ।

विषयः । सन्ध्यादिप्रवीयधातुरूपकथनम् ।

---

No. 322. शङ्खचन्द्रिका. Substance, country-made paper, 13½×3½ inches. Folia, 10. Lines, 8 on a page. Extent, 290 çlokas. Character, Bengali. Date, ? Place of deposit, District Tripurā, Parganā Sarāil, Vuḍīçvara, Paṇḍita Kṛṣṇakiçora Vidyāvāgiça. Appearance, new. Verse. Generally correct.

Beginning. ॐ नमश्चण्डिकायै ।

ॐ चण्डिकेयं चतुर्वर्गफलदा साधकेश्वरी ।
कोटिजन्मार्जितं पुण्यं द्रुतया मया विधीयते ॥
श्रीपार्वत्युवाच ।
भगवन् भूतभव्येश त्रैलोक्याधिपते हर ।
यदुपाख्यानमाश्चर्यं गौरवेयं महत्त्व मे ॥

रुद्र उवाच ।

अस्या रुद्रचण्डिकाया मन्त्रस्य ऋषयोऽनुष्टुप्छन्दश्चण्डिका देवता । इत्यादि

End. अतएव महामाये किं वच्मि तव सन्निधौ ।

लक्ष्मीदराधिकां चण्डीं श्रवणात् पठनाद्द जनः ।

तत् लभतीति वाक्येन स्तत्योरपि सुदुर्लभम् ॥ (?)

Colophon. इति रुद्रयामले हरगौरीसंवादे रुद्रचण्डिका समाप्ता ॥

**विषयः ।** शिवकार्त्तिकेयसंवादेन रुद्रयामलीयरुद्रचण्डिकायाः कवचकथनम् । हर-गौरीसंवादमुखेनागमसन्दर्भीयरुद्रचण्डिकान्तर्गतप्रथमपरिच्छेदे चण्डीरहस्यकथनम् । शिवदुर्गा-संवादेनागमसन्दर्भे श्रीरुद्रयामलीयरुद्रचण्डिकान्तर्गतमध्यमावच्छेदपटले साधनरहस्यकथनम् । हरगौरीसंवादेन श्रीरुद्रयामलीयरुद्रचण्डिकाया वारभेदे भैरव्यादिमूर्त्तिभेदपूजनात् फल-भेदकथनञ्च ॥

---

No. 323. **रुद्रयामलतन्त्रम्.** Substance, country-made paper, 17 x 5 inches. Folia, 195. Lines, 9 on a page. Extent, 5,460 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Generally correct.

Beginning. ॐ नमः परमगुरवे ।

आनन्दभैरव उवाच ।

पुरा श्रीपरमेशानीवदनाम्भोजनिःसृतम् ।

श्रीयामलं महातन्त्रं सतन्त्रं विष्णुयामलम् ॥

शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना ।

ब्रह्मयामलवेदाङ्गं सर्व्वञ्च कथितं प्रिये ॥

इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम् ।

यदि भाग्यवशाद्देवि तव श्रीमुखपङ्कजे ॥

यानि यानि सतन्त्राणि संदत्तानि मयौतके ।

प्रकाश्य महातन्त्रं नान्यतन्त्रेषु कृत्रिमान् ॥

सर्व्ववेदान्तवेदेषु कथितव्यं ततः परम् ।

तदा ते भक्तवर्गाणां सिद्धिः सञ्चरते ध्रुवम् ॥ इत्यादि ।

**End.**

एतन्महोत्तरस्यास्य पुरश्चर्य्याविधिः स्मृतः ।
न स्नानं न तपः कार्य्यं न पूजादिविधानकम् ॥
केवलं स्तवपाठेनानाहते सुस्थिरो भवेत् ।
चिरजीवी वीरनरो वीतसंसारभावनः ॥
पठित्वा धारयित्वा च योगभ्रष्टो न सम्भवेत् ।
अनायासे योगसिद्धिं प्राप्नोति परमां श्रियम् ॥

**Colophon.** इति श्रीरुद्रयामले उत्तरकाण्डे तन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्तोत्रविन्यासो नाम चतुःषष्टितमः पटलः ॥

विषयः । आनन्दभैरवं प्रति आनन्दभैरव्या उक्तिरूपोऽयं निगमः । तत्र यामलग्रन्थव्युत्पत्ति-कथनम् । तन्त्रपाठमाहात्म्यकीर्त्तनम् । भावशब्दनिर्व्वचनम् । तत्र प्रसङ्गात् सुरापानविधिः । दिव्यवीरपशुभावभेदात् भावस्य त्रैविध्यनिरूपणम् । दिव्यभाववीरभावपशुभावेषु सिद्धिक्रमनिरू-पणम् । पशूनां रात्रिकर्म्मनिषेधः । विशेषतो वीरभावदिव्यभावयोर्निरूपणम् । कलौ भावविशेष-विधिः । गुरूपसदनविधिः । तत्र गुरुमन्त्रदेवतादिस्वरूपकथनञ्च । अथ कुलाचारविधौ व्रतभङ्ग-प्रायश्चित्तादिः । पशुभावनिर्णयः । गुरुस्तोत्रादिकथनम् । दीक्षादिविधिः । सर्व्वासां विद्यानां दीक्षासु चक्रनिरूपणम् । तत्र कालाकालविचारचक्रम् । अकडमचक्रम् । ताराचक्रम् । राशि-चक्रम् । कूर्म्मचक्रम् । शिवचक्रम् । विष्णुचक्रम् । ब्रह्मचक्रम् । श्रीविद्यात्मकचक्रम् । ऋणिधनि-मवाचक्रम् । उल्काचक्रम् । चक्रसाररामचक्रम् । चतुश्चक्रम् । शुद्धचक्रम् । अकथहचक्रम् । अरिमन्त्रविसर्ज्जनविधिः । वर्णमालाकथनम् । कुण्डलिनीस्तोत्रम् । भावसङ्केतकथनम् । कौलिकस्य दिव्यभावावश्यकताकथनञ्च । अथ कुमारीपूजाकथनम् । तत्र कुमारीमन्त्रोद्धारादिविधिः । कुमारीमन्त्रजपहोमादिविधिः । कुमारीस्तोत्रम् । कुमारीकवचम् । कुमारीसहस्रनामस्तोत्रञ्च । अथ अरुणोदयादिकालनिरूपणम् । तत्र प्रश्नसारचक्रम् । आज्ञाचक्रम् । सन्ध्याकालादि-कथनम् । आज्ञाप्रश्नार्थभाववर्णविन्यासः । भावचक्रकथनम् । वेदशाखापत्रकथनम् । आज्ञा-चक्रस्य तृतीयदलनिरूपणम् । अथर्व्ववेदलक्षणम् । ब्रह्मज्ञानकथनम् । सुरामांसादिस्वरूप-व्याख्यानम् । कामचक्रवर्णनम् । षडाधारभेदकथनम् । सिद्धमन्त्रविवेचनम् । वीरभावमाहात्म्य-कथनम् । षट्चक्रफलोदयकथनञ्च । अथ योगसाधनविधिः । वृद्धहंसमन्त्रः । हंसप्रणव-व्याख्या । ब्रह्ममार्गनिरूपणम् । आसनभेदकथनम् । योगशास्त्रार्थनिरूपणम् । योगसाधन-विधिः । प्राणायामस्वरूपादिकथनम् । जपविधिः । ध्यानविधिः । कुण्डलिनीध्यानविधिः । दिव्यध्यानविधिः । ब्रह्मतत्त्वनिरूपणम् । त्रिविधध्यानकथनम् । तर्पणविधिः । होम-विधिः । अन्तर्यजनविधिः । पञ्चमकारविधिः । अष्टाङ्गयोगः । समाधिमाहात्म्यम् । शुक्लकृष्ण-पक्षभेदात् प्राणायामचिन्तनविधिः । प्रत्याहारादिफलकथनम् । वैष्णवानां परमपुरुषध्यानम् ।

मन्त्रसिद्धिकथनम् । कन्दवासिनीस्तोत्रम् । षट्चक्रयोगः । महाकाशमूलपद्मविवेचनम् । मनुष्य-जन्मप्रशंसा । धौतिनेत्यादियोगः । चैतन्यकुण्डलिनीसहस्रनामकथनम् । स्वाधिष्ठानस्वरूपादि-कथनञ्च । अथ श्रीकृष्णसाधनविधिः । भेदिनीसाधनविधिः । कुण्डलिनीकवचम् । विजया-विधिः । राकिणीस्तोत्रम् । तत्साधनक्रमः । रुद्राणीस्तोत्रम् । महामृत्युञ्जयविधानम् । महा-रुद्रस्तवः । लाकिनीस्तोत्रम् । सप्तस्वर्गनिरूपणम् । तत्र तत्र पश्वादिभावनिरूपणम् । मणिपूरानु-क्रमः । मन्त्रार्थचैतन्यम् । पञ्चद्रव्यादिसाधनविधिः । निर्गुण्डीशोधनविधिः । सिद्ध्यष्टकमाहात्म्यम् । काकिनीसहस्रनामकथनञ्च । अथ भेदिनीस्तोत्रम् । छेदिनीस्तोत्रम् । कुण्डलिनीध्यानादिः । कुण्डलिनीस्तवः । कुण्डलिनीकवचम् । पञ्चासवपानविधिः । कुण्डलिन्या अष्टोत्तरसहस्रनाम-कथनञ्च । अथ श्रीकृष्णराकिणीकथनम् । तत्र मन्त्रोद्धारादिविधिः । ततो नरसिंहमन्त्रः । श्रीकृष्णमन्त्रः । श्रीकृष्णध्यानम् । तत्पूजाविधिः । श्रीकृष्णस्तवः । श्रीकृष्णकवचम् । षड्दल-स्थितषड्वर्णस्तोत्रम् । राकिणीतर्पणादिविधिः । श्रीकृष्णराकिणीसहस्रनामकथनम् । मणिपूर-भेदकथनम् । लाकिनीस्तोत्रम् । डादिफान्तवर्णध्यानादिः । महारुद्रशक्तिस्तोत्रम् । मृत्युञ्जय-मन्त्रोद्धारप्रकारश्च । अथ श्रीकण्ठमातृकान्यासादिः । पीठन्यासश्च । अथ रुद्रपूजाविधानम् । रुद्रशक्तिपूजाविधिः । रुद्रस्तवः । मृत्युञ्जयपूजाविधिः । मृत्युञ्जयस्तोत्रम् । लाकिनीस्तोत्रम् । मृत्युञ्जयलाकिनीकथनम् । तस्या अष्टोत्तरशतनामकथनम् । तस्याः सहस्रनामकथनञ्च । मन्त्रार्थ-चैतन्यविन्यासविधिः । काकिनीसिद्धिकथनम् । काकिनीस्तोत्रम् । अनाहतपद्मेश्वरस्तोत्रम् । ईश्वरस्तोत्रञ्च ।

---

**No. 324.** रूपप्रकाशः. *By* कुल्लूकभट्टः. Substance, country-made paper, 17 × 6 inches. Folia, 9. Lines, 8 on a page. Extent, 333 çlokas. Character, Bengali. Date, ? Place of deposit, District Vā̃kuḍā Viṣṇupura, Paṇḍita Raghurāma Tarkaratna. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नानागणानवगतश्रमहारयोऽस्य-
धातुप्रजानधिगमोत्तमःशमाय ।
रूपप्रकाशमकरोद्धि विशालवर्णी
धातुप्रदीपमनु कुल्लुकभट्टधीरः ॥

कल शब्दसंख्यानयोः । आत्मनेपदी भुवादौ कलते । कल गतौ संख्याने
चुरादावदन्तः कलयति । इत्यादि ।

**End.** ऋ गतिप्रापणयोः भुवादौ ऋच्छति । ऋ ख गतौ इयर्त्ति । ऋ गतौ ऋणोति । ऋधु दीप्तौ तनादौ इरितेत् अर्णोति अर्णुते ऋणोति ऋणुते इति । संज्ञा-पूर्व्वकत्वात् अत्र गुणाभावः । ऋधु वृद्धौ राध्नोति । ऋ । एज्ट दीप्तौ । भुवादावात्मनेपदी एजते । एजृ कम्पने भुवादौ एजति । चुरादौ च एजयति ।

**Colophon.** इति श्रीकृष्णकभट्टकृतरूपप्रकाशः समाप्तः ॥ * ॥ श्रीरामाय नमः ।

**विषयः ।** धात्वर्थनिरूपणमुखेन धातुरूपादिनिरूपणम् ।

---

**No. 325.** ललितावली . By दिगम्बरभट्टः . Substance, country-made paper, 14½ × 3¼ inches. Folia, 5. Lines, 6 on a page. Extent, 99 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Parganā Sonārgā, Post Office Vaidyervāzār, grāma Sātbheyepāḍā, Paṇḍita Nilakamala Smṛtibhūṣaṇa. Appearance, tolerable. Verse. Generally correct.

**Beginning.**

ॐ नमो गणेशाय ।

मेदिन्यादीनि कोषाणि समालोक्य प्रयत्नतः ।

श्रीदिगम्बरभट्टेन क्रियते ललितावली ॥

इयं कृता प्रयत्नेन सतां काव्यविदां मुदे ।

लीयनामानि शब्दानामेकनामवतामपि ॥

भेके मेघे ऋतौ मण्डे नागे सिंहे कपालके ।

चन्दने मधुकोष्ठ्ये हरिरित्यभिधीयते ॥

मेघे वक्षे ... दोःक्षे रौद्रे श्रृङ्गारभावने ।

शुद्धमाध्यके चैव आतपः परिकीर्त्तितः ॥

शीतः शुक्ले च घोषे च प्रख्याक्षे ... ... ।

गगने दिक्षमे चैव कीर्त्तौ हह्यादिभावके ॥

जाड्यके छिन्ने वर्षे प्राङ्गनादिकपावने ।

कुठारे ... वक्षे च वाकुशब्दः प्रकीर्त्तितः ॥ इत्यादि ।

**End.** चाम्पे लीकरचे चैव वातादिकम्पिवर्जने ।

वत्सरे च पुरस्कारे ममनं परिगीयते ॥

देवे च सुरभौ चैव वारिकुम्भे खरे नखे ।
मन्दारके च गगने नाकशब्दोऽभिधीयते ॥
दिवसे पिष्टकायां ... ... ... ... ।
पुच्छे ...... प्रवीचे च धामे गौरवभाषणे ॥
ऐश्वर्य्ये मधुरे चैव पुरः सर्व्वत्र कथ्यते ।
पाकपाने च सप्तम्यां धैन्वे घोटके पथि ॥
पिप्पल्यां सुषवी कण्ठे चयः सर्व्वत्र गीयते ।
शाकभेषजकाके च शौण्डे ... ... ... ।
आश्चर्य्ये घोरनादे च मुनिमार्य्यां रिपुक्षये ॥
कुक्कुरे गजविष्ठायां चाशब्दः परिकीर्त्तितः ॥

**Colophon.** (खण्डितशेषत्वात् समाप्तिसूचकं वाक्यं नास्ति ॥)

**विषयः ।** नानार्थ-शब्द पर्य्यायबोधकमभिधानम् ।

---

**No. 326. लाघवज्ञानम् .** Substance, country-made paper, $18\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 4. Lines, 8 on a page. Extent, 236 çlokas. Character, Bengali. Date, ? Place of deposit, District Pharidpur, Post Office Pālung, grāma Dhānukā, Paṇḍita Kāliçaṅkara Vidyābhūṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ महानसीयवह्नित्वादिना व्यापकताज्ञानं विनापि धूमवह्नित्वादिना व्यापकताज्ञानस्य महानसीयवह्नौ लाघवादिति लाघवज्ञानसहकारेण महानसीयवह्निभिन्नवह्न्यभावव्याप्तिमतीतरबाधकसहकारेण महानसीयत्वविशिष्टवह्नित्वादिरूपेण तादृशवह्न्यादिविधेयकानुमितिजनकत्वात् तादृशानुमितौ लाघवज्ञानेतरबाधयोर्हेतुत्वं कल्पनीयं । अन्यथा तच्छून्यकालेऽपि तथाविधानुमित्यापत्तेः । न चैवं लाघवज्ञानस्यानुमितौ महानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्त्यवगाहिपरामर्शस्य व्यभिचारवेति वाच्यं अन्यलिङ्गकानुमितौ व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटौ तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वनिवेशेन व्यभिचाराभावात् । एवं तादृशपरामर्शजन्यानुमितौ लाघवज्ञानादीनां व्यभिचारवारणाय लाघवज्ञानजन्यतावच्छेदककोटावपि तदव्यवहितोत्तरत्वं निवेशनीयम् । यत्र तादृशलाघवज्ञानस्य कार्य्यतावच्छेदकविशिष्टवैशिष्ट्यविषयत्वं परामर्शजन्यानुमितौ च विशेष्ये विशेषणमिति रीत्यैव महानसीयवह्न्यादिभानमिति न व्यभिचारः ॥ इत्यादि ॥

**End.** गगनत्वेऽपि तादृशपरामर्शस्य लघुत्वहेतुताया वाधकत्वम् । तथापि तत्त्वे लनिष्ठायाः लावच्छिन्नप्रकारतानिरूपितप्रतियोगितानिष्ठसांसर्गिकविषयता-वच्छिन्नाभावत्वावच्छिन्नविषयतावच्छिन्नविशेष्यताकत्व—सम्बन्धावच्छिन्ना प्रति-योगितावच्छेदकता तन्निरूपकभेदत्वत्वाग्निप्रकारतानिरूपितत्वावच्छिन्नप्रका-रतानिरूपितपर्व्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्म्मविशिष्टत्व-मेव निषयत्वं निवेश्य परमसम्बन्धघटकत्वनिष्ठावच्छेदकता लनिरूपकप्रका-रतानिरूपितत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकता विशिष्टा-
...... निवेश्या ......
हेतुत्वस्य तादृशनिश्चयविशिष्टतावच्छिन्नं प्रति कृप्तत्वात् तादृशकार्य्यतावच्छेद-काक्रान्तत्वादनुमितेरपि तत एवोपपत्तेः । सन्मतेऽपि लतन्वहेतुताकल्पनापि नास्तीति महानसीयत्वादिविषयकानुमितौ नियुक्तिकमेवेति संक्षेपः ।

**Colophon.** इति लाघवज्ञानस्य समाप्तः ।

विषयः । गुरुलघुभेदेन वस्तूनां द्विविधज्ञानमस्त्येव । तत्रास्मिन् लाघवज्ञानस्यैव सम्यग् विचारः ।

---

**No. 327.** वर्णजातिसङ्करमाला ( पराशरपद्धतीया ). By भार्गवरामः. Substance, country-made paper, 13 × 3 inches. Folia, 2. Lines, 8 on a page. Extent, 64 çlokas. Characte:, Bengali. Date, ? Place of deposit, Nalkōḍā *viâ* Vaçirhāṭ, Paṇḍita Prasannacandra Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णाश्चतुर्व्विधाः ।
वर्णानां सङ्करोत्पत्तिं निशामय महाशय ।
आदौ विष्णोर्मुखाज्जाता ब्राह्मणा वेदपारगाः ॥
बाह्वोश्च क्षत्रिया जाता ऊर्व्वोर्वैश्या धनान्विताः ।
पद्भ्यां शूद्राश्च सम्भूतास्त्रिवर्णस्य च सेवकाः ॥ इत्यादि ।

**End.** तोदखोदाय च दातव्यं चाण्डालाय ततः परम् ।
चर्म्मिपाय च काण्डाय सूतपाय च म्लेच्छजातये ॥ (?)
इमां क्रियां भार्गवरामनीतां
योऽप्यन्यथा मूढजनः करोति ।

नक्षीणमाङ्के वसु चक्रपातः

पचेत् यदा भुवि भनोः कुमारः ॥ (?)

**Colophon.** इति परात्परपदवी भावंकरानन्दनी वर्णजातिचक्रमाला समाप्ता ॥ ० ॥

**विषयः ।** शाखापातुत्पत्तिनिरूपणपुरःसरेण चक्रजातिनिरूपणम् ।

---

**No. 328.** वर्णप्रकाशः. By कर्णपूरगोस्वामी. Substance, country-made paper, 17×3 inches. Folia, 10. Lines, 6 on a page. Extent, 225 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Sonārgā̃, Purāpāḍā, Paṇḍita Kālikānta Çiromaṇi. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

कलुषमस्तीनो रसः सुरारे-

र्मंचदृशितादृक्माशिकैतवेन ।

विनिचितमयमानयत्नपदं (?)

निखिलजनं नरकेशरी पुनातु ॥

साधारवसुधाभोगैर्विविधैर्विबुधाश्रयैः ।

पुरन्दरपुरीवान्या धन्यास्ति चेपुरी पुरी ॥

सोमवन्नानसम्भूतः पुरुक्षत इवापरः ।

तस्या समरमाणिक्यनामाभूद्भूपनायकः ॥

कमलानन्दिनोऽनन्तकैरवक्षमकारिणः ।

सर्व्व एवाभवन् शूराः पौरा यस्य प्रभावतः ॥

स्थिते रतः समस्तानां भूतानां भूतिभूषितः ।

तस्य राजधरो नाम सूनुः ख्यातुरिवाजनि ॥

शब्दशास्त्रातिशूरेण कर्णपूरेण सूरिणा ।

वयं तस्यानुबन्धेन निबन्धः क्रियते मया ॥

श्रानन्दनो ... ... वर्णानां दानदायकः ।

कर्णपूरकविः कस्मै ... ... न रोचते ॥

सन्देहध्वान्तसन्दोहच्छन्ने विश्वान्धचक्षुषि ।

वर्णप्रकाशदीपेन लिपिकर्म्म प्रयुज्यताम् ॥

पुराणयमकस्वेषाम् कोषाणेकोनविंशतिम् ।
धातुवृत्ति ... ... ... समाहृत्याधमुच्यते ॥
... ... ... अयजस्यकजीवनं अवनं अवः ।
जिह्मगो अथनं अथा अनको अननं अनः ॥ इत्यादि ।

End. मूर्द्धन्ये च तथा इनये नारीवरणमीरितम् ।
व्याध्विरोषणं ... ... ... पणसन्तथा ॥
तथा श्रीविषणश्चैव चीर ... ... प्रकोपणम् ।
प्रविपक्कः ... ... ... प्रविंसकश्च कालिवी ॥
भवेत् प्रविंसकश्चैव प्रविन्यास तथैव च ।
वक्रणदी सुरापाणं तथा वक्रणितम्बकः ॥
गिरिनद् गिरिनदी तथा गिरिणितम्बकः ।
चराचनीत्यादि पुनः प्रोक्तः शिष्टप्रयोगतः ॥

Colophon. इति त्रिपुरपुष्करनामरमाविक्रमणामात्य श्रीकण्ठपूरकृते वर्णप्रकाशे मूर्द्धन्यणकारप्रकरणम् ॥

विषयः । षकारनकारवकारादिवर्णानां वर्गीयान्तःस्थतालव्यादिविचारः । तत्र प्रथमं वर्गीयान्तःस्थज (य) कारनिरूपणम् । तत्र वर्गीयजकारनिरूपणम् । एकद्वित्र्यक्षरान्तरवर्गीयजकारनिरूपणम् । एकद्वित्र्यक्षरान्तरान्तःस्थयकारप्रकरणम् । मूर्द्धन्यणकारप्रकरणम् । तत्र एकद्वित्र्यक्षरान्तरमूर्द्धन्यणकारनिरूपणम् । दन्त्यनकारप्रकरणम् । तत्र एकद्वित्र्यक्षरान्तरदन्त्यनकारनिरूपणञ्च । इति ।

---

**No. 329.** वादमाला. By जयतीर्थः. Substance, country-made paper, 12×6 inches. Folia, 25. Lines, 9 on a page. Extent, 727 çlokas. Character, Nāgara. Date, ? Place of deposit, Kāçidhāma, Khālispurā, Paṇḍita Priyanātha Tattvaratna. Appearance, tolerable. Prose. Correct.

Beginning. श्रीवेदव्यासाय नमः । शुभमस्तु ।
नमोऽशेषगुणपूर्णाय विष्णवे ।
सत्याशेषजगज्जन्मपूर्व्वकर्त्रे सुरद्विषे ॥
ननु कथं सत्यं जगदङ्गीकाराधिकारिणो विमतं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवत् इत्यनुमानविरोधात् मैवम् । इत्यादि ।

End. प्राक्सुखात् वाक्सुखात् भूयात् प्रीत्यै माधवमध्वयोः ।

**Colophon.** इति श्रीमद्राद्माख्या जयतीर्थमुनिविरचिता ।

विषयः । माध्वाचार्य्यमतादीनां विशदीकरणम् ।

---

**No. 330.** वादिभूषणम् . By पुरुषोत्तमाचार्य्यः. Substance, country-made paper, 12 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 274 çlokas. Character, Nāgara. Date, ? Place of deposit, District Vãkuḍā Visṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

पूर्णबोधसुखसद्गुणदेवं पूर्णभक्तिहृदयाम्बुजगेहम् ।
तं जगज्जननसंहृतिहेतुं नौम्यहं यदुपतिं गतदोषम् ॥
व्याकृत्य बन्धमिथ्यात्वं रचिता वेदमानता ।
सूत्रभाष्या कृता येन पूर्णबोधं नमामि तम् ॥
यद्वाणी भवसन्तापतप्तपाणीव सद्गा सताम् ।
नत्वा जयार्य्यं संनौमि विद्याधीशमुखान् गुरून् ॥
प्रणम्य पितरौ भक्त्या पितृव्यं तत्प्रपूजितम् ।
करिष्ये बन्धमिथ्यात्वदूषणं वादिभूषणम् ॥
ननु सर्व्वागमानामद्वितीयपरत्वान्यथानुपपत्त्या बन्धमिथ्यात्वमवश्यमभ्युपेयम् ।
इत्यादि ।

**End.** तथा सति वैदिकवन्धेऽपि तदभावेन मिथ्यात्वानुपपत्तिः न चोभयोरावि-षयकवेदवेद्यत्वेऽपि बन्धमिथ्याविषयकत्वात् मिथ्यात्वं न प्रत्यक्ष इति वाच्यं वेदाप्रामाण्यानिस्तारात् । तस्मात् बन्धमिथ्यात्वखण्डनं वेदप्रामाण्यानुकूल-मिति सिद्धम् ।

**Colophon.** इति श्रीपुरुषोत्तमाचार्य्यविरचितं वादिभूषणं समाप्तम् । श्रीरामानुजाय नमः ।

विषयः । विचारमुखेन बन्धमिथ्यात्वखण्डनादिः ।

---

**No. 331.** वासन्तीविवेकः. By शूलपाणिः. Substance, country-made paper, 18 × 3½ inches. Folia, 19. Lines, 6 on a page. Extent, 306 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamana-

simha Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** अथ कामरूपीयनिबन्धोक्ता वासन्तीपूजाव्यवस्था । अथ विशेषाग्रहो शरदुत्स-प्रभावो माघः । यथा भविष्ये ।
विशेषाभिधानात्तु शरदुत्सवो ज्ञेयः ।
इह चैत्रे विनैव पूजा कार्या । इत्यादि ।

**End.** चपायव्यवाधिकायो पचौप्रवेशाखवर्हितपूर्व्वदिने षष्ठीं विनापि कार्यं कार्यौ दोलयात्रावर्हितपूर्व्वदिने चतुर्दशीं विनापि मङ्गलाथ इति सिद्धान्तम् । दोलयात्राविवेकः ।

**Colophon.** इति शूलपाणिकृतो वासन्तीविवेकः समाप्तः ।

**विषयः ।** वासन्तीपूजाव्यवस्थाप्रसङ्गेन तत्पूजाप्रकारादिनिरूपणम् ।

---

**No. 332.** विधानमाला. Substance, country-made paper. Folia, 47. Lines, 8 on a page. Extent, 600 çlokas. Character, Nāgara. Place of deposit, Benares Govardhanasarāi, Paṇḍita Vindhyeçvarīprasāda Dube. Appearance, old. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः । अथ विधानमालारम्भः ॥
प्रणम्य लम्बोदरमादरं तां सन्तोषदां सर्व्वपुराणदाम् ।
धर्म्मार्थकामव्यवहारसिद्धै करोमि शुद्धार्थविधानमालाम् ॥
तत्र चादौ पुष्पवतीविधानं लिख्यते । इत्यादि ।

**End.** अधिकत्वात् दोषो नास्ति ।

**विषयः ।** गर्भिणीनां बालकानाञ्च भूतप्रेतादिकृतोपद्रवशान्तिः ।

---

**No. 333.** विभक्तितत्त्वम्. By रमाकान्तचक्रवर्त्ती. Substance, country-made paper, 18 × 1¼ inches. Folia, 56. Lines, 4 on a page. Extent, 1,176 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Parganā Sonārgã, Post Office Vaidyervāzār, grāma Candrakirti, Paṇḍita Rajanikānta Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य गौरीगणनाथपार्थौ
गुरुञ्च गोपञ्च शिवादिमादौ ।
विभक्तितत्त्वार्थमिदं विचिन्त्य
तनोति चेतोः कृपया हि धातुः ॥
इदं यच्चं दृष्ट्वा यदि कुरुत दोषाय च मतिं
खलाकान्ते यस्मात् गुणगणरतये ज्ञानमिति ।
कदाचिद्दोषः स्यादपि च हि कुर्यात् स दयया
निरस्तं साधूनां ननु परवगुम्मेति द्यिता ॥ (?)

प्रथमा । व्याकरणं हि शक्तिग्राहकं । ततः इच इत्यादिपदस्याभजन्यपुंस्त्व-
वासविशेषतस्तमानाधिकरणदसत्त्वावच्छिन्नो इच इति गोनुर्बोधे प्रकृतेः प्रत्ययस्य
वा कस्मिन् अर्थे शक्तिरिति वाक्यं बोधयन्नाह प्रथमेति । किञ्च हि ननु-
विषयकज्ञानकारणीभूतधातुविभक्तिभिन्नलिङ्गशक्तिमत् । तस्यार्थे तस्याधस्ताव-
जन्यज्ञानविषयीभूते विशेषणेन प्रतीयमाने प्रथमा इत्यर्थे स्वार्थविशिष्टस्य
वर्णान्तरविशिष्टत्वेन तत्प्रतिपादिका प्रथमेत्यायातम् । ननु अन्यार्थविशिष्ट-
स्वाभिधेये यदि प्रथमा तदा "राज्ञः पुरुषः" इत्यादौ राजन् शब्दात्
पुंस्त्वादार्थविशिष्टराजनिरूपितस्वत्ववानिति बोधेऽप्यर्थान्तरपुंस्त्वादिविशिष्टत्वेन
प्रतीयमानत्वात् कथं प्रथमा स्यात्, अन्यार्थविशिष्टार्थेन यदि शब्दान्तरार्थो
न विशिष्यते तदा प्रथमा इति वचनपरत्वाद् वक्तव्यमिति । तथाचाह ।
"वर्णान्तरैरसम्बिद्धो लिङ्गार्थो भवेद् यदि ।
प्रथमा स्यात्तदैवापि तावन्मात्रविवक्षया ॥" इति ।
अन्यथा लिङ्गार्थे प्रथमा इति कृते सिध्यति किं वचनपरत्वेन । इत्यादि ।

**End.** "तन्त्रेण सच युक्तार्थं यत् पदं यदपेक्षते ।" इति ।
"ऐकार्थ्यं प्रथमर्थानां इति युक्तार्थतां विदुः ।
पदानां प्रत्ययैर्भिन्नः समासम्येति इत्ययः ॥"
पृथक्शक्तिप्रतिपाद्यार्थानां एकार्थशक्तिप्रतीतिविशेषं यतां युक्तार्थतां इति
विदुरित्यर्थः । मवती चित्रा गौर्यस्य इति वाक्ये मत्वपदापेक्षया समास
इति । न च मत्वपदस्य समासान्तर्निविष्टविशेष्यपदान्वितत्वमिति वाच्यम्
समासार्थापेक्षया गोशब्दार्थस्यापि विशेषणत्वात् । तथा चोक्तं ।
"प्रतियोगिपदादन्यत् यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशस्य सम्बन्धेन नेष्यते ॥"

...पसञ्ज्ञादित्यर्थः । वाक्यप्रकृतिसमासपक्षे हृतिरपि नेष्यत इत्याह ।
...रजप्रतियोगिभ्यां यद्वद्यदन्यदपेक्ष्यते ।
अर्वाग्वकृत्वकादेव हृतिस्तत्र तु नेष्यते ॥" इति ।
नित्यसमासपक्षे तु समस्तपदस्य विशेषणार्थेन सहान्वय इति । ... ... ...
... ... ... ... ... ... ... ... ... ... मौलसंचितपङ्क्ती इत्यादौ व्याख्यान-
समासं "स्त्रियामादौ" इति कृते मौलस्त्रोचिते इति प्रयोगः स्यात्, सत्यं
स्याद्यनाद्यादिप्रकृत्यन्यतरार्थोपस्थापकं नाम ... ... ... ... द्वैनेति यथ
निर्देशः तत्र पदेनैव समास इति ॥

Colophon इति श्रीरमाकान्तचक्रवर्त्तिनिरचितं विभक्तितत्त्वं समाप्तम् ॥

विषय: । कातन्त्रसूत्राणि परिशिष्टकारिकाः शब्दशक्तिप्रकाशिकाकारिकाः कातन्त्र-
शास्त्रानग्रन्थसमुदायविशेषांश्चोद्धृत्य वादार्थरीत्या प्रथमादिविभक्तीनामर्थस्य प्राञ्जलालोचनम् ।
संक्षेपतः समासलुप्तविभक्त्याद्यर्थालोचनञ्च ।

---

**No. 334.** विराटपर्व्वटीका ( भावार्थप्रकाशिका ). By रामकृष्णः. Substance, country-made paper, 12 × 3½ inches. Folia, 12. Lines, 8 on a page. Extent, 348 çlokas. Character, Bengali. Date, ? Place of deposit. District Mayamanasimha Vādari, Paṇḍita Çivacandra Nyāyabhūṣaṇa, Appearance, old. Prose. Incorrect.

Beginning ॐ नमः शिवाय ।
भगवन्तं नमस्कृत्य भक्त्या च कामदं हरिम् ।
विराटपर्व्वव्याख्यानं रामकृष्णेन तन्यते ॥
अथ धर्म्मादेव विपत्तितरणं परमविपत्तावपि धर्म्मो न त्याज्य इति बोधयितुं
युधिष्ठिरं प्रति ज्ञापनरूपैककार्य्यतया भगवान् द्वैपायनसूरीयं पर्व्व-
भारतने जनमेजय उवाचेति । इत्यादि ।

End. अभिभवमादिति पाठे अभिभवः पराभवः ।
यत् कृत्य मन्त्रात्मं पर्य्यास्य । अनन्तरं शोभ्रं गत्वा स्त्रीकृत्य । परिवर्त्तं अपार्थद्रव्यम् ।
मैरेयं मधुतालिकाः पानिजनिकाः । सर्व्वं सत्त्वञ्च जीवितञ्च । कृते कारिते ॥
विराटपर्व्वण्यभिमन्युविवाहः । समाप्तञ्चेदं विराटपर्व्व अनन्तरमुद्योगपर्व्व
भविष्यति ।

**Colophon.** इति विरोधभञ्जिन्यां भावार्थप्रकाशिकायां विराटपर्व्वव्याख्या समाप्तः ।

**विषयः ।** महाभारतीयविराटपर्व्वव्याख्यानम् ।

---

**No. 335.** **विवादार्णवसेतुः.** Substance, country-made paper, 15 x inches. Folia, 149. Lines, 9 on a page. Extent, 5,783 çlokas. Character, Bengali. Date, ? Place of deposit, District Vāṅkuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ श्रीकृष्णाय नमः ।

निःशेषां शरदं नवाम्बुदरुचिः सच्चक्रचिन्तामणि-
र्यः प्रत्यूहतमोविनाशमिहिरः श्रीवासभीनाशनः ।
संसारैकमहार्णवे निपततां निस्तारबीजं नृणां
गोविन्दः कृपया सुरासुरगणैर्वन्द्यश्चिरं पातु वः ॥
चन्द्रेश-विश्वेश्वर-विश्वरूपा मिताक्षराकार-हलायुधौ च
श्रीकृष्ण-वाचस्पति-धर्म्मरत्नकृतश्च श्रीकरशूलपाणी ॥
गोविन्द-लक्ष्मीधर-तत्त्वकारा वाचार्य्यचूड़ामणिना च भट्टः ।
वाक्यानि येषां सुविमृश्य कुर्म्मो ग्रन्थं विवादार्णवसेतुसञ्ज्ञम् ॥
इह भाष्यामि वर्णादेः कथितस्य च वृत्तयः ।
राजप्रशंसा तत्रैव मन्त्रि-दूतादिलक्षणम् ॥
राजधर्म्मं व्यवहारं दृष्ट्वादिविविधप्रकाः ।
व्यवहारोत्कृष्टयोर्विविधार्थनिरूपणम् ॥
व्रतादीनां तथ पुंसामधिकारिविवेचनम् ।
स्त्रीधनस्य निर्णयश्चाद्धिकारिनिरूपणम् ॥
भागानर्हेच दायानामविभाज्यविभाज्यता ।
पितृकृत्यविभागश्च श्राद्धभागविधिस्तथा ॥
संसृष्टानां विभागश्च विदेशागतवण्टनम् ।
निह्नुतस्य विभागश्च भागसन्देहनिर्णयः ॥
भुक्तिव्यवहारलक्षणादि भाषापादस्ततःपरम् ।
उत्तरपादक्रियापादौ ततो निर्णयपादकः ॥
साक्ष्यादिनिर्णयस्तत्र ततः क्रियावलाबलम् ।
निक्षेपनिधिरत्नौधौ विक्रये च विधिस्तथा ॥

विधिवानच सम्भूय समुत्थानेऽथ भण्यते ।
कर्षकादेर्भागविधिस्तथा दत्ताप्रदानिकम् ॥
ग्रहादेयदेयदत्तादत्तानां विधिरुच्यते ।
भृतकानां विधिश्चैव दासमोक्षाधिकारिणौ ॥
वेतनस्यानपाकर्म स्वामिपालविधिस्तथा ।
पश्चाद्विविधिरत्नैव मृष्टादिभाटको विधिः ॥
विक्रिया सम्प्रदानञ्च क्रीतानुशयनिर्णयः ।
सीमाविवादे च विधिः क्षेत्रादौ विधिस्तथा ॥
मत्स्यरक्षाविधिश्चैव मत्स्यघातादयस्तथा ।
मत्स्यघातेऽप्यदण्ड्याश्च वाक्पारुष्ये विधिस्तथा ॥
विधिश्च दण्डपारुष्ये तथा स्तेयनिरूपणम् ।
प्रकाशतस्करदमोऽप्रकाशचौर्य्यदण्डनम् ॥
चौरान्वेषणचौरातिदेशापवादनिर्णयः ।
साहसे तु दण्डभेदो घातकान्वेषणं ततः ।
स्त्रीसंग्रहणतद्दण्डो परदारागमे दमः ॥
स्त्रीपुंधर्म्मनिर्णयश्च तथा द्यूतसमाह्वयः ।
प्रश्नादिषु विवादेषु प्रकीर्णकमतःपरम् ॥
बहुधा विषयश्चैव विधिर्दण्डाश्रितः पुनः ।
अथ वर्णादिशुद्धिः । तत्र महाभारते युधिष्ठिरं प्रति भीष्मवाक्यम् ।
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
वायुर्ज्योतिस्तथा चापः खञ्च गाञ्चानुकल्पयत् ॥ इत्यादि ।

**End.** अष्टापाद्यमित्यस्याष्टभिरापद्यते गुण्यते इत्यष्टापाद्यमष्टगुणम् । किल्विषदण्ड-साधनम् । तद्दोषगुणवदिति सर्व्वत्रान्वितम् । तेन यत्र स्तेयदण्ड उक्तः । स स्तेयदोषगुणतः तस्य शूद्रस्याष्टगुणः । तादृशवैश्यस्य षोडशगुणः । तादृश-क्षत्रियस्य द्वात्रिंशतिगुणः । तादृशब्राह्मणस्य चतुःषष्टिगुणः । ततोऽप्यधिक-तरगुणस्य ब्राह्मणस्याष्टविंशत्यधिकशतगुण इत्यर्थ इति रत्नाकरादयः । मनुः । स्तेयाः सुरापा ब्रह्मघ्ना गुरुदाराभिगामिनः ।
न सन्ति यस्य राष्ट्रेषु स राजा शक्रलोकभाक् ॥
मनुः । अनेन विधिना राजा मिथ्या विवदतां नृणाम् ।
साक्षिप्रत्ययसिद्धानि कार्य्याणि समतां नयेत् ॥

उदितो विवादेषायं मिथ्या विवदमानयोः ।
व्यवहारस्तु मार्गेषु व्यवहारविनिर्णयः ॥
एवं कार्य्याणि सर्व्वाणि सम्यक् ज्ञात्वा महीपतिः ।
देशाचारस्मृतिशास्त्रेण धर्म्मांश्च परिपालयेत् ॥

Colophon. इति विद्वद्भिरचिते विवादार्णवसेतुके ।
तरङ्गो निखिलव्यासैरेकविंशोऽस्य कीर्त्तितः ॥
बाणेश्वर-कृपाराम-रामगोपाल-कृष्णजीवनाख्यैः ।
वीरेश्वर-कृष्णचन्द्र-श्रीगौरीकान्ताभिधानैः ॥
सद्भिः काशीशङ्कर-श्यामसुन्दर-कृष्णकिशोरसंज्ञैः ।
सीतारामसंज्ञैश्च कृतो ग्रन्थः स्फुरतु सभायाम् ॥
इत्यनेकविषयवाग्मि विद्वद्वृन्दोपवर्णितः ।
विवादार्णवसेत्वाख्यो ग्रन्थः संपूर्णतां गतः ॥

विषयः । मन्वादिसंहिताभ्यः मिताक्षराकृत्-धर्म्मरत्नकृत्-शूलपाणि-वाचस्पतिप्रभृतिपूर्व्वतन निबन्धृवाक्येभ्यश्च प्रमाणमनुसृत्य नानाविषयवाग्मिभिः विद्वद्भिः बाणेश्वर-कृपारामप्रभृतिभिः निबद्धोऽयं ग्रन्थः । अत्र च स्मृतिशास्त्रगताः सर्व्व एव विषयाः सम्यग्विचारपूर्व्वकं निर्णीता इति ।

---

No. 336. विषयतावादार्थः वा विषयताविचारः. Substance, country-made paper, 17×4 inches. Folia, 13. Lines, 9 on a page. Extent, 599 çlokas. Character, Bengali. Date, ? Place of deposit, Dhānukā *viâ* Pālang, District Faridpur, Paṇḍita Kālikiṇkara Vidyābhūṣaṇa. Appearance, old. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।
बुद्धिर्नाम कश्चिदात्मविशेषगुणस्तद्व्यक्तित्वघटमहं जानामीत्याकारका ...
... स्वाधारत्वानुभवबलादेव सा च सविषयिका तद्धर्म्मिग्राहकप्रतीत्य-
घटादिविषयकत्वेनैव तदवगाहनात् । घटादिनिष्ठं तद्विषयत्वञ्च तत्प्रति-
योगिकसम्बन्धविशेषः । स च प्रतियोगित्ववत् स्वरूपानतिरिक्तः क्लृप्तेन स्वरूपे-
णैवोपपत्तौ अतिरिक्तकल्पनाया अनवकाशात् । इत्यादि ।

End. तत एव शाब्दज्ञानस्य तद्विषयकत्वोपपत्तेः प्रकारतादीनां नवानुपगमे शाब्द-
ज्ञानुमित्यादीनां बाधाद्यप्रतिबन्धकत्वप्रसङ्गः । विरोधिज्ञानाप्रतिबध्यत्वप्रसङ्गश्च ।
प्रकारतादीनामेव शाब्दप्रतिबध्यप्रतिबन्धकतावच्छेदकत्वादिति दिक् ॥

**Colophon.** इति विषयताविचारः ॥ श्रीहरिः शरणम् ॥ श्रीगुरवे नमः ॥

**विषयः।** अनुमानादिभिर्विषयज्ञानस्य विचारः। प्रत्यक्षाभावाभेयोद्देश्यविशेषणादीनां विचारः ॥

---

**No. 337.** विष्णुसहस्रनामविवरणम्. By विद्यारण्यतीर्थः. Substance, country-made paper, 12 × 8 inches. Folia, 58. Lines, 13 on a page. Extent, 754 çlokas. Character, Nāgara. Date, ? Place of deposit, Kāçidhāma, Khālispurā, Paṇḍita Priyanātha Tattvaratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गुरुभ्यः।

धर्म्मगाङ्गेयसंवादे महार्थंश्रुतवर्त्मणाम्।

कृष्णनामसहस्रस्य परिचर्य्या विरच्यते ॥ इत्यादि।

**End.** तर्पयेत्सार्द्धयेच्चैव ब्राह्मणान् भोजयेत्ततः।

सुवर्णं दक्षिणां दद्यात् विप्रेभ्यः विवर्ज्जयेत् ॥

एवमाराध्य लक्ष्मीशं सततं स्वस्तिमान् भवेत्। इति।

कृष्णनाम्नां सहस्रस्य परिचर्य्या कृता शुभा।

सहस्रशाखिनः प्रीत्यै श्रीमतः काशीभूपतेः ॥

शं नो वातः पवतां शं न स्तपतु सूर्य्यः।

शं नः ...... वः पर्ज्जन्योऽभिवर्षतु ॥

**Colophon.** इति श्रीविद्यारण्यतीर्थकृत सहस्रनामविवरणपरिशिष्टं समाप्तम्। शुभम्।

**विषयः।** महाभारतान्तर्गतविष्णुसहस्रनामव्याख्या।

---

**No. 338.** विष्णुसिद्धान्तग्रन्थः. Substance, country-made paper, 47 × 3 inches. Folia, 35. Lines, 6 on a page. Extent, 497 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta Çyāmapukura Viçvakoṣa office, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ श्रीश्रीसूर्य्यादिभ्यो ग्रहेभ्यो नमः।

अये वैकुण्ठसंस्थानश्रीलनारायण प्रभो।

श्रीलक्ष्मीरुवाच् प्रियावक्ते ज्योतिषां चरितं वद ॥

ये श्रीसूर्य्यादयः खेटा ज्योतिश्चक्रनिवासिनः ।
तेषां गुणानां गरिमा कः प्रवक्तुं समर्थति ॥
तथापि तव प्रीत्याहं श्रीलक्ष्मीनारायणः स्वयम् ।
प्रवदेयं मनाक् गुह्यं सावधानावकर्णय ॥
श्रीसूर्य्यः परमो ब्रह्मा श्रीसूर्य्यः परमः शिवः ।
श्रीसूर्य्यः परमो विष्णुस्तस्मै श्रीब्रह्मणे नमः ॥
खखाभ्रवेदर्तुखखग्रचन्द्राभ्राभ्राम्बराक्षोणिगुणेषुचन्द्रैः (१५५५२०००१७०३५००० ) ।
मितेऽत्र वर्षे गगते विधातुः श्रीविष्णुनामावतरं भवेऽद्य ॥ इत्यादि ।

**End.** ग्रहाणामर्चने होमे यज्ञे चौषधिधारणे ।
दाने जपे वा मन्त्रस्य शान्तये मन्त्रधारणे ॥
धारणे कवचस्यैवं ग्रहविप्रार्चनं चरेत् ।
धारणे ग्रहमूलस्य कवचस्यापि धारणे ॥
ग्रहविप्रान्यविप्राणां न कुर्य्याच्छुभदर्शनम् ।
अन्यथा विफलं तस्य वन्ध्यास्त्रीरमणं यथा ॥

**Colophon.** इति श्रीलक्ष्मीनारायणसंवादे विष्णुसिद्धान्तग्रन्थे दुष्टनिन्द्यजन्मादिप्रतिक्रियादानाधिकारो द्वादशः ॥ अतःपरं खण्डितम् ।

**विषयः** । प्रथमाधिकारे,— ताराध्रुवादिनिरूपणम् । द्वितीयाधिकारे,— भौमादिग्रहध्रुवादिनिरूपणम् । तृतीयाधिकारे,— नाक्षत्रिकरविराहुकेतूनां स्फुटाधिकारादिः । चतुर्थाधिकारे,— भौमादिग्रहस्फुटादिनिरूपणम् । ५म—६ ष्ठाधिकारयोः,—शकाब्दपतेवत्पत्यादिनिरूपणम् । तद्यथा,—

(नवागचन्द्राग्निगजाष्टबाणपक्षाङ्कचन्द्रप्रमिते गतेऽब्दे ।
शर्वाण्यकादित्यनृपोऽपि भावी तदब्दयुक्ते क्षितिवृष्टिवर्षम् ॥

एषः सप्तमपत्रस्थतः श्लोकः ।) ७ माधिकारे,— त्रिप्रश्नादिनिरूपणम् । ८ माधिकारे,— चन्द्रग्रहणादिनिरूपणम् । ९ माधिकारे,— रविसञ्चरणादिः । १०म—११ शाधिकारयोः,— दुष्टग्रहजन्यदोषप्रतीकारकरणदानादिः । १२ शाधिकारे,— दुष्टनिन्द्यजन्मादिप्रतिक्रियानिरूपणम् ।

---

**No. 339. वीरभद्रतन्त्रम्.** Substance, country-made paper, 13×2 inches. Folia, 10. Lines, 6 on a page. Extent, 232 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीगुरुः ।

पार्वत्युवाच ।

एतत् ज्ञातं जगत्सर्व्वं नानाविधिसमाकुलम् ।
उपायं ब्रूहि लोकानां साधकानां सुखावहम् ॥
दुर्ज्जनानाञ्च पापानां दुर्ज्जयानां तथैव च ।
उपद्रवान् ब्रूहि मे योगान् नानाव्याधिकरान् प्रभो ॥

ईश्वर उवाच ।

शृणु त्वं हि वरारोहे यत्त्वयार्थेन वाञ्छसि ।
तद्वदामि च ते देवि यत्सर्व्वं समुदाहृतम् ॥ इत्यादि ।

**End.** ॐ क्रीं कामीः क्रीं नमः आकर्षणमन्त्रः । ॐ चण्डिकायै नमः । ह्रीं ह्रैं ह्रूँ नमः । अस्य शतजपेन सर्व्वकामः सिद्धो भवति ! ॐ कामिनी स्वाहा अनेन हुतमांसहोमाद्वाक्सिद्धिर्भवति ॥ ० ॥

**Colophon.** इति वीरभद्रतन्त्रे चतुर्थः पटलः ॥ समाप्तोऽयं ग्रन्थः ।

**विषयः ।** भूताकर्षणम् । मोहनादिः । विद्वेषणादिः । उच्चाटनादिः । स्तम्भनवशी-करणादिश्चेति ।

---

**No. 340.** वृन्दावनकाव्यम्. By मानाङ्कराजः. Substance, palm-leaf, $13 \times 1\frac{1}{2}$ inches. Folia, 10. Lines, 2 on a page. Extent, 58 çlokas. Character, Bengali. Date, Sk. 1662. Place of deposit, District Vā̃kuḍā, Viṣṇupura, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, old. Verse. Correct.

**Beginning.** श्रीश्रीहरये नमः ॥

वरदाय नमो हरये
पतति जनोऽयं स्मरन्नपि न मोहरये ।
नडग्रचक्रन्द चता
मनसि दितिर्येन दैत्यचक्रं दहता ॥
स्वमिव भुजङ्गवि शेषं
उपधाय स्वपिति भुजङ्गविशेषम् ।
नवपल्लवसमकरया
श्रियोर्म्मिपङ्क्त्या च समकरया ॥ इत्यादि ।

**End.** इत्याह पीतवाससमायतनेत्रं
कंसासुरात् पशुमतामायतने रक्षं ।
दमितानां विमलतया सह लीलाजानां
च्छायां निकिरन्निव दशनैः सह लीलाजानाम् ॥ * ॥

**Colophon.** इति मालाङ्केन विरचितं वृन्दावनाख्यं काव्यं समाप्तम् ॥ ० ॥
श्रीश्रीजाने दयाधाने चरणाम्बुजतले तव ।
श्रीकाशीरामकृतिना लिपिरेषा समर्पिता ॥ ० ॥ शकाब्दाः १६६२ ।

**विषयः ।** कृष्णस्तुतिविषयकं काव्यमिदम् । अत्र च यमकादि नानाविधवाक्यभङ्गी विन्यस्ता ।

---

**No. 341.** **वृन्दावनकाव्यटीका.** Substance, palm-leaf, 14×2 inches. Folia, 20. Lines, 5 on a page. Extent, 375 çlokas. Character, Bengali. Date, Sk. 1662. Place of deposit, District Vā̃kuḍā Viṣṇupura, Kā̃ḍākuli, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीश्रीहरये नमः । मालाङ्काभिधानो महीपालः सकलगुणसम्पन्नो यमकितेनार्य्यादिच्छन्दसा जातिप्रभेदेन भगवतो वासुदेवस्य स्तुतिं कृतवान् । तत्र विघ्नविनाशाय विष्णोरनुस्मरणमाह वरदायेत्यादि । अस्यार्थः । आस्तां पूजानमस्कारादि यं हरिं स्मरन्नपि मनसि कुर्व्वाणोऽपि लोकः । दुःखत्यस्मिन्निति मोहोऽविद्या अस्य रये प्रवाहे न निमज्जतीत्यर्थः । येन हरिणा वासुदेवेन दैत्यचक्रं दहता भस्मसात् कुर्व्वता दितिर्दैत्यमाता मनसि हृदये हता ताड़िता सती बहुशो विस्तरवाराम् चक्रन्द क्रन्दितवती । तस्मै हरये नमः इति सम्बन्धः ॥ इत्यादि ।

**End.** तं पीतवाससं विष्णुमित्याह । कीदृशं आयतनेत्रः आयते दीर्घे नेत्रे यस्य सः । कीदृशं तं पशुमतां गोपानां आयतने गृहे कंसासुरात्रक्षं । रक्षन्तमिति वा । किं कुर्व्वन्निवाह । तत्राह । दशनैर्दन्तैः सह दमितानां । विमलदन्ता अपि विमला इति भावः । कीदृशानां लाजानां लीलाजानां लीलया जनितानां गोपस्त्रीभिर्लीलया दत्तानामिति यावत् ॥ * ॥

**Colophon.** इति राजाधिराजमालाङ्कविरचित-वृन्दावनाख्यकाव्य-टीका समाप्ता ॥
श्रीश्रीजाने दयाधाने चरणाम्बुजतले तव ।
श्रीकाशीरामकृतिना लिपिरेषा समर्पिता ॥ शकाब्दाः १६६२ ।

विषयः। मालाङ्कराजविरचितस्य हन्दावनकाव्यकाव्यस्य व्याख्यानम्।

---

**No. 342.** वैद्यवल्लभः. By श्रीकान्तदासः. Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 30. Lines, 7 on a page. Extent, 604 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā. Sonārgā, Bābu Prabhātacandra Sena. Appearance, tolerable. Verse. Incorrect.

**Beginning.** नमः कात्यायन्यै।

...... ममस्तकप्राधिका ममायाः
सत्यायाः कामकटकशतानि चमम्।
... ... ... ... ... ... ... ... ... ...
... ... प्रकृयतु केशवः शिवं वः॥
मुद्रामर्ज्ञा त्रिभुवनगुरोरीश्वनाथ...
... ... ... ... ... ... ... ... ...।
भावाक्रीतेः सपदि विकला वेपथुं संवहन्ती
रन्तुं गन्तुं न च बलवती पातु वः श्रीभवानी॥
श्रीमत्श्रीकान्तदासेन राजवैद्येन धीमता।
चाहृत्य सर्व्वतन्त्रेभ्यः क्रियते वैद्यवल्लभः॥
ये बालभावादनधीततन्त्रा
दारिद्र्यदुःखानलदग्धचित्ताः।
चमन्यजीवाः प्रतिकर्म्मतन्त्रा-
स्तेषां प्रबोधार्थमयं निबन्धः॥
चन्येषु शास्त्रेषु विवादमात्रं
न लभ्यते तत्र फलं समस्तम्।
पदे पदे ज्योतिषि मन्त्रवादे
चिकित्सिते प्रत्ययमावहन्ति॥
पूर्व्वं सूचनात्।
आयुर्वेदागमं पूर्व्वमायुर्वेदं ततः परम्।
शास्त्रोपायं ततः शिष्यं गुरुञ्चापि यथोदितम्॥
... ... ... ... ... ... ... ... ... ...।

आयुर्वेदागममाह ।
ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः ।
जग्राह निखिलेनादावश्विनौ च ततः परम् ॥ इत्यादि ॥

**End.** अथ मूत्रलक्षणमाह ।
पाश्चात्ये रजनीयामे घटिकानां चतुष्टये ।
उत्थाय रोगिणं वैद्यो मूत्रोत्सर्गञ्च कारयेत् ॥
आद्यन्तधारां सन्त्यज्य मध्यधारां समुद्धरेत् ।
शुभे कांस्यादिके पात्रे कृत्वा मूत्रं परीक्षयेत् ॥
वातेषु पाण्डुरं मूत्रं सफेनं कफरोगिणाम् ।
रक्तवर्णं भवेत् पित्ते द्वन्द्वजे मिश्रितं भवेत् ॥
... ... ... ... ... ...... ... ... ... ।
पाण्डुरं शीतलं मूत्रं भूरि श्लेष्मज्वरे भवेत् ।
कृष्णं चाविलकं मूत्रं सन्निपातज्वरे भवेत् ॥
यस्यालक्तकसङ्काशं मूत्रं नेत्रे च पिङ्गले ।
रक्ताधिक्यं विजानीयान्निर्दिशेत्तस्य लङ्घनम् ॥

**Colophon.** समाप्तमेतत् वाक्यं नास्ति ॥

**विषयः।** आयुर्वेदस्य लक्षणकथनमुखेनायुर्वेदागमस्याद्योत्पत्तिविवरणम् । वेदाङ्गलक्षणम् । शिष्यलक्षणम् । परिपन्नलक्षणम् । वैद्यलक्षणम । चिकित्सालक्षणम् । असद्वैद्यलक्षणम् . सद्वैद्यप्रशंसा । द्रव्याणां गुणदोषनिरूपणम् । रोगिणां गुणदोषयोर्द्विविधचिकित्सा । आतुरलक्षणम् । विविधौषधनिरूपणम् । सप्ताशय-सप्तधातु-सप्तोपधातु-सप्तत्वगादीनां परस्परलक्षणम् । शारीरदोषाणां लक्षणम् । तेषां स्थाननिरूपणञ्च । प्राकृतविकृतसंज्ञकानां दोषाणां कर्म्मनिरूपणम् । कालभेदेन प्रकोपप्रशमनिरूपणम् । धातूनां कर्म्मनिरूपणम् । धातूनां वृद्धिक्षयजनितरोगनिरूपणम् । तेषां चिकित्सानिरूपणञ्च । पञ्चेन्द्रियनिरूपणम् । तेषां प्रत्येकस्य गुणनिरूपणञ्च । पुरुषलक्षणम् । शुक्रभेदेन स्त्रीपुंनपुंसकजन्मनिरूपणम् । तेषां सात्त्विकादिभेदेन गुणदोषादकथनञ्च । वातपित्तादि सप्तधा प्रकृतिलक्षणम् । अतिह्रस्वादिनिन्दिताष्टपुरुषनिरूपणम् । अतिह्रस्वादिपुरुषगतरोगविशेषनिरूपणम् । तत्तद्रोगप्रशमनोपायकथनञ्च । ऋतुभेदे वातादिदोषाणां प्रकोपकथनम् तेषां हेतुकथनञ्च । कुपितलिङ्गनिरूपणम् । तेषां कर्म्मनिरूपणञ्च । विगुणमानादिनिरूपणम् । प्रज्ञापराधस्य लक्षणम् । तस्य व्याधिकारणत्वं तच्चिकित्सा च । षड्विधाहारनिरूपणम् । लघुगुरुद्रव्याणां मात्रानिरूपणम् । शुद्धाचारनिरूपणम् । ऋतुभेदे आहारौषधभेदनिरूपणम् । षड्रसनिरूपणम् । नाडीपरीक्षणम् । शिरोधकललक्षणम् । मूत्रलक्षणञ्चेति ।

---

**No. 343.** **वैष्णवगीता.** Substance, country-made paper, 11 × 4½ inches. Folia, 8. Lines, 8 on a page. Extent, 128 çlokas. Character, Bengali. Date, ? Place of deposit, Tripurā Agartalā Vṛddhanagara, Paṇḍita Mineçvara Sārbbabhauma. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।
अथ वैष्णवगीता ।
श्रीकृष्ण उवाच ।
एकदा नैमिषारण्ये केवलं पुरुषं शुभम् ।
प्रेमनाश्रित्य संस्तुत्य पप्रच्छ पार्थसत्तमः ॥
अर्ज्जुन उवाच ।
वैष्णवानां गतिं कृष्ण कथयस्व महाप्रभो ॥ इत्यादि ।

**End.** त्रिसन्ध्यं यः पठेन्नित्यं श्रद्धाभक्तिसमन्वितः ।
जीवमानः सुखं याति अन्ते मुक्तिपदं लभेत् ॥

**Colophon.** इति श्रीकृष्णार्ज्जुनसंवादे वैष्णवगीता स्तोपाख्यानं समाप्तम् ॥

**विषयः ।** श्रीकृष्णार्ज्जुनसंवादच्छलेन वैष्णवानामेव सर्व्वोत्तमत्वकथनम् ।

---

**No. 344.** **वैष्णवरहस्यम्.** Substance, country-made paper, 12 × 5 inches. Folia, 7. Lines, 9 on a page. Extent, 284 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhalpāḍā *viâ* Naihāṭi, Pāṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीराधाकृष्णौ जयतः ।
श्रीगोविन्दं व्रजानन्दसन्दोहानन्दमन्दिरम् ।
वन्दे वृन्दावनानन्दं श्रीराधासङ्गनन्दितम् ॥
श्रीराधाकृष्णौ जयतां
जयति विश्व ... भक्तवृन्दपरिवृतो निगूढवेशः ।
कौर्त्तनयज्ञवितानायान्तःकृष्णो बहिर्गौरः ।
इह खलु सकललोकहितावतारो भगवान् श्रीशचीनन्दनः कलियुगे परम-
धर्म्मप्रवर्त्तनाय ... ... ... ... वेशेनावततार । इत्यादि ।

**End.** ततो महाप्रभुः स्वपार्षदैः सह भगवद्भजनमार्गं प्रवर्त्तयामास ... ... रागा-
त्मानां विषयवैतृष्ण्यबोधानामकृत सन्न्यासः सन्न्यासाश्रमपावनो भक्तवृन्दपरिवृतो
नीलाचलमनुससार ।

प्रभुना कथितं यद्दुर्यरहस्यं वैष्णवाश्रये ।
तदेव लिखितं किञ्चिन्न तु स्वमतिवैभवात् ॥
भवभयशमपटुं ज्ञश्वचैतन्यनामा
कथमपि हरिनाम पाययन्नप्यभीष्टः ।
अनुपरमपयुक्तो भक्तवेशावतारो
नमहमखिललोकत्राणहेतुं नमामि ॥ ० ॥

**Colophon.** इति वैष्णवरहस्ये साध्यसाधनो नाम चतुर्थः प्रकाशः ॥*॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः।** नामोपदेशनिरूपणम् । गुरुपदाश्रयनिरूपणम् । आराध्यनिर्णयः । साध्यसाधननिरूपणञ्चेति ।

---

**No. 345.** व्यवस्थासारसंग्रहः. By रामगोविन्दशर्म्मा. Substance, country-made paper, 14×2 inches. Folia, 89. Lines, 7 on a page. Extent, 2,422 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Pilkhānā, Vāḍḍānagara, Paṇḍita Kailāsacandra Tarkaratna. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
गुरोः पादयुगं नत्वा रामगोविन्दशर्म्मणा ।
क्रियते बालबोधाय व्यवस्थासारसङ्ग्रहः ॥
तत्रादौ तिथिव्यवस्था निरूप्यते । तिथिस्तु द्वादशभिर्भागैश्चन्द्रक्रियोपलक्षितः
कालविशेषः । तदेव चान्द्रमसं दिनम् । यथा,—
अर्कादिनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
भागैर्द्वादशभिस्तत् स्यात् तिथिश्चान्द्रमसं दिनम् ॥ इति सूर्य्यसिद्धान्तात् ।
तत्त्रिंशता चान्द्रो मासः । स च द्विविधः मुख्यो गौणश्च । इत्यादि ।

**End.** दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च ।
अपविद्धाश्च ये पुत्राः भरणीयाः सदैव ते ॥
भिन्नगोत्राः पृथक्पिण्डाः पृथक् वंशकराश्च ये ।
सूतके मृतके चैव त्र्यहाशौचस्य भागिनः ॥ इति ॥
विरुद्धं स्मृतिशास्त्रेषु यदुक्तं बुद्धिविभ्रमात् ।
तत्क्षम्यं कृपया शोध्यं स्मृतिशास्त्रविशारदैः ॥

**Colophon.** इति शाण्डिल्यग्रामनिवासि भट्टवंशज-श्रीरामगोपालचक्रवर्त्यात्मज-श्रीरामगोविन्दशर्म्मविरचिते व्यवस्थासारसंग्रहे अशौचव्यवस्था समाप्ता ।

विषयः । तत्रादौ तिथिस्वरूपादिनिरूपणम् । तिथिद्वैधव्यवस्थादिः । जन्मतिथिनिरूपणम् । प्रतिपदादितिथिषु प्रत्येकं कृत्यविशेषव्यवस्थादिः । संक्रान्तिनिरूपणादिकम् । अथ अद्भुतनिरूपणम् । मत्त तत्र व्यवस्थादिः । उद्वाहव्यवस्थादिः । श्रौर्द्धदैविकव्यवस्थादिः । तत्र प्रेततर्पणादिविधानम् । अशौचान्तद्वितीयदिनकृत्यनिरूपणम् । श्राद्धविधिः । सपिण्डीकरणविधिः । वृषोत्सर्गादिविधिश्च । अथ आभ्युदयिकश्राद्धकालादिः । नवान्नविधिः । अमावास्याविहितश्राद्धकालादिश्च । अथ प्रायश्चित्तव्यवस्थादिः । अशौचव्यवस्थादिश्चेति ।

---

**No 346.** व्युत्पत्तिविचारः. Substance, country-made paper, 20×5 inches. Folia. 47. Lines, 8 on a page. Extent, 1,692 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Candrakānta Vidyāratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** नमः शिवाय ॥ अनुमित्यर्थकधातुयोगे विषयत्वं द्वितीयार्थः । तेन वह्न्यादिपक्षकानुमितिपरस्य वह्निमनुमिनोमीत्यादिवाक्यस्य न प्रामाण्यं । यदि च वह्निव्याप्यकपर्व्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्व्वतमनुमिनोमीत्यादिवाक्यस्यापि प्रामाण्यमनुमन्यते तदा तादृशधातुयोगे उद्देश्यत्वमपि द्वितीयार्थः । इत्यादि ।

**End.** इत्यञ्च कपोतमात्रवृत्तिपतत्त्वादिपर्य्याप्तावपि अतिरिक्तवृत्तिकपोतत्वावच्छिन्नत्वनिर्व्वाहात् कपोतशतादावपि कपोतादिव्यवहारोपपत्तिपर्य्याप्तिमतिप्रसक्तधर्म्मस्य तदनवच्छेदकत्वं गत्यन्तरं चिन्तनीयम् । * ॥

**Colophon.** इति व्युत्पत्तिविचारः ।

विषयः । कारकभावादियोगजद्वितीयादीनां आख्यातमपि व्युत्पत्तिविचारमुखेन कर्त्तृकरणादिव्युत्पत्तिविचारः ।

---

**No. 347.** व्रतकालविवेकः. By शूलपाणिमहामहोपाध्यायः. Substance, country-made paper. 19×5 inches. Folia, 9. Lines, 8 on a page. Extent, 328 çlokas. Character, Bengali. Date. Sk. 1737. Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

मानामुनिमतद्वैधजातसंशयशान्तये ।

व्रतकालविवेकोऽयं क्रियते शूलपाणिना ॥

तच दीर्घकालानुपालनीयव्रतत्रिदिनकर्त्तव्यता। कालापकर्षितत्रियतत्तकृत्यविषयो व्रतमिति व्रतखण्डम् । इत्यादि ।

**End.** कालविशेषानियम्नितत्त्व न तत्र प्रतिष्ठापूर्व्वोक्तत्रयशीर्षे पञ्चादिभिरित्यनेन कामस्यैव प्रतिष्ठाविधानात् । कालविशेषानियम्नितवे तदसम्भवाच्च। प्रतिष्ठा-विधानञ्च प्रतिष्ठाविवेकेऽनुसन्धेयमिति ॥ ० ॥

**Colophon.** इति सात्त्विकाय महामहोपाध्याय-श्रीशूलपाणिविरचितो व्रतकाल-विवेकः समाप्तः ॥ ० ॥

मुनिरामशिम्भुचन्द्रे शाके नभस्य षष्ठदिने ।
वाचिलेख विवेकेदं (?) जयनारायणद्विजः ॥

विषयः । व्रतानुष्ठानम् । अशौचव्रताकरणे दोषश्रुतिः । व्रतभङ्गप्रायश्चित्तम् । व्रतानुष्ठाने विहितकालः । ललितासप्तमीव्रतादयः । कार्त्तिकेयव्रतविधिः । प्रतिष्ठाकालश्चेति ॥

---

**No. 348.** शक्तितन्त्रम् । Substance, country-made paper, 14 × 4 inches. Folia, 41. Lines, 8 on a page. Extent, 615 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurā, Paṇḍita, Devīdāsa Cūḍāmaṇi. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीभगवत्युवाच ।

श्रुतोऽभिमतं ध्यानं मन्त्राश्च विविधाः श्रुताः ।
इदानीं श्रोतुमिच्छामि साधनं सर्व्वसिद्धिदम् ॥
स्थानं कालं तथा मालां यच्चान्यच्छक्तिसम्भवम् ।
अल्पायासेन सिध्यन्ति येन तत् कथ्यतां प्रभो ॥
ईश्वर उवाच ।
शृणु देवि प्रवक्ष्यामि सावधानावधारय ।
गुह्याद् गुह्यतरं देवि साधकानां सुखावहम् ॥
एकलिङ्गे श्मशाने वा शून्यागारे चतुष्पथे ।
शवस्योपरि मुण्डे वा जले वा कण्ठपूरिते ॥
सङ्ग्रामभूमौ योनौ वा स्थले वा निर्ज्जने वने ।
पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते ॥
तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा ।

चित्रकूटे नदीतीरे गुहायाञ्च शिवालये ।
जिष्णुप्रमथने चैव कूर्म्मे घावोतटे तथा । इत्यादि ।

**End.** अस्मात्तु चाभिषेकेण शक्तिवीजेन ताडिताः ।
विद्यानिष्ठा नष्टा भवसागराः ॥
घोराभिचाराः क्रूराश्च सर्वा रोगास्तथैव च ।
अस्मात्तु चाभिषेकेण कालीवीजेन ताडिताः ॥
नश्यन्ति विपदः सर्व्वाः सम्पदः सन्तु सुस्थिराः ।
अभिषेकेण शाक्तेन पूर्णाः सन्तु मनोरथाः ॥

**Colophon.** इति शक्तितन्त्रे शक्तपूजाप्रस्तावे चयोदशः पटलः ॥

**विषयः।** (प्रथमतः सप्तमं पटलं यावत् नोपलभ्यते ।) अष्टमे पटले, सिद्धियोग-निरूपणम् । आकर्षणवशीकरणादिषु कर्म्मसु चतुर्भेदकथनम् । तत्र दिङ्‌नियमादिकथनम् । मारणादौ मालाविधानकथनपूर्व्वकं जपविधिः । आसनादिविधिश्च । नवमे पटले, शवसाधन-विधिः । तत्र विघ्नरादिनिवर्त्तनकथनञ्च । दशमे पटले, कुलाचारविधिः । तत्र कुलनारी-लक्षणादिकथनम् । तत्पूजादिविधिः । कुलद्रव्यादिविधिश्च । एकादशे पटले, तृतीयाग्रविधिः । तत्र सम्विदासवयोर्विधिः । सम्विदादिशोधनविधिः । पञ्चमकारविधिः । शक्तिनिरूपणञ्च । द्वादशे पटले, कुलीनानां पुरश्चरणविधिः । कुमारीपूजनविधिः । पञ्चमकारेण कलार्चन-विधिश्च । चयोदशे पटले, शाक्ताभिषेकविधिः । ततो विशेषत इतिकर्त्तव्यताकथनञ्च ॥ इति शम् ।

---

**No. 349.** शनिस्तोत्रम् (स्कन्दपुराणीयम्). Substance, country-made paper, 6 x $2\frac{1}{2}$ inches. Folia, 9. Lines, 5 on a page. Extent, 79 çlokas Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Govinda Candra Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीरामचन्द्राय । ॐ नमः शनैश्चराय ।
प्रणम्य देवदेवेशं सर्व्वग्रहनिवारणम् ।
शनैश्चरस्य माहात्म्यं चिन्तयामास एव च ॥
युधिष्ठिर उवाच ।
देवदेव जगन्नाथ ग्रहपीडाविनाशनम् ।
घोरे पीडाविनाशाय उपायं वद मे प्रभो ॥ इत्यादि ।

**End.** य इदं प्रातरुत्थाय शनिवारे पठेन्नरः ।
पूजयित्वा शनिं वापि तस्य तुष्यति भास्करः ॥
सर्वाभीष्टप्रदो नित्यं भविष्यति न संशयः ।
सर्वेषामेव वर्णानां शनिपूजा विधीयते ।
शूद्रेणापि विशेषेण कर्त्तव्यमिति चादरात् ॥

**Colophon.** इति स्कन्दपुराणे रेवाखण्डे शनैश्चरस्तोत्रं समाप्तम् ॥

**विषयः ।** नलप्रोक्तशनैश्चरस्तोत्रम् ।

---

**No. 350.** शब्दशोभा. Substance, country-made paper, 18 × 2½ inches Folia, 41. Lines, 8 on a page. Extent, 1,230 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita, Haraprasāda Çāstrī. Appearance, old. Prose. Generally correct.

**Beginning.** (अस्य प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यम् ।) स्त्रीपुंनपुंसकानि च लिङ्गानि शब्दसंस्कारमात्रोपयोगीनि लोकरूढ़ानि धर्म्माधर्म्मवत् भेदेनोपादीयन्त इति शब्दसंस्कारमात्रोपयोगीनीत्यनेन लोकव्यवहारोपयोगीनि व्यावर्त्त्यन्ते ॥ अथ प्रथमतोऽकारान्तानि लिख्यन्ते ॥ इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** अजन्तहलन्तादिशब्दरूपनिरूपणम् ।

---

**No. 351.** शब्दरत्नम्. By रामशरणः. Substance, country-made paper, 14 × 3 inches. Folia, 7. Lines, 8 on a page. Extent, 139 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Vaidyervāzār Sātbheyepāḍā, Paṇḍita Nīlakamala Smṛtibhūṣaṇa. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
शब्दब्रह्ममयीं नत्वा शब्दशास्त्रं विलोकयन् ।
श्रीरामशरणो वक्ति शब्दरत्नं समासतः ॥
तत्र प्रकृतिप्रत्ययाभ्यामर्थस्य वाचकः शब्दः । शब्द गतौ बाहुलकात् दः । यथा चामरे । शास्त्रे शब्दस्तु वाचक इति । स च षोढ़ा भवति ।
शक्तो लाक्षणिको रूढ़ो योगरूढ़श्च यौगिकः ।
क्वचित् यौगिकरूढ़श्च शब्दः षोढ़ा निगद्यते ॥ इति शब्दशक्तिप्रकाशिका ।

तच शक्त्यर्थप्रतिपादकः शक्तः ; शक्तिश्च शब्दानां मुख्यव्यापारः । शब्दनिष्ठो यो मुख्यव्यापारो भगवत्सङ्केतोऽस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छारूपः सैव शक्तिरित्यर्थः । तद्विशिष्टश्चार्थः शक्यः तत्प्रतिपादकः शक्तो वाचक इति यावत् । इत्यादि ।

End. तथैव सर्व्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति । परे तु
यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥
तथाच खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्याहुः । तात्पर्य्यं वक्तुरिच्छा च यदि तात्पर्य्यं शब्दबोधकारणं न स्यात् तदा सैन्धवमानय इत्यादौ क्वचिदश्वस्य क्वचित् पूरणस्य बोधो न स्यात् । न च तात्पर्य्यग्राहकप्रकरणादीनामेव शब्दबोधे कारणत्वमस्तीति वाच्यम् । तेषामननुगमात् तात्पर्य्यज्ञानजनकत्वेन तेषामननुगमे तु तात्पर्य्यज्ञानमेव लाघवात् कारणमिति स्थितम् ॥

Colophon. इति शब्दरत्नं सम्पूर्णम् ॥

विषयः । अत्र प्रथमं शब्दलक्षणम् । ततो रूढयौगिकादिभेदेन शब्दस्य षड्विधत्वकथनम् । आकाङ्क्षायोग्यतासन्निधिच्छन्दस्य लक्षणादिनार्थबोधभेदकथनम् । लक्षणाया जहत्स्वार्थाजहत्स्वार्थेति द्विविधभेदकथनम् । लिङ्गस्य शुद्धमिश्रसंकीर्णाविष्टोपसर्जनायत्तेति षड्विधभेदकथनम् । शब्दानां शाब्दबोधकथनञ्च ॥

---

**No. 352.** शब्दशक्तिप्रकाशिकाटिप्पनी. By कृष्णकान्तविद्यावागीशः. Substance, country-made paper, 22 × 4 inches. Folia, 150. Lines, 10 on a page. Extent, 7,162 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurā, Paṇḍita Vrajanātha Vidyāratna. Appearance, new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
योगेश क्व गतं चिरं हिमगिरेः शृङ्गे कुटीरे प्रिये
योगार्थं किमु तासि कौशिकरमणी तन्वेति भङ्गावधम् ।
श्रुत्वा हासमनन्वितं गिरिसुतागौरीशयोर्मेनका
तत्रास्तीति वदन् सलज्जहृदयो मां पातु लम्बोदरः ॥
न्यायालङ्कारयुक्तं त्रिभुवनजनकश्रीपतौशेन शुद्धं
शुद्धं धीरेषु वद्धं सततमविदुषां स्थामलं सामगीतम् ।

ख्यातं तातं जिताख्यं सदयमसदयं मातरं साधुसङ्गं
श्रीयुक्ताख्याच्च कालीचरणमरचयं ग्रन्थमादौ प्रणम्य ॥
प्रभुश्रीकृष्णकान्त+ +सुत+जनश्रीवत् पादपद्मा
सानन्दानन्दमन्दस्मितनिचितशचीभावचञ्चत्कपापा ।
किञ्चित्क्रोधात्मतापाश्चरिपुकलितानिष्टचेष्टादिदोषा
शिष्टाचर्य्या विशिष्टा प्रभवतु जननी तारिणी मे नमस्या ॥
न्यायार्थस्थितिवृत्तिसंवृतिविधेयैतुं सुहृत्ताः युताम्
धीरानुच्चपदं नयन्तमयुतान् दुर्बुद्धिकाले मज्जताम् ।
वेदाख्यानसमुद्धृताखिलधरादित्यं महान्तं मुदा
श्रीमच्छ्रीजगदीशमत्र कमलाधीशं नमस्याम्यहम् ॥
न्यायसंसारपाथोधिमग्नोपासकतारकम् ।
रामनारायणं वन्दे तर्कपञ्चाननं गुरुम् ॥
धीरश्रीकृष्णकान्तेन विद्यावागीशसंज्ञिना ।
व्याख्यायते सतां तुष्ट्यै शब्दशक्तिप्रकाशिका ॥
प्रणम्य भूमौ विनयेन मान्यान्
धीरान् समस्तानिति वेदयामि ।
अशेषमात्सर्य्यमिदं विहाय
प्रदर्शनीयं सुविभाव्य दूष्यम् ॥

मङ्गलाचरणपूर्व्वकनिजकृतकारिकावलीं व्याख्यातुं प्रेक्षावत्प्रवृत्तये शिष्यशिक्षायै च प्रयोजनाभिधेयसम्बन्धप्रतिपादकं पद्यमादौ निबध्नाति तर्कमित्यादि । तर्को वितर्कः आपत्तिरिति यावत् । तन्त्रं सिद्धान्तः । तथाच पूर्व्वपक्षं सिद्धान्तञ्च जानता इत्यर्थः । इत्यादि ।

End. अनादिरित्यस्य व्याहृत्तिमाह पुना+ +तीत्यादि । उत्सर्गेत इत्यस्य व्याहृत्तिमाह खप्रभृतिभ्यश्चेति । शुभि रुचि इत्यादि । कुत इत्याकाङ्क्षायामाह पुनः पुनः शोभते इत्यादि ॥ इत्याख्यातटिप्पनी समाप्ता । तच्चितस्य न्यायसमन्वितार्थकलेन विचारविधुरतयातिसुगमतया च टिप्पनीकरणे मदीयप्रवृत्तिर्नोत्पद्यते । समाप्तश्चायं ग्रन्थः ॥

Colophon. इति श्रीकृष्णकान्तविद्यावागीशभट्टाचार्य्यविरचिता शब्दशक्तिप्रकाशिकाटिप्पनी समाप्ता ॥

विषयः । जगदीशतर्कालङ्कारकृत-शब्दशक्तिप्रकाशिकायाः-प्रकृतिप्रत्ययार्थविचारात्मकग्रन्थस्य व्याख्यानम् ।

---

**No. 353.** शब्दशास्त्रविवृतिः. By रघुनन्दनशिरोमणिः. Substance, country-made paper, 12 × 2½ inches. Folia, 85. Lines, 9 on a page. Extent, 3,394 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasimha, Serapura, Paṇḍita Candrakānta Tarkālaṃkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य परमं देवं ... चिदानन्दकम् ।
करोमि शब्दशास्त्रस्य विवृतिं प्रस्फुटां शुभाम् ॥
समर्थाख्यतत्त्वाभाय स्थिरलाय च द्रुतम् ।
कलापपूर्वतन्त्रस्य समुद्रः सेव्यतामयम् ॥
+ + + + समुत्सृज्य दूरतः खलु सेव्यताम् ।
ग्रन्थोऽयं यत्नतः साधो मनोज्ञज्ञानहेतवे ॥
अथ तद्धिताः शब्दाः सर्ववर्मणा कथं न व्युत्पादिताः वररुचिना वा कथं व्युत्पादिता इति शिष्यजिज्ञासायां प्रतिपादयन्नाह इत्यादिवदित्यादि ॥

**End.** क्त्वा प्रत्यये विमोचने विभाषा विमोचनादन्यत्र न स्यादेतदर्थमपि सूत्रं स्यादिति पुनरिह ग्रहणम् । ननु भोः । यद्यपीत्यादि । एते ननु भो विमोचन इति तुदादौ पाठो नास्ति इति बोध्यम् ॥ * ॥

**Colophon.** इति रघुनन्दनभट्टाचार्यशिरोमणिकृता शब्दशास्त्र-विवृतिः समाप्ता ।

**विषयः।** कातन्त्रव्याकरणस्य तद्धितांशस्य टीका ।

---

**No. 354.** शब्दसंग्रहमाला. By काशीश्वरः. Substance, country-made paper, 15 × 2½ inches. Folia, 56. Lines, 6 on a page. Extent, 2,344 çlokas. Character, Bengali. Date, Sk, 1688. Place of deposit, Kāṭhālpāḍā *viâ* Naihāti, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
अपारसंसारपयोधिनावं
सरस्वती-कम्रभवादिसेव्यम् ।
प्रणम्य पादाम्बुजमाद्य विष्णोः
काशीश्वरः शब्दनिकायमालाम् ॥
आश्रुतीति वनि वौदि वाद्याय वचनोऽपनः । (?)

अमरानुशासित्वात शब्दसंग्रहमालिका ॥
श्वेतपद्मकरी मह्या श्रेमाङ्गः कञ्जनिर्जरी ॥ इत्यादि ।

End. संश्लेषरन्ध्रयोः सन्धिः सारः शुक्रे धनेऽपि च ।
श्रेष्ठे धाम्नि च पुंसि स्यात् चयः पर्वतदेवयोः ॥
धामनिर्हृयोर्वर्भ्युरे स्यात् नामवद्व्यवधादिवत् ॥ ० ॥
इति सङ्कीर्णवर्गः ॥ ० ॥

Colophon. इति काशीश्वरकृती शब्दसंग्रहमाला समाप्ता ॥ शकाब्दाः १९८८ ।

विषयः । नानार्थद्व्यर्थादिशब्दानां पर्यायबन्धः ।

---

**No. 355.** शब्दसाध्यप्रबोधिनी. By रमानाथचक्रवर्त्ती. Substance, country-made paper, 16×3 inches. Folia, 37. Lines, 10 on a page. Extent, 1,434 çlokas. Character, Bengali. Date, Baŋgābda 1264. Place of deposit, District Ḍhākā, Vikramapura Vajrayoginī, Paṇḍita Dvārakānātha Tarkabhūṣaṇa. Appearance, old. Prose. Generally correct.

Beginning. ॐ नमः शिवायै नमः ।
शौरिं प्रणम्य देवञ्च भक्तानुग्रहकाम्यया ।
क्रियते बालबोधाय शब्दसाध्यप्रबोधिनी ॥
तत्र तावदकारान्ताः । दाशरथिवाचको रामशब्दः पुंलिङ्गः । रामः रामौ रामाः । रामं रामौ रामान् । रामेण रामाभ्यां रामैः । भिन्नविषयेऽपि निरवकाशतया ऐत्वं एत्वं बाध्यते । इत्यादि ॥

End. चत्वावर्णादेव इति टीकाकृतोक्तमध्यघटस्वरविषयकमिति बोध्यम् । मधुलिडादीनां विरामे व्यञ्जनादौ च डत्वं भवतीति ॥

Colophon. इति रमानाथचक्रवर्त्तिविरचिता शब्दसाध्यप्रबोधिनी समाप्ता ॥
वङ्गाब्दाः १२६४ ॥

विषयः । कातन्त्रानुसारेण अकारान्तादिशब्दानां रूपकथनम् ।

---

**No. 356.** शब्दानित्यतारहस्यम्. By मथुरानाथतर्कवागीश.. Substance, country-made paper, 20×4 inches. Folia, 24. Lines, 8 on a page. Extent, 1,128 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, old. Prose. Generally correct.

**Beginning.** (अस्य प्रथमपत्रचतुष्कं नास्ति तेन पञ्चमपत्रस्य प्रारम्भवाक्यं लिखितम् ।) यदि च परमाणुपरिमाणे द्व्यणुकपरिमाणापेक्षयापि नोत्कर्षोऽस्ति किन्त्वपकर्ष एव तस्यात्यन्तापकृष्टत्वेन सुप्रसिद्धत्वात् अधिकदेशव्यापकत्वेनैव परिमाणस्योत्कृष्टत्वमिति गुणकिरणावल्यामण्याचार्यैरभिहितत्वाच्च तदा तु तज्जातीयेत्यनुपादाय साहश्योपाधिमहत्त्वप्रतियोगिकत्वेनापकर्ष एव विवक्षणीयः ॥ इत्यादि ।

**End.** यथाश्रुते अणुपरिमाणादेरपि व्यावर्त्तनादसङ्गतेः । पक्षेतरत्वादिति पक्षेतरत्वतुल्यत्वादित्यर्थः । ननु मन्नु वर्णा नित्यास्तथापि पदवाक्यवेदा नित्या एव इत्यत आह यदा चेति । सतृन्योचरूपस्य पदसमूहरूपस्य ॥

**Colophon.** इति शब्दपरिच्छेदरहस्ये शब्दानित्यतारहस्यं सम्पूर्णम् ॥ * ॥

**विषयः ।** तत्त्वचिन्तामण्यन्तर्गतस्य शब्दाख्यतुरीयखण्डस्य कश्चिदंशोऽयं । अत्र च नानाविधन्याययुक्तितर्कोपन्यासमुखेन शब्दानित्यत्वं प्रदर्शितम् ॥

---

**No. 357.** शब्दाप्रामाण्यरहस्यम् . By मथुरानाथतर्कवागीशः . Substance, country-made paper, 17 × 3½ inches. Folia, 63. Lines, 8 on a page. Extent, 2,835 çlokas. Character, Bengali. Date, ? Place of deposit, District Pharidpur, Post Office Pálang, grāma Dhānukā, Paṇḍita Rajanīkānta Tarkaratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते तुरीयमणिफक्किकाः ॥
आन्विक्षिकीपण्डितमण्डलीषु
कृताश्रुतैरध्ययनं विनापि ॥
मदुक्तमेतत् परिचिन्त्य धीरा
निःशङ्कमध्यापनमातनुध्वम् ॥

प्रत्यक्षादिप्रमाणत्रयं निरूपितम् । इदानीं चरमप्रमाणं शब्दो निरूपणीयोऽतः शिष्यावधानाय प्रतिजानीते अथेत्यादिना । अथ उपमाननिरूपणानन्तरमथ निरूः शब्दः शब्दप्रमाकारणम् । यथाश्रुतेऽग्रे प्रमाणशब्दलक्षणकारणस्यार्थान्तरापत्तेः । निरूप्यत इति निरूपणं लक्षणस्वरूपप्रामाण्यादिभिर्ज्ञापनम् ।

स्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलो व्यापार इति यावत्। व्याख्यानस्य च विषयत्वमर्थः। तथाच उपमानविशेष्यकस्वस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारान्तरत्वनिष्ठाभिन्नो यो स्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलो व्यापारस्तद्विषयः प्रमाणं शब्द इत्यन्वयः। अथ पदस्य लुप्तद्वितीयाविभक्तिकस्य निरूपणक्रियाविशेषणतया लोके पचतीत्यादिवद्भेदस्य संसर्गमर्य्यादावगत्यलात्। नान्यः क्रियाविशेषणत्वस्थले अभेदान्वयबोधस्यैव साकाङ्क्षत्वात्। व्यापारस्य शब्दप्रयोग एव तद्विषयता व्यापारानुबन्धिनी। तेन शब्दस्य निर्विषयकत्वेऽपि न क्षतिः॥ इत्यादि॥

End. ननु श्रुतपदेभ्य एव तात्पर्य्यग्रहात् पूर्व्वं कर्म्मत्वादौ घटादिस्मरणानुभवः स्यादित्यत आह। पदानीति सम्भूय तात्पर्य्यग्रहेण समं मिलित्वैव तथाचान्योन्याश्रय इति भावः। इदमुपलक्षणम्। विशिष्य तत्परत्वग्रहस्य हेतुत्वे शब्दमात्रस्यानुवादकतापत्तेरित्यपि बोध्यम्। अतएवेति एतादृशतात्पर्य्यग्रहस्य शाब्दधीहेतुत्वादेवेत्यर्थः। न तु प्रकरणादिज्ञानस्य हेतुत्वादिति। विनिगमनेति। शक्तिजन्योपस्थित्यादेरितरसकलकारणस्याविशिष्टत्वेऽपि कदाचिदेकमर्थमादायैवान्वयबोध इत्यर्थः। तदनुपपत्तिरेवेति अतएवेत्यनुषज्यते एवकारोऽप्यर्थे। तात्पर्य्यानुपपत्तिरपीत्यर्थः लक्षणाबीजमिति शेषः (?) प्रवेशयेत्यादौ शक्त्या वाक्यार्थस्मरणस्य वाक्यार्थयोग्यतादिज्ञानस्य सत्त्वेऽपि लक्ष्यार्थस्यैवान्वयबोध इत्यत्र नियामिका इत्यर्थः। तदानीं शक्त्याऽन्वयबोधाभावे नियामिका इति तु फलितार्थः। तथाच न तादृशसिद्धान्तव्याघात इति भावः। तदभावादिति अतएवानुषज्यते पचति पद इति प्रयुक्त इति शेषः। स्मृतेति अन्योन्य......... स्मृतेत्यर्थ शब्दस्य लोकवेदनाधारणशब्दस्य प्रमाणान्तरत्वमित्यनुमानादिभिन्नत्वेन न दृष्टेतराद्विसार्थानुभवजनकत्वमित्यर्थः॥

विषय। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणमित्यादिचतुर्विधप्रमाणं नैयायिकसम्मतम्। वैशेषिकनये प्रत्यक्षानुमानमेव प्रमाणं शब्दोपमानानामनुमानगतार्थत्वादिति मतं दूषयितुं शब्दस्य पृथक्प्रमाणत्वं व्यवस्थापयति शब्दाप्रामाण्यग्रन्थेनेति संक्षेपः॥

---

**No. 358.** शाक्तामोदः. By भास्करदविड़ाचार्य्यः. Substance, country-made paper, 19×5 inches. Folia, 13. Lines, 10 on a page. Extent, 471 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Vikramapura Mājhapāḍa, Bābu Rasavihāri Rāya. Appearance, new. Prose and verse. Incorrect.

**Beginning.**

ॐ नमो गणेशाय ।

जयत्यापीनाङ्गे करिकरभकुम्भस्तनयुगे
मदव्याकाक्ष्मीङ्गतघनघनाक्ष्मीं करवरे ।
प्रमोदाधाम्नी दधति वरमपाशाङ्कुशधनुः
परिक्षीणा मध्ये वसतु मम चेतस्य परे ॥
योनिध्येयममोघपत्रशिजगद्वर्गं परामोददं
कृतानां दयया गुरोर्हृदि सदा भानूपमं मोचदम् ।
नत्वा मङ्गलनामको द्विजकुलः शिवैः परैकायनः
पृथ्वीं सन्तनुते चरस्य वचनान्याहृत्य तन्त्रादिकम् ॥
ज्ञानपानरते मह्यं यदुक्तं पञ्चयामले ।
शिवोक्तञ्च तथा तन्त्रं यामलाद्यौ विशेषतः ।
साधनं संप्रवक्ष्यामि चैतुमन्ते महोदधौ ॥
रघुवंशसमुद्भूत-श्रीरामचन्द्रसन्निधौ ।
कथितं मपथैर्यद्द्वयदामसिद्धिप्रदायकम् ॥
कामरूपे योनिपीठे शङ्करस्य पदद्वयम् ।
स्तुत्वा कामाख्या महादेवं यद्यदुक्तमनुत्तमम् ॥
यदुक्तं नागभट्टेन तथा सारसमुच्चये ।
ज्ञानानाराविकाचे च तत्त्वचिन्तामणौ यथा ॥
कल्पद्रुमे महादेव्या नीलतन्त्रे शिवेन यत् ।
दक्षिणामाक्षिणीयचचक्रयामलसम्मयम् ॥
तथा चान्यानि तन्त्राणि समालोच्य यथाविधि ।
सारात्सारतरं वक्ष्ये कल्पो सिद्धिप्रदायकम् ॥
तत्रादौ प्रथमे वक्ष्ये पूजाजपविधानकम् ।
द्वितीये तु पुरश्चर्यां यामिन्यां मूर्त्तिदर्शनम् ॥
दिव्यानाञ्च पशूनाञ्च भावभेदं तृतीयके ।
चतुर्थे देशदोषादिप्रतिबन्धनिरोधनम् ॥
काम्यानां कर्म्मणां सिद्धिश्चैव प्रभञ्जनम् ।
नायिकासाधनञ्चैव वक्ष्यामि पञ्चमे मतम् ॥

कुलार्णवे ।

बाला-काम-मनु-द्वय-देवगविय पञ्चमी :: इत्यादि ।

**End.**

अष्टा मन्त्रस्य प्रायेण चाक्रभेदेन साधनम् ।
कृता देवाः पद्माज्ञानं हरते शिवचक्षुषा ॥
षट्कर्मक्रियायोगात् तथापि मानवे क्वचित् ।
सुसिद्धं पूर्वसिद्धं जायते नात्र संशयः ॥
(अतःपरं खण्डितम् ।)

**विषयः।** शक्तिपूजाविधिः । पञ्चशुद्धिकथनम् । तत्र आत्मशुद्धिप्रकारः । स्थानप्रकारः । मन्त्रशुद्धिप्रकारः । द्रव्यशुद्धिप्रकारः । देवशुद्धिप्रकारः । पूजास्वरूपम् । जपस्वरूपञ्च । अथ मन्त्रकथनम् । तत्र वीरमन्त्रकथनम् । दीपनीमन्त्रकथनम् । मन्त्रसिद्धिकथनम् । पूजाप्रयोगः । जपादिनियमः । मन्त्रस्य जापकालादिः । ग्रामादिवर्णभेदेन सेतुकथनम् । महासेतुकथनम् । कामकलाकथनम् । मन्त्रचैतन्यकथनम् । मन्त्रध्यानकथनम् । भूतलिपिकथनम् । वीरमन्त्रादि जपध्यानञ्च । अथ मन्त्रसाधकयोरैक्यकथनम् । जीवतत्त्वकथनम् । मन्त्रशिखादिकथनञ्च । अथ पुरश्चरणविधिः । तत्र स्नानकथनम् । भक्ष्याभक्ष्यकथनम् । वर्ज्यावर्ज्यकथनम् । तत्प्रयोगकथनञ्च । (अतःखण्डितम् ।)

---

**No. 359.** शाबरतन्त्रम् . Substance, country-made paper, 10 × 4 inches. Folia, 50. Lines, 9 on a page. Extent, 984 çlokas. Character, Bengali. Date, ? Place of deposit, Ḍhākā, at the Kālimatha at Ramnā. Appearance, old. Prose and verse. Incorrect.

**Beginning.**

श्रीगणेशाय नमः ।
श्रीशङ्कर उवाच ।
आदिनाथो ह्यनादिश्च कालरूपोऽतिकालकः ।
करालो विकरालश्च महाकालश्च सप्तमः ॥
कालभैरवनाथश्च वटुकश्चाष्टमस्तथा ।
भूतनाथो वीरनाथः श्रीकण्ठो द्वादशो मतः ॥
एते कापालिकाः प्रोक्ता वीरस्तम्भीषवापकैः । (?)
शिष्याणां सर्वसंसृष्टा च ततःपरो वदामि संस्फुट ॥
नागार्जुनो जडभरतो हरिश्चन्द्रस्तृतीयकः ।
सत्यनाथो भीमनाथो गोरक्षश्चर्पटस्तथा ॥
अवधश्चैव वैराग्यः कन्थाधारी जलन्धरिः ।
मार्गप्रवर्तका ह्येते तद्वच्च मलयार्जुनः ॥
एतदुक्तं शाबराणां मन्त्राणां सिद्धिदायकम् । इत्यादि ।

**End.** भैरव मेरा कुबलकी, माई पाकी माता भैरा भारव मारे तो गुष गोरखयतीकी भाम। १।५ जप १०००० । बहोतर चाऊती बकराका करे जाम हाथाम दिन ११ मम् चढावे जब् बकराको कलेजो मदमन्त्र पढी जावे धरी धारी चीर पावे जाप करे ॥

**Colophon.** इति श्रीशावरतन्त्रं सम्पूर्णम् ।

विषयः । शाबरसिद्धिविधिः । मध क्वचित् क्वचित् हिन्दीभाषया मन्त्रादिश्च । अथ सर्वविपन्निवारसिद्धवशिमन्त्रादिः । योगिनीमन्त्रः । क्षेत्रपालमन्त्रः । गणेशमन्त्रः । कालीमन्त्रः । बगलामन्त्रः । भैरवीमन्त्रः । त्रिपुरासुन्दरीमन्त्रः । वेहकीमन्त्रः । मातङ्गीमन्त्रश्च । अथ डाकिनीशाकिनी-भूत-सर्पादिभयनाशनमन्त्रः । उचाटनवशीकरणस्तम्भनादिमन्त्रः प्रयोगविधिश्च ।

---

**No. 360.** शिवताण्डवटीका. Substance, country-made paper. Folia, 60. Lines, 9 on a page. Extent 1,100 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares Govardhanasarāi, Paṇḍita Vindhyeçvariprasāda Dube. Appearance, old. Correct.

**Beginning.** ॐ गणेशाय नमः । श्रीदक्षिणामूर्तये नमः ।

श्रीदक्षिणामूर्तिगुरुं प्रणम्य
मदीरित-श्रीशिवताण्डवाख्यम् ।
तन्त्रावलीमङ्गमपि पुनस्तां
व्याकुर्महे सज्जनरञ्जनाय ॥
पूर्वं मया विहितोऽङ्कः तन्त्रव्याख्या
कष्टैः सा पिहितानितमोषात् ।
अतः पुनः श्रीमदनूपभूप-
नियोगतः व्यामपरां करोमि ॥
कः पुनरनूपभूप इत्याकाङ्क्षायां तद्वंशावलीमाह ।
येनार्थं प्राप्यमार्के (?) चपति मचलीं अङ्गलं नन्दनं
यः संगतकीपदमयत्यमभूत् पर्विका नैर माज्ञी । (?)
शूरः श्रीमान् वदान्यः प्रमदमपहितो नीतिशिक्षागुरूणां
आद्यः सो भूपतिकीर्त्या जगति विजयते रायकल्याणमलः ॥
कल्याणमल्ल विक्रमनगरे राजा श्रीरायसिंहाख्यः
यस्मिन्वदति गतोषान् नलगणपतिभावं गतो विश्वोषोऽपि । इत्यादि ।

---

**No. 361.** शिवरहस्यखण्डः (स्कन्दपुराणीयः) (द्वितीयांशः) Substance, country-made paper, 12 × 5 inches. Folia, 60. Lines, 10 on a page. Extent, 1,950 çlokas. Character, Nāgara. Date, ? Place of deposit, District Vākuḍā Kucekol, Bābu Yogīndranātha Siṁha Deva. Appearance, tolerable. Verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः । श्रीमद्विश्वमूर्त्तिशिवाय नमः ।
भानुजानन्तपाथोजविकाशनदिवाकरम् ।
विघ्नाद्रिकुलिशं श्रीमदेकदन्तं नमाम्यहम् ॥
सूत उवाच ।
पुनः प्रणम्य मुनयो नैमीषस्था महामुनिः ।
स भक्त्या तारकारातिं पुराणोः कथाः शुभाः ॥
पप्रच्छ विनयोपेतस्तुष्टोऽतनयमन्मयः ।
स्कन्दाननमानसोत्फुल्लप्रहृष्टवदनाम्बुजः ॥
धृतचिपुण्ड्रभूत्यैव सर्वाङ्गधवलाम्बरः ।
चन्द्रामलककोटीरः प्रणवार्थे रतस्सदा ॥
गणेषु देवसंघेषु मुनिव्रातेषु सत्तमाः ।
पद्मास्यहृदयानन्दः षडास्यं प्रेक्ष्य भक्तिमान् ॥
प्राह स्मरारिमाहात्म्य ध्यानपूतहृदन्तरः । इत्यादि ।

**End.** देवैश्च वेदविधिना पुरुषोत्तमेन
स्कन्देन गौरीगणेन येन च पूज्यमाना ॥ ० ॥
अतःपरं खण्डितम् ।

विषयः । प्रथमाध्याये,—स्कन्दवाक्यम् । २ अध्याये,—देवीतपोवर्णनम् । ३ । ४ अध्यायाययोः,—अम्बिकेश्वरपूजनादिः । ५ अध्याये,—अम्बिकेशप्रादुर्भावादिः । ६ ष्ठाध्याये,—शिवगौरीसंवादादिः । ७ । ८ अध्याययोः,—देवस्तवादिः । ९ । १० अध्याययोः,—शिवागमनादिः । ११ । १२ अध्याययोः,—रत्नद्वीपवर्णनादिः । १३ । १४ अध्याययोः,—श्रीचक्रसौधवर्णनम् । १५ अध्याये,—चिन्तामणिसौधवर्णनम् । १६ । १७ अध्याययोः,—श्रीचक्रवर्णनादिः । १८ । १९ अध्याययोः,—हिमाचलेश्वरसमागमः । २० । २१ अध्याययोः,—देवीविचारादिः । २२ । २३ अध्याययोः,—कैलासदर्शनादिः । २४ । २५ अध्याययोः,—शिवरहस्यवाक्यादिः । २६ । २७ अध्याययोः,—दुर्व्वासश्शापचर्य्यादिश्च । अतःपरं खण्डितम् ।

---

**No. 362.** शिवार्चनमहारत्नम्. By गौड़शङ्कराचार्य्यः. Substance, country-made paper, 14 × 2⅝ inches. Folia, 3. Lines, 7 on a page. Extent, 63 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Mādhavapura, Paṇḍita Gaṅgādhara Tarkasiddhānta. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमः शिवाय ।
संसारार्णवमग्नानां समुद्धरणहेतवे ।
शिवार्चनमहारत्नं शङ्करेण वितन्यते ॥
व्यापारान् सकलांस्त्यक्त्वा पूजयध्वं सदाशिवम् ।
निकटा इव दृश्यन्ते × × × नगरद्रुमाः ॥ इत्यादि ।

**End.** भूतशुद्धिं लिपिन्यासं विना चेत् साधनञ्चरेत् ।
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥

**Colophon.** इति गौड़भूमिनिवासि श्रीशङ्कराचार्य्यविरचिते शिवार्चनमहारत्ने प्रथमः प्रकाशः ॥ ० ॥

**विषयः ।** शिवपूजाकालाकालाधारन्यासादिनिरूपणमुखेन पूजाविधिः ।

---

**No. 363.** शिशुपालवधटीका (नवमसर्गस्य कियदंशपर्य्यन्ता) By वल्लभदेवः. Substance, country-made paper, 13 × 3 inches. Folia, 148. Lines, 7 on a page. Extent, 3,431 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Parganā Sonārgā̃, Post Office Vaidyervāzār, grāma Sātbheyepāḍā, Paṇḍita Tārākānta Vācaspati. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो विनायकाय । श्रियः पतिरित्यादि । श्रियो लक्ष्म्याः पतिः स्वामी हरिर्नारायणः जगच्छासितुं आज्ञां कारयितुं वसुदेवसद्मनि वसुदेवगृहे वसन् हिरण्यगर्भाङ्गभुवं ब्रह्मपुत्रं मुनिं नारदाख्यं ददर्श दृष्टवान् । मुनिं कीदृशं अम्बरादाकाशादवतरन्तं अधः पतन्तम् । हरिः कीदृशः जगतां निवासो यत्र स जगन्निवासः । वसुदेवसद्मनि कीदृशे श्रीमति मर्त्त्यलोके । श्रियः पतिरित्यन्यहरिव्यवच्छेदार्थं कृतं मङ्गलार्थं वा । वसन् ददर्शेति धातुसम्बन्धे प्रत्यया इति साधु ......... अम्बरादवतरन्तं अम्बरमाश्रित्याधःपतन्तं ल्यब्लोपे पञ्चमी वक्तव्या । अन्यथा आकाशस्यानवधित्वात् ध्रुवमपायेऽपादानमिति पञ्चम्येव न स्यात् । अङ्गभूशब्दस्यात्र रूढिवशात् मानसेऽपि पुत्रे

वर्त्तते । भुवः संज्ञान्तरयोरिति क्विप् । केचित्तु श्लोके पद्यान्तरमाहुः । वसन्ति वरुणालये समुद्रे । वसुदे धनदे । वसन् हरिर्मुनिं ददर्श हरिः कीदृशः श्रीमतिशासितुञ्जगत् । श्रीश्च मतिश्च ताभ्यां शासितुं शीलं येषां ते श्रीमतिशासिनः तान् तुञ्जन्ति हिंसन्ति ते श्रीमतिशासितुञ्जा दानवाः तान् गच्छन्ति श्रीमतिशासितुञ्जगत् क्विपि रूपम् । श्रयन्ति तामिति श्रीः ... ... इत्यादिना क्विपि दीर्घश्च पातीति पतिः ... ... त्यौणादिकः ॥ अतः सर्व्व-व्यापकत्वात् ........ तथाहि तत्र नारदागमनेन ........ कार्य्यचिन्ता-मन्त्रादिसूचनं वसुदेवसद्मनि वसन्निति ... ... ... ... ... ... युधिष्ठिर-प्रीतये जगामेति भाविकार्य्यार्थसूचनम् । श्रियः पतिरिति ... ... ... ... ... ... ... ... एवञ्च ध्वननद्वारा चतुर्थसर्गमारभ्य द्वादशसर्गपर्य्यन्त-मुद्दीपन.........स्कन्धावारसन्निवेश वसन्तादिवर्णन-वनविहार जलक्रीड़ा तत्तदवसरे तत्तदुक्तिप्रकार-मधुपान-सुरतोत्कर्षः सूचितः । अतः सर्व्व-व्यापकता ... ... वस्तुनिर्द्देशः ॥ इत्यादि ॥

End. अथ । सुतनोरभिसारिकायाः दयितोपगमे प्राणनाथाभिसरणे सान्द्रतम-मतिनिबिड़ं सन्तमसं गाढान्धकारः भयाय त्रासाय नाभवत् । तनौ शरीरे ... शुक्ला या रोमराजिस्तस्याः यथा वेपथवे कम्पाय नाभवत् । कथन्तर्हि नाभवदित्याह कार्य्यगुरुतां प्रयोजनगौरवं प्रियोपकण्ठप्राप्तिलक्षणमवधार्य्य-निश्चित्य ... ... ... ... ... ... ... ... ... तेन कार्य्यगुरुतामवधार्य्य-चलितया इत्यध्याहार्य्यं तत् समानकर्त्तृकता भवतीति सन्तमसमिति अव-समन्धेभ्यस्तमस इति तमसोऽच्समासान्तः ॥ स प्रचलत्तारासमूहः तमोभि-स्ततां व्याप्तां तमीं रात्रिमधिगम्य प्राप्य द्युतिमपचौत् कान्तिमाददे । स च इत्याह । यः अन्यत्रापि दिवसेऽपि आदित्यतेजसा हेतुना न दृश्यो न दृष्टः यो दिवसेऽपि न दृश्यते स कथं रात्रौ दृश्यत इत्याह । लघवः प्राकृताः मलिनाशयतः कलुषाधारात् प्रकटीभवन्ति व्यक्ता जायन्ते । अल्पप्रमाणत्वात् लघुपञ्चमयः । तमःशून्यत्वात् रात्रिर्मलिना । रजनी यामिनी तमीत्यमरः । अनु । तेन समयेन प्रदोषाख्येन अबला नार्य्यः ॥ (इतः परं खण्डितम्)

विषयः । माघकविकृतस्य शिशुपालवधकाव्यस्य व्याख्यानम् । खण्डितत्वाच्च ग्रन्थे ग्रन्थस्य ग्रन्थकर्त्तुर्वा नामनिर्द्देशोऽस्ति केवलं सर्गशेषेष्वस्ति वल्लभसारटीकेति नाम ॥

---

**No. 364.** शिशुपालवधटीका (शिशुबोधिनी) By महेशशर्म्मा. Substance, country-made paper, 19×3 inches. Folia, 80. Lines, 8 on a page. Extent, 2,560 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍa Viṣṇupura, Kārtika Candra Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

यत्पादपातनवनः प्रणमं जडोऽपि
वाचस्पतिं सपदि मूकयितुं समर्थः ।
तद्गौरवं चरणमम्बरमादरेण
वाक्कायमानसभवैः प्रणमामि भावैः ॥
कृष्णाख्यं प्रणमामि धाम द्विविधमन्दारमाला मक-
रन्दाढ्यकमकरन्दद्वन्द्वशिशिरश्रीपादपीठात्मकम् ।
यत्पादाम्बुजसुधामेव जगतां हरिहितमिमापदः
कष्टं ते नु सुरा विभूतिरतुला प्रख्यातुतमञ्जकाः ॥
यद्यपि बहवो ग्रन्थाः सन्ति महान्तो निगूढभावार्थाः ।
तदपि च शिष्यहितैषी कुरुते टीकां स्फुटां द्विजः कश्चित् ॥
वस्तुनिर्देशप्रारम्भकं महाकाव्यलक्षणं सम्पादयन् प्रतिसर्गान्तश्लोके चिह्नतया
श्रीशब्दं प्रयुञ्जानः शिशुपालवधवचेदमवक्त्रीकृष्णोत्तमनायं भगवत्पाक-
शासनप्रेरितस्य देवर्षेर्नारदस्य दर्शनं प्रथमतो ग्रन्थकृत् प्रक्रमते । श्रियः ।
इत्यादि ।

**End.** उपात्तमभावः । ननु के श्रीकृष्ण त्वं धरस्य पर्व्वतस्य उद्धर्त्ता श्रीगोवर्द्धनो
भवता उद्धृत इति सर्व्वत्र जगति भुवने प्रतीतः ख्यातोऽसि तत्तदा अतिभरं
मां किं अधः प्रापयितुः पातालं प्रापयितुमिच्छुः । किं प्रश्ने । यो धरस्योद्धर्त्ता
स कथं धरमधः प्रापयतीति प्रश्नार्थः ॥ शिखरिणीछन्दः ॥ ० ॥

**Colophon.** इति श्रीमहेशशर्म्मकृतायां शिशुबोधिन्यां माघटीकायां पञ्चमसर्गः ॥ * ॥

(अतःपरं खण्डितम् ॥)

**विषयः।** माघकविकृतस्य शिशुपालवधकाव्यस्य व्याख्यानं पञ्चमसर्गपर्य्यन्तम् ॥

---

**No. 365.** शिशुलोचनम्. By मुकुन्दरामदेवशर्म्मः. Substance, country-made paper, 16×3½ inches. Folia, 93. Lines, 5 on a page. Extent, 1,220 çlokas. Character, Bengali. Date, Sk. 1792. Place of deposit, District Mayamanasiṁha, Āsujiyā, Ānandakiçora Rāya. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

नत्वा भक्तविशेषमिष्टफलदं कृष्णाङ्घ्रिपङ्केरुहं
इन्द्राद्यामरवर्गयुष्टमनिशं निःशेषविघ्नापहम् ।
स्पष्टार्थं शिशुलोचनं सुकमलं वारादिभिर्निर्ण्णयं
विद्यानन्दकुलोद्भवो वितनुते श्रीमन्मुकुन्दः स्वयम् ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ।
एतेषां नामतो वाराः सप्तैते कथिताः क्रमात् ॥ इत्यादि ।

**End.** मृत्युकाले जपेत् कृष्णं रामं नारायणं हरिम् ।
अभिषेकश्च जाह्नव्यास्तोये कुर्य्यान्मनोरमम् ॥
शालग्रामशिलायां यद्वा चो भार्य्यवे तुलसीदलम् ।
भवपाशविमुक्तस्तु याति विष्णोः परं पदम् ॥

**Colophon.** इति श्रीमुकुन्दरामदेवशर्म्मविरचिते शिशुलोचनाख्ये भूलक्षणादिनिर्ण्णयो नाम अष्टमोऽध्यायः ॥ शकाब्दाः १७९२ ।

**विषयः ।** वारकथनम् । वारशुभाशुभकथनम् । वारगुणकथनम् । राशिस्वरूपनिरूपणम् । पृष्ठोदयादिः । संक्रान्तिनिर्ण्णयः । गुरुविरुद्धादिनिर्ण्णयः । ग्रहमफलनिरूपणम् । युग्मादिविचारः मुहूर्त्तकथनम् । सर्व्वौषधि-महौषध्यादिः । वारवेला-कालवेलादिः । कालशुद्धिः । भूकम्प-दिग्दाहादिजन्याकालनिरूपणम् । कन्याकरादिलक्षणम् । मासनिर्ण्णयः । सुतहिबुकगोधूलि-योगादिः । नववध्वागमनगर्भाधानादिसमयनिरूपणम् । सरोवरादिलक्षणम् । धान्यादिमूल्य-ज्ञानम् । वास्तुभूम्यादिलक्षणम् । मुमुर्षुकालौषधसेवनादिविधिश्च ।

---

**No. 366.** शुद्धिकारिकाली . By मोहनचन्द्रवन्द्योपाध्यायः. Substance, country-made paper, 14 × 3¼ inches. Folia, 20. Lines, 5 on a page. Extent, 262 çlokas. Character, Bengali. Date, Sana 1277. Place of deposit, District Ḍhākā, Parganā Sonārgā, Post Office Vaidyerbāzā. grāma, Sātbheyepaḍā, Paṇḍita Nīlakamala Smṛtibhūṣaṇa. Appearance, new. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा गुरुं विबुधवृन्दमतं विलोक्य
संक्षेपतो जयपुरस्थितिरेव यत्नात् ।
सश्रीसुवन्द्यजनिमोहनदेवशर्म्मा
शुद्धेस्तनोति अनरञ्जनकारिकालीम् ॥

अथ सपिण्डादिनिर्णयः ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥
दशमं पुरुषं यावत् साकुल्यन्तु प्रकीर्त्तितम् ।
चतुर्दशं भवेद् यावत् समानोदकमुच्यते ॥

अदत्तकन्यायास्तु ॥

प्रपितामहपर्य्यन्तं सापिण्ड्यन्तु त्रिपौरुषम् ।
तेषां सन्ततयो याश्च याश्च त्यक्ता चयः स्त्रियः ॥

तथाच शुद्धिरत्नाकरे ॥

अप्रत्तानां तथा स्त्रीणां सापिण्ड्यन्तु त्रिपौरुषम् ।
विवाह जीवितं तासां शाम्य पौचे प्रदर्शनात् ॥
अनिवद्दत्तायाः सापिण्ड्यस्येति शेषः । अन्यच्च ।
अनिवद्दत्तायास्तु शाम्य पौचात् चिरात्रकम् ॥
पौचादित्यस्य परमिति शेषः ॥
आत्मापेक्ष्य पञ्चमे च तद्दृष्टप्रपितामहे ।
निवर्त्तेत च सापिण्ड्यं कन्यायाः शास्त्रयुक्तितः ॥
पञ्चमादित्रिपुरुषं यावत् साकुल्यमुच्यते ।
दशमं पुरुषं यावत् तावत् केषाञ्च सन्ततम् ॥

दत्तकन्यायास्तु ।

दत्ता या कन्यका स्यात्तु भर्त्तृसापिण्ड्यगोत्रभाक् ।
पितृसापिण्ड्यगोत्राच्च निवर्त्तेत च शास्त्रतः ॥

अथाशौचकालनिर्णयः ।

शुद्ध्येत् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥
साकुल्ये सर्व्वजातीनां त्र्यहाशौचं भवेद् ध्रुवम् ।
स्यात् समानोदके तेषां पक्षिणी मुनिवाक्यतः ॥
नामगोत्रस्मृतौ पञ्चाशेषा ... ... ... मुच्यते ॥ इत्यादि ॥

**End.** अथ स्त्रियाः श्राद्धाधिकारे क्रमः ।

ज्येष्ठः पुत्रः कनिष्ठश्च पौत्रः प्रपौत्र एव च ॥
अदत्ता ... ... ... दत्ता दौहित्र एव च ।

पत्नी च पुत्रकश्चैव पतिः पुत्रवधूस्तथा ।
देवरश्च तथा स्वामी भ्रातृपुत्रास्ततः परम् ॥
श्वशुरादिसपिण्डाश्च समानोदकगोत्रजाः ।
पिता कनिष्ठभ्राता च ज्येष्ठश्चैव सहोदरः ॥
भगिनीपुत्रकश्चैव स्याद्भर्तुर्भगिनीसुतः ।
भ्रातृपुत्रश्च जामाता भर्तुर्मातुल एव च ॥
भर्तुः शिष्याः पितृवंश्या मातृवंश्यास्तथैव च ।
चाद्यमासादिकं कुर्य्यात् निर्दिष्टाश्च क्रमादिमे ॥
ज्येष्ठा यद्यवीरा कन्या कनिष्ठा च सपुत्रिका ।
तदा कनिष्ठया कार्य्या क्रिया प्रेतस्य सर्व्वदा ॥
अवीरा चैव वन्ध्यापि श्राद्धाधिकारिणी भवेत् ।
कनिष्ठा चेत् सपुत्रापि ज्येष्ठावीरा चरेत् क्रियाम् ॥

अथानधिकारिणः ।

न स्यातां क्लीवपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥
सर्व्वथा भागशून्या ये ते न स्युरधिकारिणः ।
एवं नानाविधाः सन्ति श्राद्धे चानधिकारिणः ॥

**Colophon.** इति वन्द्यघटीय-श्रीभीमचन्द्रविद्यावाचस्पतिविरचिता शुद्धिकारिकाख्या समाप्ता ॥

**विषयः ।** सपिण्डादिनिर्णयः । साकुल्यनिर्णयः । ब्राह्मणादिवर्णभेदेनाशौचकालनिर्णयः । रजस्वलाशौचनिर्णयः । गर्भस्रावाशौचनिर्णयः । जाते बालके ब्राह्मणादिवर्णभेदेन प्रसूतीनामशौचकालनिर्णयः । अनधिगतचूडोपनयने मृते बालके पित्रादीनामशौचकालनिर्णयः । कृतचूडोपनयनबालकमरणे सपिण्डसकुल्यानामशौचकालनिर्णयः । कन्यामरणे पित्रादीनां सद्यः शौचकथनम् । वाग्दत्तायाः कन्याया मरणे पित्रादीनामशौचकालनिर्णयः । दत्ताया मरणे भर्तृतत्सपिण्डादीनामेवाशौचं न पित्रादीनामिति कथनम् । षण्ढाशौचनिर्णयः । गुर्वादिनिमित्तकेषु व्रतिविशेषेषु अशौचकालनिर्णयः । असपिण्डाशौचनिर्णयः । पर्णनरदाहाशौचनिर्णयः । ब्राह्मणादिवर्णभेदेनाशुद्धीनामस्पृश्यत्वकथनम् । आचारलक्षणनिर्णयः । अशौचस्य गुरुलघुत्वनिर्णयः । अघटितमरणाशौचनिर्णयः । अशौचसङ्करनिरूपणम् । पतितादीनां मरणजनने अशौचाभावनिर्णयः । पातकिनिर्णयः । महापापिप्रायश्चित्तनिर्णयः । अशौचमध्येऽपि जातकर्मादिकर्मकरणनिरूपणम् । पूरकपिण्डदानादिविधिः । प्रेतश्राद्धविशेषकथनम् । तर्पणविधानम् । श्राद्धकृत्याधिकारिनिर्णयः । श्राद्धकृत्यानधिकारिनिर्णयश्च ॥



---

**No. 367. शुद्धिकौमुदी. By गोविन्दानन्दकविकङ्कणाचार्य्यः.** Substance, country-made paper, 18×3 inches. Folia, 9. Lines, 8 on a page. Extent, 441 çlokas. Character, Bengali. Date, Sk 1735. Place of deposit, District Vâkudâ Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, fresh, Prose and verse. Generally correct.

**Beginning.** श्रीरामः शरणम् ।

आनन्दं प्रणमन्नवेन्द्रमुकुटप्रोतेन्द्रनीलामल-
मेघौलीकृतपादपीठां चरणायस्थावनम् ।
अप्रोद्भूतभवोत्तमाङ्गर इन्दीवरभूतमङ्गलवत्
श्रीगोविन्दपदाम्बुजं वेतनुताचर्चिं परामात्मरीम् ॥
आद्योन्याचिनसंप्रदानविकलं दृष्ट्वा पुराणान्यपि
प्रोक्ताः सम्यगथो विविच्य मुनिभिर्मन्वादिभिः संचिताः ।
श्रीमत्तातपदारविन्दविलसद्भूलीभवोद्देशतः
श्रीगोविन्दकविः करोति गहनां शुद्धेरिमां कौमुदीम् ॥
अथ शुद्धिस्वरूपं लिख्यते । तत्र वेदबोधितकर्म्मार्हता शुद्धिः । अर्हता तत्तद्विधिबोधितः यत्कर्म्मसम्पादनाय येषां पावकाखादीनां यादृशं विधिबोधितत्वं तत्र ...ेव तेषां सैव शुद्धिरित्यर्थः ॥ इत्यादि ।

**End.** अथवा काचि ...व्यभिचारिण्यले सर्व्वैव सकलमुनिभिः प्रायश्चित्तोपदेशात् यथाविधिकृत ...श्चित्ताया अपि रजोयोगानन्तरमेव शुद्धिनियमविधायकं रजसा स्त्री ...शुद्ध्येति मनुवचनन्तु मनोद्दोषे तन्मात्रशुद्ध्यर्थमिति ध्येयम् ।
मनुः । अ... ा शुद्ध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः ।
...प्रच्छन्नपापा जप्येन नदी वेगेन शुद्ध्यति ॥
मरीचिः । येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः ।
तत्र तं नावमन्येत धर्म्मस्तत्रैव तादृशः ॥ ० ॥
गणपतिभट्टतनुजो गोविन्दानन्दकविकङ्कणः श्रीमान् ।
समतनुत समोधार्थं सुधियां श्रीशुद्धिकौमुदीमेताम् ॥
सर्व्वान्तर्य्यामिने तस्मै गोविन्दाय नमो नमः ।
...यथानुरागं योऽस्मिन् यत्नपाभिर्विपश्चितः ॥ ० ॥

**Colophon.** इति गोविन्दानन्दकविकङ्कणाचार्य्यकृता शुद्धिकौमुदी समाप्ता ॥ * ॥
श्रीरामः शरणम् । शकाब्दाः १७३५ ।

**विषयः ।** शुद्धिलक्षणनिरूपणम् । अशौचकालादिनिरूपणम् । जननाशौचनिरूपणम् । अशौचे एकोद्दिष्टविचारादिः । बालाशौचनिरूपणम् । रजस्वलाशौचनिरूपणम् । सपिण्डाद्यशौचनिरूपणप्रसङ्गेन सपिण्डविचारादिः । अशौचिनामन्नभक्षणविचारादिः । मृत्युविशेषाशौचनिरूपणम् । सहमरणानुमरणादिः । मुमुर्षुकर्त्तव्यादिः । वैतरणीधेनुदानविधिः । पर्ययमरणादिविधिः । अस्थिसञ्चयनविध्यादिः । दशाहकृत्यादिविधिः एकोद्दिष्टविधानादिश्च ।

---

**No. 368.** शुद्धितत्त्वव्याख्या . By गुरुप्रसादन्यायभूषणः . Substance, country-made paper, 15×3 inches. Folia, 16. Lines, 8 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Viṣṇupura, Paṇḍita Raghurāma Tarkaratna. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीरामः शरणम् ।

सहानुगमनमिति सहानुशब्दावममनयो सहगमनमनुगमनञ्चेत्यर्थः । अनुशब्दः पश्चादर्थः भर्त्तेति भर्त्तुरिति च पूरणीयम् । तेन भर्त्तृसहगमनं तदनुगमनञ्च लभ्यते । गमनपदं परलोकगमनपरम् । तेन मरणमित्यर्थः । सहशब्दार्थः समभिव्याहृतगमनक्रियाकालः । इत्यादि ।

**End.** मरणं यदि तुल्यं स्यादिति तुल्यं अभिन्नदिनजाततया दशरात्रव्यापितया च समानमिति वक्ष्यते । किन्तु मत्वाशुचनिपात इति इदमुपलक्षणं मत्वाशुचनिपाताशौचान्तिमदिने तुल्यसपिण्डमरणद्वये दिनद्वयवृद्धिरिति मन्तव्यमिति गोस्वामी । अतएव मरणाशौचस्य दीर्घकालीनजननाशौचमपेक्ष्य गुरुत्वाभावादेव । एतेन मरणाशौचस्य दीर्घकालीनजननाशौचापेक्षया गुरुत्वाभावेन ।

**Colophon.** इति महामहोपाध्यायगुरुप्रसादन्यायभूषणभट्टाचार्य्यविरचिता शुद्धितत्त्वीयकतिचिद्व्याख्या समाप्ता ॥ ० ॥ ॐ रामः शरणम् ।

**विषयः ।** रघुनन्दनभट्टाचार्य्यकृतस्य शुद्धितत्त्वाख्यस्मृतिशास्त्रीयग्रन्थस्य कठिनांशव्याख्यानम् ।

---

**No. 369.** शुद्धिदीपिकावृत्तिः . By मथुरानाथचक्रवर्त्ती . Substance, country-made paper, 18×5 inches. Folia, 86. Lines, 8 on a page. Extent, 3,053 çlokas. Character, Bengali. Date, ? Place of deposit, Usṭhi, District Mayamanasiṁha, Paṇḍita Kālicandra Nyāyālaṇkāra. Appearance, new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य सम्यग्ज्ञानतमःक्षीणापदं सदः ।
क्रियते दीपिकाटत्तिर्मथुरानाथशर्म्मणा ॥
यथैव वक्ष्यमाणग्रन्थे कालस्य शुद्धिः प्रतिपाद्या कालश्चाचोरणादिः स च
सूर्य्याधीन एवेति ॥ इत्यादि ।

**End.** अथ यदि लग्नस्य प्रथमद्रेक्काणे जन्म तदा षष्ठाष्टमराशेरपि प्रथमद्रेक्काणः
द्वितीये द्वितीयः तृतीये तृतीयः द्रेक्काणो ग्राह्य इति । अथ ग्रन्थस्य
प्रामाण्यप्रयोजनाभिधानपूर्व्वकं परीक्षारमाह सुविचार इति । समाहृतं न
तु स्वयं कृतमित्यर्थः ।
मया मुनीनां वचनानि दृष्ट्वा
निबन्धविद्याम्नवचो विचार्य्य ।
निरस्य चान्यस्य विवचनादान्
संक्षिप्य टत्तिर्विरोधे (?) सुबोधा ॥

**Colophon.** इति मथुरानाथशर्म्मविरचित-दीपिकाटत्ताबष्टमाध्यायविवरणं समाप्तम् ॥*॥

**विषयः ।** शुद्धिदीपिकाख्यज्योतिःशास्त्रीयग्रन्थस्य व्याख्यानम् ।

---

**No. 370.** शुद्धिसारः. By श्रीकण्ठशर्म्मा. Substance, country-made paper, 16 × 3 inches. Folia, 21. Lines, 7 on a page. Extent, 750 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Sākoyāi grāma, Paṇḍita Vrajakānta Smṛtipañcānana. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा मधुपदद्वन्द्वं श्रीश्रीकण्ठेन शर्म्मणा ।
सुखबालजपाठार्थं शुद्धिसारः प्रतन्यते ॥
अथ गर्भस्रावाशौचम् । लौकिककर्म्मणि स्त्रीणामेव तृतीयमासात् षण्मास-
पर्य्यन्तं मासतुल्यसंख्यकदिनमशौचम् । इत्यादि ।

**End.** माध्यवी चपिया चैत्रा प्रहूता इत्यभिर्दिनैः ।
मतैः शुद्धा तु संशुद्धा यथोक्तभिरेव च ॥
चान्यत् भाव्यं सुधीभिरिति ॥

**Colophon.** इति शुद्धिसारः समाप्तः ॥

विषयः । मलमासजननमरणाशौचनिरूपणम् ॥

---

**No. 371.** शुद्धाह्निकाचारसारः. By वासुदेवशर्म्मा. Substance, country-made paper, 18×3 inches. Folia, 67. Lines. 6 on a page. Extent, 750 çlokas. Character, Bengali. Place of deposit, District Ḍhākā, Post Office Sonārgã, Baidyerbāzār grāma, Paṇḍita Kālikumāra Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ दुर्गायै नमः ।

पीयूषलब्धिपरिपन्थिविषज्वालाजालं यो
निःशेषयन्नपि निजस्मरभिन्नमूलानः ।
येनादिदत् पुरवरं भुवनं जये च
तं पार्व्वतीपरिवृढं प्रणमामि शम्भुम् ॥
आसीत् सर्व्वगुणाकरो गुणिगणाम्भोजोदये भास्करो
......... विपक्षकैरवकुलं सम्मोचने दक्षकः ।
कीर्त्त्युल्लासितभूमिपालतिलको दीनद्विजाकाङ्क्षिते
चिन्तारत्नमयो नराधिपवरः श्रीरुद्रनारायणेश्वरः ॥
आतासीद् यस्य राज्ञः कलिकलुष ......
जनक इव सुधी ......... शास्त्रेष्वभिज्ञः ।
भिक्षाप्रायो वदान्यः शिविरिव त्रिदशानामायतो रामतुल्यः
... मन्त्रप्रतापो विजय इव वरः श्रीयुतो वासुदेवः ॥
यच्छत्रुरिष्यन् समुपैरिदं कुलं ... ... आचरन्नीतिमार्गः ।
प्रतापतप्तारिगणः ... ... ... ततोऽजनि श्रीरघुदेवभूपतिः ॥
सोऽयं भूपालचूडामणिनिकरकराश्लीढपादारविन्दो
महाराजाधिपृथ्वीन्द्रपुरन्दरपतिर्गौड़राजाधिराजः ।
तस्यैवाज्ञामवाप्य ......... यादवेन्द्र
विप्रोऽनुमान्य विप्रं विरचयति नवं शुद्धाह्निकाचारसारम् ॥
अथ न्यायतो वर्णानामां नित्यनैमित्तिकानुष्ठानवतां शूद्राणां हितकल्पा-
नुच्यते । यद्यपि
विप्राणां वेदविदुषां धर्म्मज्ञानां यशस्विनाम् ।

शुश्रूषैव हि शूद्रस्य धर्म्मो निःश्रेयसः परः ।
विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलमिति ॥
मनुवचनाभ्यां शूद्राणां द्विजसेवातिरिक्तकर्म्मणि नाधिकारप्रसक्तिरिति ।
तथापि
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजं जयति वै लोकान् शूद्रो धन्यतरस्ततः ॥
वर्णत्रयस्य शुश्रूषां शुचिः शूद्रः करोति यः ।
स्वधर्म्मस्य इति ज्ञात्वा तस्य स्वाध्यायं वदिम् ॥
भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत् ॥ इत्यादि ॥

End. अथ स्त्रीधर्म्मः । स्कन्दपुराणे । लोपामुद्रामुद्दिश्यागस्त्यवाक्यम् ।
सेवते भर्त्तुरुच्छिष्टं इष्टमन्नफलादिकम् ।
महाप्रसाद इत्युक्त्वा प्रतिदत्तं प्रतीच्छति ॥
अविभज्य न चाश्नीयात् देवपितृतिथिष्वपि ।
परिचारकवर्गेषु गोषु ... ... ... कुलेषु च ॥
संयतापस्करा दक्षा हृष्टा व्ययपराङ्मुखा ।
कुर्य्यात् प्रियमनुज्ञाता वोपवासव्रतादिकम् ॥
स्त्रीधर्म्मिणी त्रिरात्रन्तु ... ... द्वैव दर्शयेत् ।
स्ववाक्यं श्रावयेच्चापि यावत् स्नाता न शुद्ध्यति ॥
सुस्नाता भर्त्तृवदनमीक्षतेऽन्यस्य न क्वचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
सर्पिर्लवणतैलादिक्षये चापि पतिव्रता ।
पतिं नास्तीति न ब्रूयादायासार्थेन योजयेत् ॥
आयासार्थेन घृतादिकं द्रव्यं ननु नास्तीति इत्यर्थः ॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियः ॥
... ... ... ... ... ... ... ... ... ... ...
धन्या सा जननी लोके धन्योऽसौ जनकः पुनः ।
धन्यः स च पतिः श्रीमान् यस्य गेहे पतिव्रता ॥

पितृवंश्या मातृवंश्याः पतिवंश्यास्तथा ... ।
पतिव्रताया धर्मेण सर्वे शौचादिभागिनः ॥
एवं भारतादावपि बहुतरं पतिव्रतामाहात्म्यं अवगमनीयम् । नेह विस्तारभिया अत्र प्रदर्शितमस्माभिरिति ॥

**Colophon.** इति श्रीकृष्णश्रीमच्चेन्द्र—श्रीरघुदेवभूपतिसमाहृत—श्रीयादवेन्द्रशर्मविरचितः शूद्राह्निकाचारसारः सम्पूर्णः ॥

**विषयः ।** शूद्राणां नित्यनैमित्तिकाद्यनुष्ठाननिरूपणम् । तत्र धर्मपदार्थनिर्णयः । धर्मशास्त्रनिर्णयः । महाभारतपुराणनिर्णयः । धर्मशास्त्रप्रशंसा । शौचपदार्थनिर्णयः । द्विविधधर्मप्रमाणम् । शूद्राणां प्रातःकृत्यादिनिर्णयः । जलशौचनिर्णयः । मूत्रोत्सर्गनिर्णयः । द्वादशधा मलशुद्धिनिर्णयः । मृत्तिकायां दुष्टादुष्टत्वनिरूपणम् । आचमननिरूपणम् । आचमनपात्रनिषेधः । आसने विशेषनिरूपणम् । शुष्कवासादिविशेषनिरूपणम् । द्विराचमननिर्णयः । दन्तधावननिर्णयः । तस्य विहितनिषिद्धकालकथनम् । प्रातर्मध्याह्नस्नाननिर्णयः । वस्त्रनिष्पीडनपादप्रक्षालन-गृहप्रवेशादिनिर्णयः । शङ्खजलस्य गङ्गाजलतुल्यत्वकथनम् । शूद्रस्य मन्त्रपाठानधिकारित्वकथनम् । वाप्यादौ स्नानविधिः । तर्पणविधिः । भीष्मादितर्पणविधिः । तिथिविशेषे द्रव्यविशेषेण तर्पणविधिः । रोमजवस्त्रादिपरिधानविधिः । देवपूजायामाद्यन्तनिरूपणम् । भक्ष्याभक्ष्यविवेचनम् । स्तुतिनमस्कारप्रदक्षिणादेः फलविशेषकथनम् । निर्माल्यधारणस्थापनविधिः । षोडशोपचारपूजायाः उपचारद्रव्यविशेषविधिः । पञ्चमयामार्धकृत्य-वैश्वदेवबलिकर्महोमद्रव्यादिनिर्णयः । बलिदानप्रकारनिर्णयः । अतिथिपूजा-नित्यश्राद्धनिर्णयः । अतिथिवैमुख्ये दोषकथनम् । भिक्षादानफलम् । गृहस्थप्रशंसा । गोग्रासदानफलम् । दन्तरक्तपाते कर्मविशेषनिषेधः । भोजनस्य लवणपरिसंख्यादिनिर्णयः । अनिवेद्यवस्तुभोजननिषेधः । देवतामुद्दिश्य निवेदने फलनिर्णयः । भोजने दिङ्नियमः । वामपार्श्वे जलधारणे दोषकथनम् । मधुरान्नभोजने दोषकथनम् । मांसभक्षणे विधिनिषेधौ । मांसपरित्यागे फलकथनम् । निषिद्धदुग्धनिर्णयः । भोजनपात्रनिर्णयः । भोजनप्रकारनिर्णयः । भोजने पौर्वापर्यनियमः । भोजनानन्तरकर्मनिरूपणम् । तिथिवारविशेषे निषिद्धद्रव्यनिरूपणम् । रविवारे निषिद्धकर्मनिरूपणम् । अमावास्यायां निषिद्धकर्मनिरूपणम् । पर्वणि निषिद्धकर्मनिरूपणम् । संक्रान्तिस्नाननिर्णयः । ग्रहणकाले द्रव्यनिर्णयः । रात्रिकृत्यनिर्णयः । शयनविधिः । दारोपगमनविधिः । ऋतावनभिगमने दोषकथनम् । अनेकासां स्त्रीणामृतुपस्थिते व्यवस्थानिर्णयः । अभिगमनानन्तरं शौचकथनम् । मैथुनादौ मूत्रोत्सर्गे शुद्धिकथनम् । स्त्रीणां धर्मनिर्णयः ॥ अथ शूद्राह्निकाचारकथनमुखेन सर्ववर्णानामेवाह्निकाचारनिरूपणमिति ॥

---

**No. 372.** श्यामाकल्पलता. By रामचन्द्रकविचक्रवर्त्ती. Substance, country-made paper, 18×6 inches. Folia, 94. Lines, 11–13 on a page. Extent, 3,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** ॐ नमस्तस्यै ।

श्यामातीतापि संवित् स्तजति जगदपत्यस्ति विश्वैकहेतु-
र्विश्वात्मा बुद्धिचेतःप्रकृतिमहदहङ्कारमायास्वरूपा ।
सर्व्वात्मा सर्व्वधामा प्रकृतिरिति परा गीयते वेदविद्भि-
र्या वा सैवास्तु तस्यै घनतिमिर × × सर्व्वमूर्त्त्यै नमोऽस्तु ॥
चाज्ञानध्वान्तसंघाय चितृकैरवकलाभृते ।
दीनचाणकृपाधाम्ने श्रीकृष्णाय नमो नमः ॥
देवीं दुर्द्धरदैत्यदर्पदमनीं नत्वा शिरःपङ्कजे
भूत्वा श्रीगुरुपादपङ्कजरजो ध्यात्वा च + + ।
तेषामाचरणञ्च तन्त्रनिचयानालोक्य यत्नादिमां
श्यामाकल्पलतां सतां वितनुते मोदाय रामः सुधीः ॥
यद्यपि पूर्णानन्दैः सर्व्वरहस्यं स्मरन्ति तं व्यक्त्या ।
तच स्वातन्त्र्येण प्रायशः प्रमाणमभिगीतमाचारमार्गेण ॥
साधकसिद्धिफलेयं कल्पलता तन्यतेऽस्माभिः ॥
स्वतन्त्रं वीरतन्त्रञ्च फेत्कारीतन्त्रमेव च ।
कालिकाकुलसर्व्वस्वं कालीतन्त्रञ्च यामलम् ॥
कुलार्णवं तथा कालीकल्पं भैरवतन्त्रकम् ॥
कालिकाकुलसद्भावं तथा चोत्तरतन्त्रकम् ।
वीक्ष्य तन्मत् प्रमाणेन वक्ष्ये मोक्षप्रदायिनीम् ॥
कलौ कल्पद्रुमप्रख्यां कालिकां भवभीतिहाम ।
तत्रादौ मन्त्रोद्धारं विहृणोति । तदुक्तं स्वतन्त्रतन्त्रे,—
क्रोधीशं विन्दुयुक्कान्तं त्रिमूर्त्त्यग्निसमन्वितम् ।
विलिखेत् परतो देवि हूङ्कारद्वयमेव च ॥
मायाद्वन्द्वं समालिख्य वह्निः समन्तस्त्वहक् । इत्यादि ।

**End.** मोहात्मम प्रहतस्य महतां सेवितैः पदैः ।
सन्तः प्रस्खलतः सन्तु व्यक्तरक्षावलम्बनाः ॥

सर्व्वतन्त्राणि कार्त्स्न्येन केन शास्त्राणि कुत्र वा ।
यथाज्ञानं मया प्रोक्ता श्यामाकल्पलता ह्यसौ ॥
नत्वा श्रीमन्नवीननीरदनिभामाद्यां नमद्वत्सलां
धृत्वा मूर्ध्नि गुरोः पदाब्जयुगलं तन्त्राणि संदृश्य च ।
\+ \+ \+ × ×
\+ \+ \+ \+ \+ ॥

**Colophon.** इति माधवकविकण्ठाभरणचक्रवर्त्तिसुत-श्रीरामचन्द्रचक्रवर्त्तिविरचिता श्रीश्यामाकल्पलता परिपूर्णा ॥

**विषयः ।** अत्रादौ द्वाविंशत्यक्षरमन्त्रोद्धारः । अथ मन्त्रभेदः । तत्र मन्त्रभेदेन ध्यानभेदः । यन्त्रभेदः । श्मशानकालीमन्त्रश्च । अथ दीक्षाप्रशंसादिः । तत्र गुरुशिष्यादिलक्षणम् । दीक्षाप्रकारकथनम् । नवचक्रकथनम् । तत्र षड्दलचक्रम् । सिद्धादिचक्रम् । राशिचक्रम् । कुलाकुलचक्रम् । अकडमचक्रम् । कठवचक्रम् । गणचक्रञ्च । अथ कालशुद्धिविवेचनम् । अथ मण्डनादिकथनम् । अथ दक्षिणादेव्या नित्यार्चनविधिः । तत्र प्रातःकृत्याकरणदोषः । स्नानविधिः । सन्ध्यादिविधिः । तर्पणविधिः । कार्य्यविशेषे वस्त्रनियमः । पूजास्थाननिरूपणम् । आसनादिविधिः । तत्र वीरासनविधिः । विजयाशुद्धिः । विशेषतः प्राणायामविधिः । कुलपात्रादिनिरूपणम् । प्राणप्रतिष्ठाप्रयोगः । तत्र ऋष्यादिन्यासविधिः । षडङ्गवर्णन्यासादिः । पञ्चदशाक्षर-श्रीकण्ठन्यासः । मातृका ऋष्यादिविधिः । षोढान्यासः । तत्त्वन्यासः । बीजन्यासश्च । अथ अन्तर्यजनप्रकारः । तत्र मातृकान्यासः । षडङ्गन्यासः । विषमपुष्पकथनम् । मानसजपविधिः । होमविधिश्च । अथ बहिर्य्यागविधिः । अथ कूर्म्ममुद्राप्रकारः । ध्यानकथनम् । यन्त्रकथनम् । अथ कलसस्थापनविधिः । कलसलक्षणम् । बटुकादिबलिविधिः । अष्टाङ्गार्घनिरूपणम् । अवगुण्ठनमुद्रा । योनिमुद्रा । शङ्खमुद्रा । आवाहनादिमुद्रा । खड्गादिमुद्रा । अष्टादशोपचारः । षोडशोपचारः । उपचारक्रमः । पुष्पादिदाननियमः । नैवेद्यविधिः । नैवेद्यपात्रादिनिरूपणम् । युगभेदेन सुराभेदव्यवस्था । ब्राह्मणस्य मद्यपाननिषेधादिः । तत्प्रानुकल्पविधानम् । दशविधमद्यकथनम् । तत्र गौड़ीदाने सर्व्ववर्णानां दोषकथनम् । मद्यशोधनादिविधिः । तत्र मुद्राविधिः । मांसविधिः । मांसानुकल्पविधिः । मत्स्यविधिः । षडङ्गपूजनविधिः । गुरुक्रमः । आवरणदेवतापूजाविधिः । जपविधिः । तत्र मालाविधिः । वासनाविधिः । बलिदानविधिः । प्रदक्षिणलक्षणादिः । अष्टाङ्गप्रणामविधिः । नैवेद्यदाननियमः । आत्मसमर्पणविधिः । तिलकविधिः । सहस्रनामस्तवादिः । कर्पूरादिस्तवः । स्तवराजस्तोत्रम् । मन्त्रगाथा । स्तवपाठक्रमश्च । अथ देवीमाहात्म्यम् । अथ कवचकथनम् । तत्र विरूपाक्षोक्तकवचम् । अन्यविधकवचञ्च । अथ पुरश्चरणविधिः । वीरपुरश्चरणविधिः । अथ वर्णभेदेन होमाद्यनु-

कलपजपनियमः । शाक्तभोजनस्यावश्यकत्वकथनम् । मन्त्रसिद्धिलक्षकथनम् । सिद्धिस्थानञ्च । अथ कूर्म्मचक्रम् । अथ भक्ष्याभक्ष्यविवेचनम् । अथ जपमालानिर्णयः । मालाप्रतिष्ठाप्रकरणम् । पुरश्चरणे वर्ज्जनीयनिरूपणम् । जपकाले निषिद्धकर्म्मकथनम् । शक्तिनियमः । कौलिकार्च्चन-फलकथनञ्च । अथ वीरकल्पः । तत्र शान्तिस्तोत्रम् । कुमारीपूजानियमः । अथ तर्पण-विधिः । अथ अन्यप्रकारेण पुरश्चरणविधिः । ग्रहणपुरश्चरणम् । नवरात्रिपुरश्चरणम् । पुर-श्चरणमन्तरेणापि मन्त्रसिद्धिः । अथ काम्यप्रयोगः । लतासाधनप्रकारः । अथ महिषमर्द्दिनी-मन्त्रादिः । अस्याः पूजनक्रमः । अस्याः पुरश्चरणजपादिः । तत्र होमद्रव्यनियमः । महिष-मर्द्दिनीस्तोत्रम् । अस्याः कवचञ्च । अथ मौनक्रमः । तत्र शवक्रमः । स्थाननियमः । अथ जयदुर्गामन्त्रः । तत्र श्मशाने विशेषकथनम् । अथ शवसाधनविधिः । अथ प्रकारान्तरेण वीरसाधनविधिः ॥ अथ आकर्षणप्रयोगः । निग्रहाद्युपायः । अथ उच्चाटनविधिः । अथ मालसंस्कारविधिः । अथ शक्तिशुद्धिकथनम् । तत्र नवकन्याविधिः । स्वयम्भूकुसुमोत्पत्तिकथनम् । अथ कुण्डगोलविधिः । अथ दूतीयागविधिः । अथ सामान्यतः साधनविधिः । तत्र कुलवारादि-नियमः । अथ शिवावलिविधिः । अथ समयाचारः । भावत्रयविवेचनम् । कुलीनाचार-कथनम् । अथ कौलिकानां प्रायश्चित्तविधिः । अथ पशुसंसर्गप्रायश्चित्तम् । मन्त्रमालागमन-प्रायश्चित्तम् । अनिवेदितद्रव्यभोजनप्रायश्चित्तम् । प्राणिहिंसाप्रायश्चित्तम् । कुलीनार्च्चनविधिः । होमादिनियमश्च । इति ।

---

**No. 373.** श्राद्धक्रियाकौमुदी. By गोविन्दकविकङ्कणाचार्य्यः. Substance, country-made paper, 16 × 2½ inches. Folia, 62. Lines, 6 on a page. Extent, 1,175 çlokas. Character, Bengali. Date, ? Place of deposit, Brāmhaṇamaṇḍalī, *viâ* Bārāsat, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

आलोच्याखिलसंग्रहानविकलं दृष्ट्वा पुराणान्यपि
प्रोक्ताः सम्यगतो विविच्य मुनिभिर्मन्वादिभिः संहिताः ।
श्रीमत्तातपदारविन्दविलसद्धूलीभवोऽयं ततः
श्रीगोविन्दकविः करोति गहनां श्राद्धक्रियाकौमुदीम् ॥

अथ वाजसनेयिनां श्राद्धक्रमसंक्षेपः ।

निमन्त्रणं स्वागतञ्च पाद्यमर्घ्यादिकं द्विजे ।
द्विजोपवेशनं दीपो विष्णोरर्च्चा हरिस्मृतिः ॥
तिलसर्षपविक्षेपो द्वारमध्ये च सर्व्वतः ॥ इत्यादि ।

**End.** ततो त्रैगुण्यसमाधानार्थं संकल्पपूर्व्वं ॐ तद्विष्णोरित्यनेन श्रीविष्णुः पुण्डरीकाक्षः श्रीहरिरित्यनेन च विष्णुं स्मृत्वा पात्रसमर्पणं पिण्डार्पणञ्च कृत्वा वामदेव्यार्थं त्रिः पठित्वा पिण्डानि गोऽजविप्रेभ्यो दत्त्वा अग्नौ जले वा क्षिप्त्वा स्वस्त्यर्थं रक्षार्थं दीपमाच्छाद्य पाणिपादौ च प्रक्षाल्य स्वयं ब्राह्मणांश्च प्रणम्य प्रकृतं कर्म्म कृत्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत । सति शेषे श्राद्धशेषमवश्यं भुञ्जीत । उपवासदिने जिघ्रेत् । गर्भाधानेतरकर्म्मस्वाभ्युदयिकश्राद्धवासरे मैथुनं त्यजेत् । अथ यदर्थं वृद्धिश्राद्धं कृतं दैवात् तद्दिने यदि तत् कर्म्म न स्यात् तदा पुनस्तत्कर्म्मकाले वृद्धिश्राद्धं कर्त्तव्यम् । यदि संस्कार्य्योऽधिकारी तदा संस्कार्य्यपितृभ्यो दद्यात् द्वितीयादिविवाहे वरः स्वपितृभ्यो दद्यात् । अवीरायाः कन्याया विवाहे श्राद्धं नास्ति । इति वृद्धिश्राद्धप्रयोगः ॥*॥

**Colophon.** इति श्रीगोविन्दकविकङ्कणाचार्य्यविरचिता श्राद्धक्रियाप्रयोगकौमुदी समाप्ता ॥ • ॥

**विषयः** । सपिण्डीकरणश्राद्धादिप्रयोगः । वृषोत्सर्गव्यवस्था । वृषोत्सर्गस्थानादिनिरूपणम् । प्रेतक्रियाक्रमः । पर्णनरदाहादिः । सद्यमरणप्रयोगादिः । गङ्गायामस्थिक्षेपप्रयोगादिः । पूरकपिण्डप्रयोगः । अशौचविशेषे पिण्डदानव्यवस्थादिः । प्रेतक्रियाधिकारिव्यवस्था । अशौचान्तद्वितीयदिनकृत्यम् । वैतरणीगोदाननिरूपणम् । षोडशदाननिरूपणम् । द्विजदम्पतीपूजननिरूपणम् । षोडशपिण्डदानादिप्रयोगः । आभ्युदयिकश्राद्धप्रयोगश्चेति ॥

---

**No. 374.** **श्राद्धदीपिका.** By **महामहोपाध्यायश्रीभीमः.** Substance, country-made paper, 14 × 2 inches. Folia, 94. Lines, 5 on a page. Extent, 1,700 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, very old. Prose. Generally correct.

**Beginning.** ॐ गुरूनुपास्य मन्वादीन् धर्म्मशास्त्राण्यनेकशः ।
पुराणन्यायमीमांसाकामधेन्वादिसंग्रहान् ॥
समवीक्ष्य क्रमेणैषा रचिता सामवेदिनाम् ।
श्राद्ध ... ... क्रियानुष्ठानपद्धतिः ॥
... ... ... ... ... ... वीतमत्सरैः ।
अम्बष्ठोक्तविधानार्थमनयैव द्विजातिभिः ॥
अथ कुसुमशालिनां गोभिलोक्तसन्ध्यास्नानादिविधिर्लिख्यते । रात्रिशेष ...

रात्रिवासश्च तया कार्यमन्तर परिधाय शिरोवस्त्रं गौत्वार्थं जलं वामिकाश्च
स्वपौत्रा कष्टत्वाखरमेवमाचं भूत्वेमं त्यक्ता दक्षिणपश्चिमकोणे क्षिपेत् । इत्यादि ।

**End.** अग्रेसरतरमर्धं स्थापयेत् । ततः क्रमशिखां समाप्य सर्वं होमकर्म यथोक्त-
प्रकारेण समापयेत् । तत उदीच्य-वामदेवगानाभ्यां सर्वं कर्म समाप्य इत्यस्य-
तरौदामलङ्कारं वाससी आचार्याय दद्यात् । तथाचोक्तं छन्दोगपरि-
शिष्टार्थमयन्त्रविधाः । कुतिरपि । श्रुतिस्मृतिसमापन्नं तत्राचार्यं प्रचक्षते ।
तां यथा दद्यात् तदुच्यते । आचार्यं दक्षिणामुखं गन्धमाल्यादिना पूजयित्वा
धेनुमालङ्कृत्य पूजयित्वा प्रणम्य कृताञ्जलिः पठेत् । ॐ या लक्ष्मीः सर्व-
भूतानामित्यादि । पुच्छप्रदेशे स्थित्वा वाक्यावलीं कृत्वा उत्सृज्य दद्यात् ।
अपरं ग्रन्थविस्तरभयेन दूरीकृतमिति ॥ ० ॥

**Colophon.** इति महामहोपाध्याय-काशिमिश्रीय-श्रीश्रीभीमविरचिता श्राद्धदीपिका
समाप्ता ॥ ० ॥ हरये नमः ॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः ।** श्रौतसन्ध्यादिविधिः । स्नानविध्यादिः । नित्यश्राद्धादिः । प्रेतैकोद्दिष्टश्राद्धादिः ।
भूमिशय्यादिदानविधिः । साम्वत्सरिकश्राद्धादिः । इष्टिश्राद्धादिः । अधिमलमासश्राद्धादिः । इत्याद्य-
कृत्यनिरूपणम् । हयोत्सर्गविध्यादिश्च ।

---

**No. 375.** श्राद्धप्रदीपः. By प्रद्युम्नशर्म्मा. Substance, country-made paper, 14 × 2 inches. Folia, 65. Lines, 5 on a page, Extent, 1,100 çlokas. Character, Bengali. Date, Sk. 1448. Place of deposit, District Vāṅkuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, very old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

मन्वादिशास्त्रं बहु वीक्ष्य यत्नतः
प्रणम्य गोपीजनवल्लभं पुरः ।
श्राद्धप्रदीपं प्रथुकप्रबोधकं
प्रद्युम्नशर्म्मा वितनोति चाकृतम् ॥
पुराणविधिविहितोऽपि ... ...
श्राद्धप्रकाशः प्रचुरः प्रयत्नतः ।
ग्रन्थः सतां बोधकरस्तथापि चो-
ऽज्ञानां प्रबोधाय ममायमुद्यमः ॥

तत्रादिरूपिते श्राद्धशब्दार्थे श्राद्धानुष्ठानं निरूपयितुमशक्यत्वात् प्रथमतः

श्राद्धशब्द एव निरूप्यते । अथच किमिदं श्राद्धं नामेति । अथ कश्चित् जलपतितः पितृमुद्दिश्य प्रयत्यात्तो श्राद्धपक्षीकारपर्य्यन्तः श्राद्धमिति । तत्र दैव-श्राद्धादौ तु श्राद्धशब्दाप्रयोगः । दैवश्राद्धमपि पितृश्राद्धान्तर्गतमिति चेन्न दैविकं द्रव्यं श्रुतमिति विश्वामित्रवचनेन दैवस्यापि पृथक् श्राद्धत्वात् । इत्यादि ॥

**End.** ॐ अद्येत्यादि यथासम्भववेदगोत्रशाखानाम्ने श्राद्धाय तुभ्यं अमुकगोत्रस्य पितुरमुकदेवशर्म्मणः अमुकगोत्रस्य पितामहस्य अमुकदेवशर्म्मणः अमुक-गोत्रस्य प्रपितामहस्यामुकदेवशर्म्मणः कृतैतत् नित्यश्राद्धीयान्नदत्तोत्सर्गप्रतिष्ठार्थं एतद्रजतं मूल्यमाषं ददामि एवं मातामहादीनां दक्षिणोत्सृज्य देया । ॐ अद्येत्यादि यथासम्भववेदगोत्रशाखानाम्ने श्राद्धाय तुभ्यं सनकसनन्द-सना-तन-कपिलआसुरिवोढुपञ्चशिखानामतिथिमनुष्याणां कृतैतन्नित्यश्राद्धीयान्न-दत्तोत्सर्गप्रतिष्ठार्थं दक्षिणामेतत् काञ्चनमेतन्मूल्यमाषं ददामि । तत ॐ नित्यश्राद्ध अन्नदत्तोत्सर्गकर्म्मेदमच्छिद्रमस्त्विति वाच्यं पठेत् नमः पितृभ्यो नमः ॐ सनकादिभ्यो नमः । हारीतः ॥

इमं श्राद्धविधिं पुण्यं कुर्य्याद्वापि पठेत्तु यः ।
स सर्व्वकामसंयुक्तो ह्यमृतत्वञ्च विन्दति ॥
बृहस्पतिः । य एवं वेत्ति मतिमान् तस्य श्राद्धफलं भवेत् ।
उपदेष्टानुमन्तारौ लोके तुल्यफलौ स्मृताविति ॥

**Colophon.** इति श्रीचट्टग्रामीय-चाकादिही-ग्रामस्थ-सत्पण्डित-श्रीधरशर्म्मतनय-श्रीमत् प्रद्युम्नशर्म्मविरचितः श्राद्धप्रदीपः समाप्तः ॥ * ॥ श्रीश्रीशुभमस्तु । शकाब्दाः १४४८ तारीख ११ वैशाखस्य ॥ ० ॥ श्री० ॥

**विषयः ।** श्राद्धशब्दार्थनिरूपणम् । मातुरष्टकाश्राद्धादिविधिः । श्राद्धकरणफलादिः । श्राद्धभेदनिरूपणम् । श्राद्धपात्रादिविवेचनम् । अमावस्याश्राद्धकालादिः । मघात्रयोदशीश्राद्धादिः । सपिण्डीकरणादिविधिः । षोडशश्राद्धलक्षणादिः । अशौचपतितश्राद्धादिः । दधिश्राद्धनित्य-श्राद्धादिश्च ।

---

**No. 376. श्राद्धविवेकव्याख्या.** By श्रीनाथशर्म्मा. Substance, country-made paper, 17 × 3 inches. Folia, 101. Lines, 5 on a page. Extent, 1,800 çlokas Character, Bengali. Date, ? Place of deposit, Vidyākūṭa Tripurā Paṇḍita Çyāmacandra Vidyālaŋkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

अनवद्याद्वैतवस्तुनित्यज्ञानस्वरूपिणे ।
विबुधैर्विवन्द्याय नमः श्रीशूलपाणये ॥
श्रीशङ्कराचार्यपुत्रेण श्रीमच्छ्रीनाथशर्मणा ।
व्याख्या भावविवेकस्य जनकोक्ता निबध्यते ॥
क्व शूलपाणेर्वचनं दुरूहं क्व धीर्मदीयाल्पतमा तथापि ।
ब्रवीमि तात्पर्यलवं तदीयं यदत्र तन्मे सुधियः क्षमध्वम् ॥
इह खलु सुखं दुःखाभावश्चेत्यादि ।

**End.** इत्थमेव व्यवहारसमावेशेऽपीति प्रतीमः ।

विषयः । शूलपाणिमहामहोपाध्यायकृतस्य भावविवेकाख्यस्मृतिमालीयग्रन्थस्य व्याख्या ।

---

**No. 377.** श्रीकृष्णामृतम् . By रूपगोस्वामी . Substance, country-made paper, 12×5 inches. Folia, 45. Lines, 8 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, Sk. 1658 Mallābda 1024. Place of deposit, District Vākuḍā, Viṣṇupura, Paṇḍita Raghurāma Tarkaratna. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः कृष्णचैतन्याय ॥

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।
यो धत्ते सर्वभूतानामभवाय उशतीः कलाः ॥
कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥
तुषारविन्दनिःस्यन्दमरन्दभरतुन्दिला ।
ममानन्दं मुकुन्दस्य सन्दुग्धां वेणुकाकली ॥
श्रीचैतन्यमुखोद्गीर्णा हरेकृष्णेति वर्णकाः ।
मज्जयन्तो जगत् प्रेम्णि विजयन्तां तदाह्वयाः ॥
श्रीमत्प्रभुपदाम्भोजैः श्रीमद्भागवतामृतम् ।
यद्गुप्तानि तदेवेदं संक्षेपेण निषेव्यते ॥
इदं श्रीकृष्णतद्भक्तसम्भाव्यतासुधाः ।
आदौ कृष्णामृतं तत्र तद्भक्ताः परिचिन्त्यते ॥
निर्णेतुं परिचिह्नानि तथाच परिसुष्टता ।
प्रधानत्वात् प्रमाणेषु शब्द एव प्रमाण्यते ॥

यतस्तैः शास्त्रयोनित्वादिति न्यायप्रदर्शनात् ।
शब्दस्यैव प्रमाणत्वं स्वीकृतं परमर्षिभिः ॥
किञ्च तर्काप्रतिष्ठानादिति न्यायविधानतः ।
वचोभिरेव दुर्यत्नं तर्केणानादरः कृतः ॥
अथोपाख्येषु सुव्यक्तं मतमुत्कर्षभूमतः ।
तन्याय्यं तत्स्वरूपाणि निरूप्यन्ते क्रमादिह ॥
स्वयं रूपस्तदेकात्मरूप आवेशनामकः ।
इत्यसौ त्रिविधं भाति प्रपञ्चातीतधामसु ॥ इत्यादि ।

**End.** एकत्रिंशे तथा पञ्चत्रिंशे चाध्याय ईरिता ।
माधुरी व्रजदेवीभिर्वेणोरेका महाद्भुता ॥
श्रीविष्णुपत्ये ।
चमत्कारोर्मिमाधुर्य्यतरङ्गाम्बुधिवारिधिः ।
अनन्यावरोचिरूपो गोपेन्द्रनन्दनः ॥
तथा तन्त्रे ।
कन्दर्पकोट्यर्बुदरूपशोभा-
नीराज्यपादाब्जनखाञ्चलस्य ।
कुत्रापदृष्टश्रुतरम्यकान्ते-
र्ध्यानं परं नन्दसुतस्य वक्ष्ये ॥
श्रीदशमे ।
का स्त्र्यङ्ग ! ते कलपदामृतवेणुगीत-
सम्मोहितार्य्यचरितान्न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं
यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ० ॥

**Colophon.** इति संक्षेपभागवतामृते श्रीकृष्णामृतं पूर्वखण्डम् ॥ ०
गौराङ्गपादसरसीरुहमत्तभृङ्गः
श्रीरामपूर्ण्णशरणोऽखिलदेवदासः ।
कृष्णामृतं लिखितवैष्णवतत्त्वसारं
शाकेऽङ्कबाणरजनीपकलामितेऽब्दे ॥
पञ्च-वेद-च-चन्द्रेषु मिते शकगताब्दके ।
पीतं कृष्णामृतं सर्वविश्वाप्स च येन वै ॥ ० ॥

वन्दे रूपगविन्दाद्भुतचरितभक्तिप्रकाशकं शास्त्रम् ।
कलुषग्रसनरसिकं चित्रं सन्मावतं पिबति ॥ * ॥
श्रीश्रीराधाकृष्णः ॥

**विषय: ।** कृष्णस्वरूपादिनिरूपणम् । भेदत्रयादिनिरूपणम् । नानापुराणादिवचनप्रमाणेन लीलावतारादिनिरूपणम् । पुराणादिवचनप्रमाणेन युगावतारादिनिरूपणम् । स्वरूपावस्थादिनिरूपणञ्चेति ।

---

**No. 378.** श्रीराधासुधानिधिः. By हितहरिवंशगोस्वामी. Substance, country-made paper, 13 × 6 inches. Folia, 14. Lines, 11 on a page. Extent, 357 çlokas. Character, Bengali. Date, Sk. 1740. Place of deposit, District Vākuḍā, Kucekol, Bābu Yogindranātha Siṁha Deva. Appearance, fresh. Verse, Generally correct.

**Beginning.** ॐ स्वस्ति । श्रीमद्गेशाय नमः । श्रीराधावल्लभो जयति । अथ श्रीमद्राधासुधानिधिस्तवो लिख्यते । वसन्ततिलकाच्छन्दः ।
यस्याः कदापि वसनाञ्चलखेलनोत्थ-
धन्यातिधन्यपवनेन कृतार्थमानी ।
योगी + दुर्गमगतिर्मधुसूदनोऽपि
तस्या नमोऽस्तु वृषभानुभुवो दिशेऽपि ॥
ब्रह्मेश्वरादिसुदुरूहपदारविन्दं
श्रीमत्पराग-परमाद्भुतवैभवायाः ।
सर्व्वार्थसाररसवर्षिकृपार्द्रदृष्टे-
स्तस्या नमोऽस्तु वृषभानुभुवो महिम्ने ॥

**End.** श्रीराधे श्रुतिभिर्बुधैर्भगवताप्यामृग्य सद्वैभवे
स्तोत्रं स्वकृपा + मम रसजा योग्योऽप्यवज्ञारितः ।
यत्नैव सदा पराभिनिमम स्वर्गे विवश प्राङ्-
काशे खेचरवाकुलाकृचि किमपि प्रीतिं प्रसादीकुरु ॥ (?)
अद्भुतानन्दलोभश्च नाम्ना रससुधानिधिः ।
स्तवोऽयं कर्णकलशैर्गृहीत्वा पीयतां बुधाः ॥

**Colophon.** इति श्रीवृन्दावनेश्वरीचरणकृपामात्रविजृम्भित-श्रीराधासुधानिधिः स्तवः समाप्तः ॥ श्रीहितहरिवंशगोस्वामिना विरचितः ॥ शुभमस्तु शकाब्दाः १७४० ।

**विषय: ।** श्रीराधादेव्याः स्तुतिः ।

---

**No. 379.** षट्कर्म्मचक्रटीका. By श्रीराघवेन्द्रशर्म्मा. Substance, country-made paper, 18×4 inches. Folia, 8. Lines, 9 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansiṁha Kaṭihāli, Paṇḍita Ānanda Kiçora Nyāyālaṇkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ श्रीनृपादिश्रीतन्त्र-तन्त्रसारादिलिखित-षट्कर्म-
चक्राणां श्रीवेदान्तवागीशमते टीका श्रीराघवेन्द्रशर्म्मणा विरच्यते ।
कारकाराधासमक सङ्कटीअ संज्ञकः ।
अहिरकुहरं श्रीचपिप्पली मामरोचितौ । (?) इत्यादि ।

**End.** अङ्कितत्वात् शेषो नास्ति ।

**विषयः ।** तान्त्रिकस्य षट्कर्म्मचक्राख्यग्रन्थस्य टीका ।

---

**No. 380.** षट्कारकबोधः. Substance, country-made paper, 13×3 inches. Folia, 20. Lines, 5 on a page. Extent, 340 çlokas. Character, Bengali. Date, Sk. 1726. Place of deposit, Vidyākūṭa Tripurā, Paṇḍita Çarat Candra Vidyālaṇkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
अग्रं मारबलं येन निर्जितं भवपञ्जरम् ।
निर्व्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम् ॥
षट्कारकाणि सम्बन्ध षष्ठानुगततया द्विधा । इत्यादि ।

**End.** षष्ठागतं प्रतिपाद्यं विभक्तिश्च दर्शयित्वा निर्णयः ।

**Colophon.** इति षट्कारकबोधः समाप्तः । शुभमस्तु । शकाब्दाः १७२६ । सन् १२१४ ।
श्रीरस्तु मयि लेखके नित्यम् ।

**विषयः ।** कातन्त्रीय षट्प्रकारकारकविषयविवरणम् ।

---

**No. 381.** षट्चक्रक्रमटीका. By नन्दरामतर्कवागीशः. Substance, country-made paper, 14½×3¼ inches. Folia, 16. Lines, 6 on a page. Extent, 318 çlokas. Character, Bengali. Date, ? Place of deposit, Kālikaccha, District Tripurā, Paṇḍita Rājacandra Sārvvabharma. Appearance, old. Prose. Generally correct.

**Beginning.** प्रत्यूहव्यूहविध्वंसविस्फुरद्दन्तमण्डलम् ।
गजेन्द्रवदनं नौमि गुह्यातातपवर्ष्वितम् ॥
हरिवंशभयो यस्य रहस्यज्ञानहेतवे ।
श्रीनन्दरामः कुरुते षट्चक्रक्रमदीपनीम् ॥
अथ मन्त्रार्थकः तन्त्रानुसारेण परमानन्दनिर्व्वाणप्रथमाङ्कुरः । परमानन्द-
पदेन प्रथमोपाय उच्यते । इत्यादि ।

**End.** यत्र योगिनश्चेतोऽवष्टम्भीष्टदैवतपदे इष्टदेवतापदे नरीनृत्यते पुनः पुन-
र्नृत्यति ॥ ५६ ॥

**Colophon.** इति श्रीनन्दरामतर्कवागीशभट्टाचार्य्यविरचिता षट्चक्रक्रमटीका सम्पूर्णा ।

**विषयः ।** षट्चक्रक्रमनामकस्य तान्त्रिकयोगग्रन्थस्य व्याख्यानम् ।

---

**No. 382.** षट्चक्रटीका. By शङ्करः. Substance, country-made paper, 12 × 5 inches. Folia, 15. Lines, 5 on a page. Extent, 225 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose. Generally correct.

**Beginning.** प्रणम्य शैलाधिपकन्यकायाः
पदाम्बुजानन्दविधूतयुग्मम् ।
प्रतन्यते श्रीयुतशङ्करेण
षट्चक्रटीकाख्य-सुपुस्तिकेयम् ॥ इत्यादि ।

**End.** ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
तत्परे च शिवो देवः षट् शिवाः परिकीर्त्तिताः ॥
जगच्छिवं (?) नवद्वीपे श्रीशङ्करनियोगिन ओमयतं यायात् ॥

**Colophon.** इति षट्चक्रटीका ।

**विषयः ।** तान्त्रिकस्य षट्चक्रस्य व्याख्यानम् ।

---

**No. 383.** षट्चक्रक्रमदीपिका. By रामभद्रसार्व्वभौमः. Substance, country-made paper, $14\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 18. Lines, 6 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, Kālikaccha District Tripurā, Paṇḍita Rājacandra Sārvvabhauma. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ गुरवे नमः ।

ॐ सपलीकं गुरुं नत्वा ... ... ... ... ।

रामभद्रसार्वभौमः कुरुते चक्रदीपिकाम् ॥

अथ षट्चक्रविवरणम् । तत्र प्रथमं षड्विमलः । इत्यादि ।

**End.** तथापि पद्मद्वयसम्पुटमध्ये विन्दारूपस्य नाशो न भवति । इत्याशां विस्तरः ।

**Colophon.** इति रामभद्रसार्वभौमभट्टाचार्य्यविरचितायां षट्चक्रक्रमदीपिकायां षट्-चक्रक्रमविवरणं समाप्तम् ॥

विषयः । षड्विनिरूपणम् । पञ्चभूतनिरूपणम् । ज्ञानेन्द्रियनिरूपणम् । ज्ञानेन्द्रियगुण-निरूपणम् । सम्पातालक्ष्यानिरूपणम् । चक्रभेदनिरूपणञ्चेति ।

---

**No. 384** षट्चक्रदीपिकाटीका. Substance, country-made paper, 16 × 3 inches. Folia, 18. Lines, 7 on a page. Extent, 400 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansiṁha Yaçodal, Paṇḍita Kālicandra Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो भवान्यै । षयेति षपमन्दो मङ्गलपूर्वकामन्तर्य्यार्थः । तत्र च ।

ॐ कारयायमब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥ इत्यादि ।

**End.** न विद्यते मलं पापं यस्मात् निर्मलं वा श्रीमद्गुरुपादपद्मयुगलजातनिर्मु श्रीलमस्य यतं संयतमन्त्रसंगो यस्य स इति ॥ ० ॥

**Colophon.** इति पूर्णानन्दीययोगचिन्तामणिनाम-षट्चक्रदीपिकाटीका समाप्ता ॥ * ॥

विषयः । पूर्णानन्दविरचितस्य योगचिन्तामणिनामकषट्चक्रग्रन्थस्य दीपिकाख्यटीकाया व्याख्यानम् ।

---

**No. 385.** षट्चक्रनिरूपणटीका. By रामवल्लभः. Substance, country-made paper, 18 × 4 inches. Folia, 20. Lines, 8 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā Vikramapura, Āṭpāḍā, Paṇḍita Prasannacandra Vidyāratna. Appearance, new. Prose. Generally correct.

**Beginning.** श्रीचान्धकारविध्वंसि भवभीतिभयापहम् ।

भवानीचरणद्वन्द्वं भज भाग्यवशान्मनः ॥

पूर्णानन्दोदितानन्दविरचाङ्कुरकारिकाम् ।
विशदीकुरुते तूर्णं द्विज-श्रीरामवल्लभः ॥
अथेत्यादि । अस्यार्थः । अन्यारम्भे विघ्नविघाताय अथाथशब्दौ मङ्गलार्थः ।
षट्चक्राणि क्रमेणोद्गतः प्राप्तः प्रकाशः । परमानन्दस्य मोक्षस्य निर्व्वाह-
सम्पादकः प्रथमाङ्कुर उच्यते । षट्चक्रनिरूपणं क्रियते इत्यर्थः । अयं भावः ।
परमानन्दसम्पादकसामग्री नव प्रथमाङ्कुरः प्रथमसामग्रीविशेषः । षट्चक्रं
निरूप्यते । अर्थात् परमानन्देन प्रकाश्यते इति यावत् ॥ इत्यादि ।

End. कीदृशं मोक्षज्ञाननिदानं मुक्तिजनकज्ञानस्यादिकारणं पुनः ध्रुवं शाश्वतं
पुनः शुद्धं शोभनप्रकारेण शुद्धं सर्व्ववादिसम्मतमित्यर्थः । योगी कीदृशः
यताभ्यर्म्मनाः संयताभ्यर्म्मनाः वशीकृतचित्त इत्यर्थः ॥

Colophon. इति चन्द्रद्वीपाभ्यन्तरवसत्पुराख्यग्रामनिवासि-श्रीरामवल्लभशर्म्मणा कृता षट्-
चक्रनिरूपणटीका समाप्ता ।

विषयः । पूर्णानन्दकृतस्य षट्चक्रनिरूपणस्य व्याख्यानम् ॥

---

**No. 386.** षट्पदीमञ्जरी. By शङ्करानन्दतीर्थः. Substance, country-made paper, $17 \times 3\frac{1}{3}$ inches. Folia, 15. Lines, 9 on a page. Extent, 290 çlokas. Character, Bengali. Date, SK. 1699. Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णः ।
निर्जरसम्प्रदानकल्पकल्पभूरुहाकृतिम् ।
दुरन्तविघ्नवारिदप्रभञ्जनं निरञ्जनम् ॥
महीधचिन्तसारसप्रबोधभास्करं परम् ।
रमालयालवासिनं भजामि विघ्ननायकम् ॥
श्रीनन्दनन्दनममन्दतुरङ्गदन्द-
सान्द्रानुरागपरिभावितपादपद्मम् ।
वंशीरवाहृतविमोहितगोपगोपी-
सन्दोहमिन्दुमुखमच्युतमानतोऽस्मि ॥
श्रीभाष्यकृद्वरवसारसमादरेण
धीमीन्द्रदन्दमधुपैरपगीयमानम् ।

शङ्कराभिधेयमखिलार्थनिदानभूतं
कैवल्यपुण्यरससम्भृतमानतोऽस्मि ।
वेदान्तार्थविचारजन्यविषयाविश्वकभेदाश्रयं
नानातत्त्वपदार्थसंशयघनध्वान्तार्कमानन्ददम् ।
नानादेशदिगन्तसन्ततयशःप्राप्तावकाशं गुरुं
श्रीनारायणतीर्थपादमनिशं भक्त्यन्तमूर्तिं भजे ॥
मदीयपादजीवनं यथामयं पुनीत्यलम् ।
सुरापगावसन्ततं तनोति यं नमस्तकम् ॥
यदाननाम्बुजे विभाति भारती सती ।
ततः सदा सदाशिवाख्यदेशिकान् गुरून् ॥
अथ सच्चिदानन्दात्मकमद्वितीयं ब्रह्मैव विमलसत्त्वप्रधानमायोपाधिकं सत्
ईश्वरभावमुपजगाम ॥ जीवेशावाभासेन करोतीत्यादि श्रुतेः । स च माया-
प्रतिबिम्बित ईश्वरसंज्ञोपलक्षत् ॥ इत्यादि ।

**End.** इदानीं भगवच्चरणध्यानसाधनं षट्पदीपठनं प्रार्थयते इतीति । इति
पूर्वोक्ताः पद्यन्ते गम्यन्तेऽर्था एतैरिति । पदानि श्लोकाः षषां पदानां
समाहारः षट्पदी ॥ यथा षट्पदी भ्रमरी सौरभ्येण सरोजे निवसति तथैवं
श्रीमच्छङ्करवदनसरोजाद्विनिर्गतः षट्पदी मत्कर्णमेव वदनसरोजे सदा
वसतु । तदनेन भगवच्चरणध्यानपूर्वक-षट्पदीस्तोत्रपठनस्य पुरुषार्थचतुष्टय-
हेतुत्वं सूचितं भवति । ननु नेयं षट्पदी किन्तु सप्तपदी नारायणकरुणा-
मयेति श्लोकरूपत्वात् । सत्यं नारायणायेति श्लोकस्य फलश्रुतिपरत्वेन
बहिर्भूतत्वादिति षट्पदीत्वमेव । + + + + + + ननु इदमस्य
पादचतुष्टयात्मकश्लोकपरतया व्याख्यातत्वे आर्याषट्कस्य कथं षट्पदीत्व-
मिति चेन्नार्याया अपि पादचतुष्टयात्मकत्वेनार्यात्मकयोरभेदादार्याषट्कस्य
तदुपपत्तेः । आर्यालक्षणमुक्तं छन्दोग्रन्थविद्भिः ।
श्रीभाष्यकृद्वदनपङ्कजसंप्रसूतं
सद्भक्तिबोधसुनिदानवचोमरन्दम् ।
आस्वाद्य मानसितरां मम मानसालि
निःसीमसान्द्रनिजभूमपदं चिराप्ता ॥
षट्पदीटीकया सर्वानुद्धार ततोऽव्ययम् ।
संसारसागरे मग्नान् यतं शङ्करदेशिकम् ॥

भगवद्भक्तिगन्धाढ्यैः कुसुमैर्वाङ्मयैः कृता ।
षट्पदीमञ्जरी सम्यक् योजिता कृष्णपादयोः ॥ ० ॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीशिवनारायणानन्दतीर्थगुरुचरण-सेवक-श्रीशङ्करानन्दतीर्थविरचिता षट्पदीमञ्जरी सम्पूर्णा ॥ * ॥

शकाब्दः १६९९ ॥

विषयः । शङ्कराचार्य्यकृतस्य षट्पदीस्तोत्रस्य व्याख्यानम् ।

---

**No. 387.** षट्पद्यमाला. By रामरामभट्टाचार्य्यः. Substance, country-made paper, 17 × 4½ inches. Folia, 12. Lines, 6 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansiṁha, Serapura, Paṇḍita Cardrakànta Tarkālaŋkāra. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः परदेवतायै । (अस्य प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम् ।)
परदाराभिशापे च बहवो यत्र वादिनः ।
शिरोच्छेदनं भवेद्व्यिमात्मनः शुद्धिकारणम् ॥ इत्यादि ।

**End.** दुर्गे पद्ममहावने स्थिरतरे संसारपथाश्रिते
तच्चज्ञानविवेचपुष्पकलिते शुक्लोऽपवर्गैः फलैः ।
तन्नज्ञानमहान्धकारनिकरश्यामीकृतश्रीकरे
चश्चत् कुक्रियचित्तफेरशिशुना शार्दूलविक्रीड़ितम् ॥
एतत्, पद्यशतादपुष्परचिता माला विचित्रा इलै-
र्नानावर्णमयैर्निकामरचिता श्रीरामरामद्विजैः ॥
श्रीमच्छ्रीगुरुपादपङ्कजसपर्य्यासन्निधौ नित्यश-
स्तत्पादाब्जसुधाभिरञ्जितवपुर्भूयामितीच्छे वरम् ॥ १०८

**Colophon.** इति श्रीरामरामभट्टाचार्य्यविरचिता षट्पद्यमाला समाप्ता ॥ ० ॥

विषयः । षट्चरणतश्लोकेन नाड़ीनां संज्ञास्थितिवर्णादिनिरूपणम् ।

---

**No. 388.** संवत्सरप्रदीपः. Substance, country-made paper, 13 × 4 inches. Folia, 96. Lines, 8 on a page. Extent, 2,300 çlokas. Character, Bengali. Date, ? Place of deposit, Bhāṭpāḍā 24-Parganās, Paṇḍita Rāmendra Nyāyavāgīça. Appearance, old. Verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
जयति श्रीसरस्वत्योपपासोऽसुरद्वारवः ।
धर्म्मार्थकाममोक्षार्थि-कल्पप्रत्यूहवारणः ॥
अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥
मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
तुलामेषे विषुवती गोलमध्ये तथापराः ॥
मृगो मकरः । इत्यादि ।

End. अकालरसितं सन्ध्यागर्ज्जः ।
सन्ध्यागर्ज्जे तथा प्रातर्द्दिवा नाध्ययनं चरेत् ।
सायं गर्ज्जे तथा रात्रौ नाधीयीत विचक्षणः ॥
रविवारे च संक्रान्त्यां षष्ठ्यां च सप्तमीतिथौ ।
आरोग्यकामस्तु नरो निम्बपत्रं न भक्षयेत् ॥
अमावास्यां पौर्णमास्यां संक्रान्त्यां ग्रहणेऽहनि ।
धनपुत्रकलत्रार्थी मौलापिष्टं परित्यजेत् ॥
मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे ।
मत्स्यानां क्षारसंयोगो हन्त्यासप्तमं कुलम् ॥ इति प्रकीर्णकं समाप्तम् । .

Colophon. समाप्तश्चायं संवत्सरप्रदीपाख्यो ग्रन्थः ॥ ० ॥

विषयः । संक्रान्तिनिरूपणम् । वैशाखज्येष्ठादिकृत्यम् । अनन्तव्रतादिः । कुक्कुटीव्रतादिः । अघोरादिः । जन्माष्टम्यादिः । अक्षयादिनिरूपणम् । युगाद्यानिरूपणम् । दशहरादिनिरूपणम् । सावित्रीव्रतादिः । चातुर्मास्यादिनिरूपणञ्च ।

---

**No. 389.** **संकल्पकल्पद्रुमः**. By **विश्वनाथचक्रवर्त्ती**. Substance, country-made paper, $15 \times 5\frac{1}{2}$ inches. Folia, 14. Lines, 5 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, Āgaḍtalā Vṛddhanagara, Tripurā, Paṇḍita Mineçvara Sārvvabhauma. Appearance, tolerable. Verse. Generally correct.

Beginning. नमो वृन्दावनेश्वर्य्यै ।
वृन्दावनेश्वरि वयोगुणरूपलीला-
सौभाग्यकेलिकरुणाजलधेऽवधेहि ।

दासीभवानि सुखयानि सदा सकान्तां
नानाविधैः परिहतामिदमेव याचे ॥ इत्यादि ।

End. दिलान्याः किल वासना भजत रे इन्दावनं तं × ×
राधाकृष्णविलासवारिधिरसास्वादं न चेदिच्छथ ।
त्यक्तुं सत्यथ न स्पृहामपि पुनस्तत्रैव दृदृहतयो
विश्रब्धाः प्रभुतेममेव सततं संकल्पकल्पद्रुमम् ॥

Colophon. इति श्रीविश्वनाथचक्रवर्त्तिविरचितः सङ्कल्पकल्पद्रुमः समाप्तः ॥

विषयः । राधाकृष्णयोर्लीलावर्णनमुखेन राधाकृष्णे मानसापेक्षादिविविधप्रकारभजन-कथनम् ।

---

**No. 390.** संक्षिप्तसारकौमुदी. By अभिरामविद्यालङ्कारः. Substance, country-made paper, 14×2 inches. Folia, 17. Lines, 9 on a page. Extent, 350 çlokas. Character, Bengali. Date, Sk. 1760. Place of deposit, Teliveni grāma *viâ* Gadbetā, Pandita Candranātha Cūdāmaṇi. Appearance, fresh. Prose. Generally correct.

Beginning. ॐ नमः शिवाय ॥ सुप् ॥ अथास्य सकलविषयव्यापकत्वात् ग्रन्थादौ करणं युक्तमिति चेन्न सतन्त्रेकोर्निर्णयत्वमसम्भवत्वाद् इति केचित् । वयन्तु कारक-पादे कर्त्रादिसंज्ञाविधानपूर्व्वकं प्रथमादिविभक्तीनां प्रथमपुरुषादेश विधान-मुक्तम् । इत्यादि ।

End. न पञ्च इत्यादौ कथं नान्तत्वान्न दीर्घ इत्यत आह असौ सुगिति । नित्यबहु-वचनान्तत्वात् कतिशब्दस्य संख्याप्रश्ने संशय एव कर्त्तृविधानाच्च सिद्धो-सोरभावः इति बोध्यम् ॥ तत्रापनिक इत्यादि तत्यस्य तत्पिनस्य राज्ञः शासनमर्हतीति तदर्हत्यादाविति ठिकण् ॥ * ॥

Colophon. इति वन्द्यघटीयगयघटकुलोद्भव-श्रीश्रीयुताभिरामविद्यालङ्कारभट्टाचार्य्य-विरचितायां संक्षिप्तसारकौमुद्यां षष्ठः सुबन्तपादः समाप्तः ॥ * ॥
शकाब्दाः १७६० ।

विषयः । संक्षिप्तसारव्याकरणस्य सुबन्तपादस्य व्याख्यानम् ।

---

**No. 391.** संक्षिप्तसारटीका ( व्याकरणदीपिकाख्या ) By श्रीविद्याविनोदात्मज-श्रीन्यायपञ्चाननः. Substance, country-made paper, 15 × 3¼ inches. Folia, 244. Lines, 8–9 on a page. Extent, 10,980 çlokas. Character, Bengali. Date, Sk. 1634. Place of deposit, Kā̆ṭhālapāḍā *vià* Naihāṭi, Paṇḍita Harinātha Baṭṭācāryya, bought by the Government of India, Calcutta. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

नत्वा श्रीहरिचरणं कृत्वा शरणं पितुः पदञ्च नमम् ।
विमलधियां हितजननी क्रियते व्याकरणदीपिका यत्नात् ॥
कोऽपि न्यायपुराणकाव्यनिचयालङ्कारवैशेषिक-
व्याकरणश्रुतिनाटकस्मृतिगुरुर्विद्याविनोदः स्थितः ।
तत्पुत्रस्य विचारनिर्मलमतेः श्रीन्यायपञ्चानन-
स्यौत्सुक्यं सुधियो विधाय विमलां शृण्वन्तु वाचं हिताम् ॥
सुगमं निगदेन गम्यते शिशुभिर्दुर्गममेव तत्त्वतः ।
निरवोचमतः प्रयत्नतः परिसंगृह्य च दृष्टिटीकयोः ॥
अनधीत्य शब्दशास्त्रं योऽन्यच्छास्त्रं समीहते ज्ञातुम् ।
... ... ... ... ... ... ... ... ... ... ... ... ॥

शिवमित्यादि । मङ्गलस्य प्रारिप्सितसमाप्तिं प्रति कारणता विघ्नध्वंसत्वान्वय-व्यतिरेकसमधिगम्येति नैयायिकाः । वयन्तु विघ्नध्वंसं प्रति मङ्गलस्य कारणता समाप्तिस्तु स्वकारणादेवेति ब्रूमः ॥ तथाच गोयीचन्द्रः प्रत्यूहव्यूहनिराकरण-कारणमिति । ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... उच्यते । सनाम्नो विधीयते । नाम तु लिङ्गाद्विवत् सुपशून्यं नामैव यदा प्रधानस्य विशेष्यत्वविवक्षायाः सम्बुद्ध्यन्तात् सु औ जस् इति योग-विभागात् ॥ इत्यादि ॥

**End.** कति पुरुषाः कति स्त्रियः कति धनानीत्युदाहरणत्रयोपादानं कति शब्दस्य लिङ्गाविशेषकार्य्याभावसूचनार्थम् । जसो लुक् कति पञ्चादिरिति कृतेऽपि जस्शसोर्भवणे सिद्धे इत्यादि एकवचनद्विवचनान्तयोः संख्याया नियत-त्वादव संख्याप्रश्नार्थं कतिशब्दप्रयोग एव न सम्भवतीति तिङ्सिङ्सो रभाव इति भावः । ... ... ... ... ... ... ... ... ... ... ... ... यद्वा अत्र ऐजेचो ... न क्रियते किन्तु जस्शसोर्लुकि च अन्तर्वर्त्तिनो-ऽकारस्यैव ओद्भवति । स्वादौ नञ्च विधानेन ... त्येव क्रियतां तथा

इति सवर्णदीर्घेणैवापत्तिरेव । प्रथमं इन्द्रियकार्याभावात् अकारस्य न इन्द्रिः । डा भिस् के कपि कथामित्यस्य प्रवृत्तौ पश्चात् सवर्णदीर्घः स्यात् यदा अकपरत्वात्सलोपे अन्तर्वर्तिनीमत: स्थाने आदित्वाभावे अद्यासिरिति साध्यस्य सिद्धिर्न स्यात् ॥

Colophon. इति श्रीकुलकलानिधिमहामहोपाध्याय श्रीविद्याविनोदात्मज-श्रीन्यायपञ्चाननकृतायां संक्षिप्तसारटीकायां व्याकरणदीपिकायां षष्ठः सुबन्तपादः समाप्तः ।

विषयः । संक्षिप्तसाराख्यव्याकरणस्य व्याख्यानम् ।

---

**No. 392.** सङ्क्षेपशङ्करजयः. By माधवाचार्य्यः. Substance, country-made paper, $17 \times 4\frac{1}{2}$ inches. Folia, 69. Lines, 10 on a page. Extent, 2,000 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Çyāmapukura, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशङ्करजये सारः संगृह्यते स्फुटम् ॥
यद्वद्धटानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीये लघुसंग्रहेऽस्मिन्नुदीक्ष्यतां शाङ्करवाक्यसारः । इत्यादि ।

**End.** इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः प्रसूनैर्दिव्यैरभ्यर्च्यमानः सरसिजभवादृत्तहस्तावलम्बः ।
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः
पृष्टव्यालोकमन्दं समुदितवचिभिर्धाम नैजं प्रतस्थे ॥ * ॥

**Colophon.** इति श्रीमाधवीये तच्छारदापीठवासगः ।
संक्षेपशङ्करजये सर्गः पूर्णोऽपि षोडशः ॥
समाप्तश्चायं ग्रन्थः ॥

विषयः । शङ्कराचार्य्यस्य जीवनवृत्तान्तः ।

---

**No. 393.** सङ्ख्याप्रकाशटीका. By काशीरामवाचस्पतिः. Substance, country-made paper, $16 \times 3$ inches. Folia, 28. Lines, 9 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura Kādākuli, Paṇḍita Raghurāma Tarkaratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥

दिदृक्षिपूर्यो निजधर्म्मसेतून्
युगे युगे सत्त्वमयानि धत्ते ।
वपूंषि नानागुणकर्म्मभाञ्जि
भूयात् स देवो भवतां विभूत्यै ॥
भट्टाचार्य्यशिरोरत्नन्यायालङ्कारसूनुना ।
संख्याप्रकाशव्याख्या काशीरामेण तन्यते ॥

अथ सकलशास्त्राभिज्ञः श्रीमान् नन्दरामतर्कवागीशभट्टाचार्य्यः इदानीन्तनान् मन्दबुद्धीन् पूर्व्वपूर्व्वपण्डितकृत नानाविधतत्त्वग्रन्थाध्ययनासमर्थानवलोक्य परमकारुणिकतया अध्ययनभावनाभ्यां तत्त्वग्रन्थेभ्यः सारमाकृष्य संख्याकथनमिषेण संख्याप्रकाशकनामकग्रन्थं संक्षिप्तसारं तेषां हितार्थं रचितवान् । अथ एषोऽपि तेषां नातिसुगमो बभूव अतो यथामति तद्व्याख्याने ममोद्यमः । तत्र तावत् ग्रन्थकृत् ग्रन्थसमाप्तिप्रतिबन्धकीभूतविघ्नसम्भावनया तन्नाशाय कृतमीश्वरनमस्कारं शिष्यशिक्षार्थमादौ निबध्नन् सुचिरतरकालीनविबुधपदावस्थितिहेतवे यशसे स्वनामयौगिकग्रन्थनामद्वारा प्रवृत्त्यङ्गमभिधेयञ्चाह देहवानित्यादि । यः शुद्धसत्त्वस्वरूपया आत्ममायया देहवानिव पाञ्चभौतिकदेहविशिष्ट इव भाति तथाहि ईश्वरस्य शुद्धसत्त्वात्मिका मायैव देहः । इत्यादि ।

**End.** अन्येति अन्यापि द्वात्रिंशदादिकापि संख्या मदुक्तया परीपाट्या रीत्या बोद्धव्या । ननु कथं अनुक्तानां भविष्यति तत्राह इङ्गितेनेति हि यतः धीराः पण्डिता इङ्गितेनापि परहृत्स्थितं जानन्ति तथाच यदि धीरा इङ्गितेनापि परहृत्स्थितं जानन्ति तदा उक्तया परिपाट्या ते तत् शास्यन्ति तत्र चित्रमिति भावः । तथापि यत्किञ्चित् अन्यसंख्या प्रदर्श्यते यथा गीताध्यायपाठनान्या(?) अपराधा द्वात्रिंशत् यथा—
अहन्यहनि यो मर्त्यो गीताध्यायन्तु संपठेत् ।
द्वात्रिंशदपराधाच्च अहन्यहनि मुच्यते ॥ इति ।
ते च अपराधा वराहपुराणान्निष्कृष्य लिख्यन्ते । भगवद्भक्तानां अविधिविहितान्न भोजनम् ॥ १ ॥ अजीर्णे सति विष्णोरुपसर्पणं ।३२॥ व्यभिचारिभावास्त्रयस्त्रिंशत् तदुक्तं काव्यप्रकाशे ॥ ३३॥
त्रयस्त्रिंशदमी भावाः समाख्याताः स्वनामत इति ।

एवमन्यापि संज्ञा बोध्या ग्रन्थविस्तारभयान्नोक्ता

छात्राणामिह यत्पुटं सुखकरमाद्ये

पुमान् प्रयत्न कवयो विमिवेद्यामि ।

आक्षेपमर्थैरचितापि सद्रूपतापि

दक्षा भवद्भिरवधाय दयाविशेषैः ॥

श्रीश्रीजाने दयाधाने चरणाब्जतले तव ।

श्रीकाशीरामकृतिना कृतिरेषा समर्पिता ।

**Colophon.** इति संज्ञाप्रकाशव्याख्या समाप्ता ॥ ० ॥

**विषयः ।** चन्द्ररामतर्कवागीशभट्टाचार्य्यकृतस्य संज्ञाप्रकाशनामकस्य नानाशास्त्रसंग्रहीत-तत्त्वबोधकग्रन्थस्य व्याख्यानम् ।

---

**No. 394.** संग्रहसारः. By रामदेवद्विजः. Substance, country-made paper, 18 x 4 inches. Folia, 63. Lines, 6 on a page. Extent, 1,250 çlokas, Character, Bengali. Date, ? Place of deposit, District Ḍhākā. Post Office Baidyerbāzār, Kṛṣṇapura, Paṇḍita Madanamohana Bhaṭṭā-cāryya. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** श्रीरामस्य पदारविन्दयुगलं नत्वाथ वागीश्वरीं

चेतस्यं तपनादिकं ग्रहगुरुं वह्निं यमोद्यानुगम् ।

नानाजातककृतो विलोक्य सकलं गर्गादिविप्रोदितं

वक्ष्ये संग्रहसारमल्पतनुकं श्रीरामदेवो द्विजः ॥

ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायादियन्त्रैः स्फुटं

तत्कालप्रभवा विलग्नसहिता कार्य्या ततश्च ग्रहाः इत्यादि ॥

**End.** वेदोऽङ्के जलधिर्गजाब्धिसहितो मुन्यब्धिभिः पञ्च च

पञ्चाब्धिश्रुतिभिः शरः श्रुतिगुणैर्बाणोऽक्षयुग्मैः षट् ।

बाणः काष्ठगुणैः शरोऽम्बरयुगैरङ्केन्दुभिर्मार्गणो

वेदो बाणगुणैर्गुणोऽक्षविशिखैरष्टाब्धिभिः पावकः ॥

**Colophon.** (अन्यत् परिसमाप्तिसूचकं वाक्यं नास्ति)

**विषयः ।** नक्षत्रगर्भफलम् । नवांशफलम् । लग्नाधिपादिफलम् । प्रथमादिभावफलम् । प्रथमादिद्वादशभावस्य फलम् । धनमूल्यादिकोष्ठीफलम् । तन्वादिभावनिरूपणम् । शुभाशुभ-

देहशुद्धिनिरूपणम् । विष्णोर्योगकथनम् । पञ्चस्कन्धनिरूपणम् । सिंहासनादियोगकथनम् । आच-मनम् । गुर्वादिनिरूपणम् । चरणधर्मनिरूपणम् । सदाचारधर्मनिरूपणम् । वर्णाश्रमनिरूपणम् । तत्त्वार्थश्रमनिरूपणम् । मेरुपर्वतादिनिरूपणम् । आचमनादिकर्मनिरूपणम् । तत्त्वार्थश्रमा-निरूपणम् । पञ्चसरानिरूपणम् । पञ्चसरामते चातुर्मास्यम् । योगिनीद्वादशनिरूपणम् । तत्त्वात्प्रत्यन्तरद्वादशनिरूपणम् । चातुर्वर्ण्यनिरूपणम् । तीर्थश्राद्धनिरूपणम् । गुरोरष्टवर्णमते पुण्यादि-मतनिरूपणम् । नष्टकोष्ठीज्ञानम् । चतुर्दशकोष्ठीनिरूपणम् । शयनादिकालमानिरूपणम् । ज्ञानयज्ञनिरूपणम् । आशयशुद्धिनिरूपणञ्च ।

---

**No. 395.** सत्क्रियासारदीपिका. Substance, country-made paper, 13 × 4 inches. Folia, 49. Lines, 7 on a page. Extent, 1,000 çlokās. Character, Bengali. Date, ? Place of deposit, District Vāṅkuḍā Kucekol, Bābu Yogīndranātha Siṁha Deva. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ।

प्रणम्य सच्चिदानन्दं जगतां चैतन्यमीश्वरम् ।
श्रीकृष्णपरमानन्दमनन्याभीष्टदायकम् ॥
वक्ष्ये श्रुतिस्मृत्यादीनामनन्यानां विशेषतः ।
सत्क्रियासारदीपिकां तां विचार्य हृदि पद्धतिम् ॥
श्रीमद्गोपालभट्टोऽयं साधूनामाज्ञया क्रमम् ।
भगवद्धर्मरक्षार्थं भक्तानां वैदिकी तु या ॥
कृता याज्ञिकवर्येण श्रीमद्भट्टेन या कृता ।
श्रीमद्गोविन्दानन्देन कविनामा पद्धतिः कृता ॥
श्रीनारायणभट्टेन कर्मठानान्तु वैदिकी ।
भट्टश्रीभवदेवेन छन्दोगानान्तु या कृता ॥
वर्णाश्रमाश्रयजादीनां वेदैः पौराणिकादिभिः ।
मन्वादिधर्मशास्त्रोक्तैर्वचनैः सप्रमाणकैः ॥
श्रीमद्गोविन्दभक्तानां वैष्णवानामपराधतः ।
यथा तथा कृता किन्तु पितृदेवार्चनं विना ॥
अन्यपरमन्यकारवत् पन्थकर्तृत्वेनाश्रादिधन्य समाम दातुमनुचितम् । यथा,—
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ।

इति दोषश्रवणभयात्। तथापि सपूर्व्वाणां साधूनामाज्ञया नाम इत्यम्। श्रीमद्गोपालभट्टनामायं कोऽपि जीवः श्रीमद्गोपालभट्टेनेति ज्ञापितम्। श्रीकृष्णचैतन्यचरणारविन्दमकरन्दसततपायिनेन सदैव साधुभिर्देयमयमसौति भावः। एवं विशिष्टोऽहं श्रीकृष्णं प्रणम्य श्रीकृष्णशब्दार्थः पुरैव व्याख्यातः। किं विशिष्टं सच्चिदानन्दं गुणातीतानिर्व्वचनीयपरमानन्दैश्वर्य्यवपुरूप-स्वरूपं अतएव जगतां सेव्यं। इत्ययं भावार्थः॥ इत्यादि॥

**End.** ततोऽपरे श्रीमन्नारायणस्य श्रीमत्कृष्णादिविविधावतारोपासकाः। तत्तन्निज-निजसेवकपार्षदत्वेन तेषां तेषां तान् तान् पार्षदभक्तान् प्रपूजयेयुः। अयं भावार्थः।

**Colophon.** अतःपरं खण्डितम्॥

**विषयः।** वैष्णवानां अन्यकर्म्मत्यागविधिनिरूपणमुखेन व्याख्यासहित-वैष्णवकर्म्मादि-निरूपणम्।

---

**No. 396.** सदाशिवसंहिता. Substance, country-made paper, 12×2½ inches. Folia, 12. Lines, 8 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Vāṅkuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो रामचन्द्राय।

श्रीमुनय ऊचुः।

श्रुतमस्माभिरीशान रहस्यं परमाद्भुतम्।
इदं विश्वं कथं जातं सौमित्रे वद तत्त्वतः॥

सौमित्रिरुवाच।

शृणुध्वं मुनयः सर्व्वे रहस्यं ऋषिसत्तमम्।
यथादौ परिसम्भूतं यस्मिन्नेव प्रलीयते॥
कहैलासे परं धाम्नां संवादं समभूत् किल॥ इत्यादि

**End.** गोलोके नियतं वासं सत्यं सत्यं वदाम्यहम्।
देवैरपि दुराधर्षाः क्रियदक्षमवैरपि॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
चटनं सर्व्वतीर्थेषु प्रदानं सर्व्वसम्पदाम्॥

एतदि ध्यानयोगस्य कर्त्ता नार्हन्ति योकृतीव् ।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च ।
कोटिकोटिसहस्राणि उपपापानि यान्यपि ॥
सर्व्वाण्यपि प्रणश्यन्ति रामधामविलोकनात् ॥ ॰ ॥

**Colophon.** इति सदाशिवसंहितायां शिवशक्तिसंवादे श्रीरामानुजश्रुतिसंवादे श्रीलोकवर्णनं नाम द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

विषयः । प्रथमाध्याये रामानुजश्रुतिसंवादेन शिवलोकवर्णनादिः । द्वितीयाध्याये श्रीलोकवर्णनादिश्च ॥

---

**No. 397.** सद्वैद्यमालावलिः. By जगन्नाथगुप्तकवीन्द्रः. Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 9 on a page. Extent, 125 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Gāupāḍā grāma, Bābu Rājakumāra Dāsa. Appearance, new. Verse. Generally correct.

**Beginning.** नमो गणेशाय ।
आधारादिगुणालीनां प्रतप्तकनकद्युतिम् ।
नमामि कुलरामाख्यां सानन्दं कुलदेवताम् ॥
नरावंशोद्भवा वैद्या येऽन्यापि च नरोद्भवाः ।
ये च भावान्तरं प्राप्ताश्चतस्त्रो समाश्रिताः ॥
तत्रयी येनराकान्तु मतिर्येषां न विद्यते ।
तेषां सद्वैद्यसद्भावज्ञानाय वसु कथ्यते ॥
आदौ पूर्व्वक्रमेणैव दुविवंशो निगद्यते ।
नवविद्युमाधवाच दुर्विवंशसमुद्भवाः ॥
नवसेनस्य तनयौ श्रीधरो हरिवंशकः ।
श्रीपतिरजुपत्याख्यो श्रीधरस्य सुतावुभौ ॥ इत्यादि ।

**End.** धनेन यो शिवमंशः कुवेरापि न वर्धितः ।
स एव साध्वी विज्ञेयो भुवनमण्डलंशकी ॥
शिवम्वरः कामदपंशवन्द्र-
मविश्वरूपोऽभवनि कामुकुशः ।

तस्यात्मजोऽभूद्वनमालिगुप्तः
पुत्रेषु यस्तो वनमालिभक्तः ॥
ततोऽभवत् कार्पण्डिनामधेयः
सुतः पवित्री मदनस्ततोऽभूत् ।
सुतोऽभवत् तस्य सुतः प्रतिष्ठः
ख्यातो जगन्नाथ इति प्रसिद्धः ॥
सुधाकरस्तस्य सुतः सुदन्तः
सुधाकरवत्कुलकैरवेषु ।
पुत्रौघतुल्योल्लसकायुवंशः
क्षितिं ततोऽभूत्+ + +रिवांशः ॥
सुधाकरस्यापि सुतः सुशीलो
मृत्युञ्जयः प्राज्ञमतिर्बभूव ।
तस्यात्मजोऽभूत् कविराजसंज्ञो
विद्वद्वरोऽभूदपि राघवाख्यः ॥
सुतोऽभवत् तस्य च रामभद्रो
विद्वद्गणेन्द्रः कविचन्द्रसंज्ञः ।
उदारबुद्धि+ +पुण्यकर्मा
तस्यात्मजोऽभूच्छिवनाथनामा ॥
तस्यात्मजः कृष्णमतेः सुशीलः
ख्यातो जगन्नाथ इति क्षितौ यः ।
तेन प्रतेने भिषजां समासात्
सद्वैद्यजानां सदसद्विचारः ॥

**Colophon.** इति श्रीजगन्नाथगुप्तकवीन्द्रकृतसद्वैद्यभावावलिः समाप्ता ॥

**विषयः ।** अम्बष्ठकुलजातानां केषाञ्चित् सद्वैद्यानां वंशावलिकथनम् । तत्र तेषां सद्-सद्भावप्राप्तिकथनञ्च । अथ दुहिवंशकथनम् । दुहिवंशजातस्य गणसेनतनयस्य श्रीधरसेनस्य वंशकथनम् । विष्णुसेनवंशवर्णनम् । माधवसेनवंशवर्णनम् । विनायकसेनवंशवर्णनम् । कमल-सेनवंशवर्णनम् । विकर्त्तनसेनवंशवर्णनम् । वल्लभद्रसेनवंशवर्णनञ्च । अथ दासवंशवर्णनम् । तत्र नारायणदास-शिवदास-अरविन्ददास-जयदासानां वंशादिवर्णनञ्च । अथ त्रिपुरगुप्तवंशादि-कथनम् । कायगुप्तवंशादिवर्णनञ्च ॥ इति ।

---

**No. 398.** सन्तानद्वादशीव्रतम् . Substance, palm-leaf, 13 × 1½ inches. Folia, 9. Lines, 2 on a page. Extent, 50 çlokas. Character, Bengali. Date, ? Place of deposit, Vidyākūṭa Tripurā, Bābu Kedāranātha Bhaṭṭācāryya. Appearance, new. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ सन्तानद्वादशीव्रतम् । तत्र प्रथमं सूर्य्यार्घं दत्त्वा स्वस्तिवाचनपूर्व्वकं संकल्पं कुर्य्यात् विष्णुरोमित्यादि ।

**End.** इदं सन्तानकं नाम याः करिष्यन्ति भक्तितः ।
अवैधव्यन्तु सौभाग्यं लभन्ते सन्ततिं शुभाम् ॥

**Colophon.** इति सन्तानद्वादशीव्रतकथा समाप्ता ।

**विषयः ।** शुभसन्तानादिलाभकारकव्रतविशेषसाधननियमादिकथनम् ।

---

**No. 399.** सम्बन्धविवेकः . By भवदेवभट्टः Substance, country-made paper, 14 × 3 inches. Folia, 12. Lines, 6 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Kātihāli, Paṇḍita Rājakṛṣṇa Nyāyabhūṣaṇa. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । अथ सम्बन्धं विवेचयिष्ये । तत्र मनुः ।
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥
या मातुः सपिण्डा न भवति सा दारकर्म्मणि दारत्वसम्पादके कर्म्मणि तथा मैथुने मिथुनसाध्येऽग्न्याधानादौ पुत्रोत्पत्तौ च प्रशस्तेति सम्बन्धः । इत्यादि ।

**End.** सर्व्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः ।
अयन्तूक्तविधिर्ज्ञेयो विवाहे तु व्यतिक्रमः ॥
व्यतिक्रम इति प्रत्यङ्मुखः सम्प्रदाता ग्रहीता प्राङ्मुखः । उक्तम्,—
प्राङ्मुखायाभिरूपाय वराय शुचिसन्निधौ ।
प्रत्यङ्मुखस्तु दाता वै कन्यां दद्यात् स्वलङ्कृतामिति ।

**Colophon.** इति भवदेवभट्टकृतः सम्बन्धविवेकः समाप्तः ॥ * ॥

**विषयः ।** विवाहसम्बन्धविचारादिमुखेन सपिण्डादिनिरूपणम् । उद्वाहादिनिरूपणञ्च ।

---

**No. 400.** **सम्मोहनतन्त्रम्.** Substance, country-made paper, 10×8 inches. Folia, 44. Lines, 12 on a page. Extent, 1,800 çlokas. Character, Nāgara. Date, ? Place of deposit, Govardhana Sarāi Benares, Paṇḍita Bindhyeçvariprasāda Dube. Appearance, old. Verse. Generally correct.

**Beginning.**

ॐ नमः श्रीमद्गुरुमूर्त्तये ।
साकारत्वं निराकारज्ञानधामस्वरूपिणे ।
देवानां देवदेवाय तस्मै श्रीगुरवे नमः ॥
देव्युवाच ।
देवदेव महादेव सर्व्वसिद्धिप्रवर्त्तक ।
त्वत्तः श्रुतं मया सर्व्वं रहस्यातिरहस्यकम् ।
इदानीं देवदेवेश रहस्यमपरं विभो ॥
शिव उवाच ।
रहस्यातिरहस्यञ्च कथं त्वयि निवेद्यताम् ।
तथापि तव सङ्गतया रहस्यमपि कथ्यते ॥
काली तारा छिन्नमस्ता सुन्दरी बगला रमा ।
मातङ्गी भुवना सिद्धविद्या च भैरवी तथा ॥
धूमावती च दशमी महाविद्या दश स्मृताः ।
चक्रेश्वरी षडुग्रामा त्रिपुटादिप्रयोगतः ॥
त्रयोदश महाविद्याः प्रयुञ्ज षोडशी शिवे ।
दश पूर्व्वास्तु संस्थाप्य मन्त्रदुर्गाश्च शूलिनीम् ॥
चामुण्डां महाविद्यां त्रैलोक्यविजयाभिधाम् ।
वाराहीमन्त्रपूर्वाश्च कलासंख्या प्रकीर्त्तिता ॥
महाकालमते देवी एकपञ्चाशदीरिता ।
महालक्ष्मीं समारभ्य महाकालकलात्मकम् ।
विद्यासंख्या मया प्रोक्ता चितयं पूर्व्ववत् भवेत् ॥ इत्यादि ।

**End.**

चत्वारिंशत्प्रभेदेन मन्त्रराजस्य जातयः ।
पूर्व्वक्रमेण संसाध्य दुष्टानेतान् विनाशयेत् ॥
गोपनीयं गोपनीयं गोपनीयं पुनः पुनः ।
रहस्यातिरहस्यञ्च रहस्यातिरहस्यकम् ।
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥

**Colophon.** इति श्रीमद्योमतारारामकारे संजीवमतमें द्वितीयखण्डे श्राद्धवाणिवर्णने दशमः पटलः ।

**विषयः ।** पीठवारीप्रभेदेन लिपिभाषाप्रभेदेन च ब्राह्मणानां विंशतिभेदविद्यापीठनिर्णयः । पुण्यनिर्णयः । गौड़ादिदेशभेदे तन्त्रादिभेदनिरूपणम् । दशमहाविद्यानिरूपणम् । यन्त्रभेदादिनिर्णयश्च ॥

---

**No. 401.** सर्व्वतोभद्रचक्रटीका. By गौरीकान्तचक्रवर्त्ती. Substance, country-made paper, 12 × 3½ inches. Folia, 5. Lines, 10 on a page. Extent, 175 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, very old. Prose and verse. Generally correct.

**Beginning.** ॐ नमः गौर्य्यै नमः ।

अथातः सम्प्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम् ।
विख्यातं सर्व्वतोभद्रं सद्यः प्रत्ययकारकम् ॥
ऊर्द्ध्वगं दश विन्यस्य तीर्य्यगेवाथवा दश ।
एकाशीतिपदं चक्रं जायते नात्र संशयः ॥
अकारादिस्वराः कोष्ठे ईशादि विदिक्षु क्रमात् ।
दक्षिणमार्गेण दातव्याः षोडशैव चतुर्थकम् ॥ इत्यादि ।

**End.** वर्त्तमानेति ग्रहादीनां वर्त्तमाने शून्ये शोधितषट्चक्रक्रमेण विंशत्यंशकस्पर्शया नक्षत्रे ग्रहति कृपणे नक्षत्रे वर्त्तते इत्यर्थः । देशध्वंसा इत्यादि सर्व्वं सुगमम् ॥

**Colophon.** इति सर्व्वतोभद्रचक्रटीका गौरीकान्तचक्रवर्त्तिकृता समाप्ता ॥ • ॥

**विषयः ।** तन्त्रोक्तस्य सर्व्वतोभद्रचक्रादेर्व्याख्यानम् ।

---

**No. 402.** सापेक्षवादः. Substance, country-made paper, 11 × 2 inches. Folia, 3. Lines, 7 on a page. Extent, 40 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Pilkhānā. Vāḍḍānagara, Paṇḍita Kailāsacandra Tarkaratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो दुर्गायै । समासघटकपदोपस्थाप्येन समासाघटकपदार्थस्य नान्वयः । आकाङ्क्षाविरहात् । अतएव ऋद्धस्य राजमातङ्गा इत्यादौ ऋद्धादिपदार्थस्य राजादौ योग्यतासत्त्वेऽपि नान्वयः । यद्यपि तत्तृसमभिव्याहार-

कपाकाङ्क्षा सम्भवति तथापि समभिव्याहारमात्रं नाकाङ्क्षा । अपित्वन्वय-बोधविशेषे पदविशेषयोः समभिव्याहारः । इत्यादि ।

**End.** ननु कथमिदमुक्तं यावता गर्भस्थस्य कर्मणो धात्वर्थेऽभिनिवेशात् धातो-रकर्मता । यथा वक्ष्यं स्पष्टयति । वक्ष्यति ॥

**Colophon.** सापेक्षवादः समाप्तः ।

**विषयः ।** सापेक्षत्वेऽपि गमकत्वात् समास इति न्यायस्य स्वरूपादिविवेचनम् ।

---

**No. 403.** सारनिर्णयः. By रमाकान्तचक्रवर्त्ती. Substance, palm-leaf, $17 \times 1\frac{1}{2}$ inches. Folia, 30. Lines, 3 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Vaidyervāzār, grāma Candrakīrtti, Paṇḍita Rajanīkānta Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

काशीशचरणाम्भोजं चतुर्वर्गफलप्रदम् ।

नत्वा वक्ष्यामि यत्नेन स्फुत बोधविनायकम् ॥

अर्थवद्धातुरप्रत्ययः प्रातिपदिकम् । धातुभिन्नं प्रत्ययभिन्नं यदर्थवत् तत् प्रातिपदिकसंज्ञं भवति अभिधेयनिष्ठनिप्रयोजनधर्मेषु यथाप्यर्थशब्दस्तथा-प्यभिधेयवचनोऽर्थशब्दो गृह्यते । अभिधेये निष्ठ्याद्गौणाम्नभावात् । यत्-प्रयोगे यत् प्रतीयते स तस्यार्थः । तथाचोक्तम् ।

शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपद्यते ।

तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थसंज्ञया ॥

स चार्थश्चतुर्धा भिद्यते जातिद्रव्यगुणक्रियेति । तथाचाह ।

शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः ।

चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः ॥

स्वार्थो जातिद्रव्यगुणक्रियास्वरूपभेदात् पञ्चविधः स्वार्थो विशेषणार्थानुसन्धाने हव इत्यादि उदाहरणं विशिष्टार्थबुद्धिं प्रति विशेषणार्थस्य कारणत्वात् । तथाच । नागृहीतविशेषणा बुद्धिर्विशेष्येषूपजायते । तथाच जातौ हवः जातिरत्र विशेषणं प्रति निमित्तभूतं हवत्वम् । नित्यमनेकसमवेतञ्च सामान्यं जातिः । गुणः सत्त्वगो धर्म्मः यथा पटस्य शुक्लो गुणः । क्रिया धात्वर्थः साध्यरूपा तथाच सिद्धं कारकं साध्या क्रिया यथा पचतुः पाकः ।

प्रश्नं गुणाश्रयः यथा दण्डिनो दण्डः । स्वरूपमजात्यालम्बनमाधारवरूपं यथा शिलाया शिलत्वम् । पर्यवद्प्रत्ययधातिति षिवे वत् नन्वद्वयकरणं तत् तत्पुरुषनिरासार्थम् ॥ इत्यादि ।

**End.** तस्यापत्यं । तस्येति षष्ठ्यन्तमनुकीर्णं सुप्रपञ्चमीनिर्देशः । षष्ठ्यन्तादपत्येऽभिधेयेऽण् भवति । न पतति वंशो येन जातेन तदिदमपत्यं प्रकृत्यर्थो विशेषणं प्रत्ययार्थो विशेष्यः उपगोरपत्यं औपगवः । एको गोत्रे । गोत्रे वंशेऽभिधेये एक एव प्रत्ययो भवति न द्वितीय इत्यर्थः एतत् सूत्राभाव औपगवस्यापत्य मित्यर्थे प्रत्ययः कथं न स्यात् । सत्यं एकेनैवापत्यार्थस्य प्रतिपादितत्वात् कथमपरः प्रत्ययः । कथं गार्गीयणः एवं वात्स्यायन इति एकेनापत्यार्थप्रतिपादितत्वात् पुनः प्रत्ययविधानं प्रशंसार्थमापादयतीति । तेन युक्तं रागात् । रज्यतेऽनेनेति रागः रागवाचिनः शब्दात् तेन युक्तमित्यर्थेऽण्प्रत्ययो भवति । कुसुम्भेन रक्तं कौसुम्भं वस्त्रम् । ... ... ... ... ... ... ... ... ... ... तस्य समूहे । षष्ठ्यन्तात् समूहेऽर्थेऽण्प्रत्ययो भवति । वायसानां समूहो वायसं काकमित्यादि ।

**Colophon.** इति मधुसूदनतर्कवागीशात्मज श्रीरमाकान्तचक्रवर्त्तिविरचिते सारनिर्णये तद्धितप्रकरणीयपरसूत्रार्थविवेचनं समाप्तम् ॥

विषयः । कलापे नाम-कारक-समास-तद्धितप्रकरणानां न सन्ति सम्यक् परिस्फुटानि सूत्राणीत्यनेनात्र सारनिर्णये पाणिन्यादिव्याकरणोक्तसूत्राणां विवेचनं कृतम् । तत्र प्रथमे नामप्रकरणम् । द्वितीये विस्तरेण कारकप्रकरणम् । तृतीये समासप्रकरणम् । चतुर्थे संक्षेपतस्तद्धितप्रकरणञ्च ॥

---

**No. 404.** सारस्वतप्रदीपः. By विद्याभूषणः. Substance, country-made paper, 14 × 2½ inches. Folia, 47. Lines, 4 on a page, Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Durgāsundara Kṛtiratṇa. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य देवदेवाय बालानां सुखहेतवे ।
सारस्वतप्रदीपोऽयं पद्यैः संरच्यते मया ॥
अकारादिक्षकारान्ताः सिद्धवर्णाः प्रकीर्त्तिताः ।
एतद्गुणादिसंज्ञाया विधानार्थमिहोदितम् ॥

आद्यन्ताभ्यामिमे याभ्यां प्रत्याहारं विहृष्यता ।
वक्ष्यमाणक्रमेणैव ते तथोक्ताः पुरातनैः ॥ इत्यादि ।

**End.** पुनर्णवा-शुभ्नाति-क्षुभ्नतः ।
नरीनृत्येत नर्त्तर्ति प्रख्यातं चन्द्रगोमिना ।
वरिनाथो विप्रयूना दौर्भागिनेय इत्यपि ॥
आवयूना स एव वाक्येनेत्याकृतिगणः स्मृतः ।

**Colophon.** इति श्रीविद्याभूषणविवृतौ सारस्वतप्रदीपे नामविवृतिर्द्वितीयः प्रकाशः ।

**विषयः ।** सारस्वतव्याकरणस्य टीका ।

---

**No. 405. सिद्धान्तदीपः.** Substance, country-made paper, 13 × 3 inches. Folia, 28. Lines, 6 on a page. Extent, 700 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Candrakānta Vidyāratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः सरस्वत्यै ॥ अथ शब्दप्रमाणं निरूप्यते । तत्र भ्रमप्रमादविप्रलिप्सा-रहितेन पुरुषेण प्रयुक्तं वाक्यं प्रमाणम् । तत्र भ्रमोऽतत्त्वप्रकारकं ज्ञानम् । प्रमादो अनवधानता । विप्रलिप्सा प्रतारणेच्छा एभिः प्रयुक्तं वाक्यन्तु न प्रमाजनकं किन्त्वप्रमाजनकमेव ॥ इत्यादि ।

**End.** किन्तु सर्व्वनाम्नो व्यावर्त्तकत्वाभावादारोपस्योत्कटत्वेन साध्यवसानत्वं अध्यव-सानमुत्कटरूपं अनयोर्लक्षणयोः सादृश्यसम्बन्धहेतुकत्वे गौणीलक्षणाहेतु-कत्वं यथा गौर्व्वाहिको गौरयमित्यत्र । सम्बन्धान्तरहेतुकत्वे तु शुद्धलक्षणात्वं यथा आयुर्घृतमायुरिदमिदमिति ॥ * ॥

**Colophon.** समाप्तोऽयं सिद्धान्तदीपः ॥ * ॥ श्रीदुर्गा शरणम् ।

**विषयः ।** शब्दप्रमाणनिरूपणमुखेन शक्तिप्रकारादिनिरूपणम् । शब्दबोधविशेष्यविशेषण-भावकथनम् । नञर्थविचारः । एवकारव्युत्पत्तिविचारः । सति सप्तम्यर्थनिरूपणम् । क्त्वाप्रत्य-यार्थविचारः । आख्यातवाच्यनिर्द्धारणवाक्यव्युत्पत्तिलक्षणादीनां निरूपणञ्च ।

---

**No. 406. सिद्धान्तरत्नम्. (सटीकम्) By बलदेवविद्याविभूषणः.** Substance, country-made paper, 12 × 4 inches. Folia, 128. Lines, 12 on a page. Extent, 3,000 çlokas. Character, Nāgara. Date, Samvat 1947. Place of deposit, Hātuā Mahārājā's Library. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमः कृष्णाय ।

वेदस्तथा स्मृतिगिरो यमचिन्त्यशक्तिं
सृष्टिस्थितिप्रलयकारणमामनन्ति ।
तं श्यामसुन्दरमविक्रियमात्ममूर्त्तिं
सर्व्वेश्वरं प्रणतिमात्रवशं भजामः ॥ इत्यादि ।

**टीकायाः ।** श्रीगणेशाय नमः । श्रीश्यामसुन्दरो जयति । ॐ नमः पूर्णप्रमितये गोविन्दाय । यस्य श्रीनन्नामपीयूषवर्षैरासीद्विश्वं भूततापं किलैतत् । इत्यादि ।

**End.** आनन्दतीर्थप्रभवमच्युतं मे
चैतन्यभास्वत्प्रभयातिफुल्लम् ।
चेतोऽरविन्दप्रियतामरन्दं
पिबत्यलिः सच्छविनस्त्ववादः ॥ ३९ ॥

**Colophon.** इति सिद्धान्तरत्नाख्ये भाष्यपीठके पुरुषार्थनिर्णयोऽष्टमः पादः ॥ ८ ॥

**टीकायाः ।** इति श्रीगोविन्दभाष्यपीठकटिप्पण्यामष्टमः पादो व्याख्यातः ॥ ८ ॥ लिख्यते राधामोहनव्रजवासिना मया मिते फाल्गुणमासे मासोत्तमे शुक्लपक्षे सोमवारे सम्पूर्णम् । सम्वत् ॥ १९४० ॥

**विषयः ।** प्रथमपादे, सुखप्राप्तिदुःखपरिहारयोर्लोकप्रवृत्तिदर्शनात् केनोपायेन तौ निष्पद्येते इत्यादि निरूपणप्रसङ्गेन, प्रकृतिपुरुषविवेकादेव त्रिविधदुःखनिवृत्तिर्भवतीति श्रुति-स्मृति पातञ्जल-गौतमादिमतैः निर्णयः । अपिच केन प्रकारेण प्रकृतिपुरुषविवेको जायत इत्यस्यापि नानाविधविचारपूर्व्वकं स्थापनम् । अस्य च प्रथमपादस्य "परमपुरुषार्थोपायनिर्णय इति" नाम ॥ द्वितीयपादे च, भगवत्प्राप्तिविषये साक्षात् साधनीभूतयोर्ज्ञानभक्त्योरैश्वर्य्यमाधुर्य्यविषयत्वरूपेण द्वैविध्यनिर्व्वाचनम् । एवं के भक्त्या के चापि ज्ञानेन भगवन्तं प्राप्ता इत्यस्यापि विचारपूर्व्वकं निर्व्वाचनम् । भगवतश्चैश्वर्य्यादिनिरूपणञ्च । अस्य च द्वितीयपादस्य भगवदैश्वर्य्यादिनिर्णय इति नाम ॥ तृतीये च पादे, भगवान् सर्व्वेश्वरः जन्मादिविकारशून्य इत्यादीश्वरतत्त्वनिरूपणम् । तस्य च श्रुत्यादिप्रमाणप्रदर्शनपूर्व्वको विचारः । एवं नानारूपमाश्रित्य भगवान् लोकपालनाय पृथिवीमवतीर्णः सन् केन केन नाम्ना भक्तैराहूत इत्यस्यापि निर्व्वाचनम् । एव"मेको ह वै नारायण आसीन्न ब्रह्मा न च शङ्कर" इत्यादिश्रुतिमाश्रित्य विष्णुपरमत्वसिद्धिश्च । अस्य च तृतीयपादस्य विष्णुपारम्यनिर्णय इति नाम ॥ चतुर्थे च पादे, ब्राह्मणो हि भगवतो मुखं, बाहुश्च क्षत्रियः, वैश्यो ऊरू, पादद्वयाच्च शूद्राः समजायन्त इत्यादिकथनम् । स एव भगवान् विष्णुः समस्तस्यास्य जगतः सृष्टिपालने संहारञ्च करोतीत्यादीनां श्रुत्यादिप्रमाणप्रदर्शनेन निरूपणम् । परब्रह्मणोऽपि सगुणत्वनिर्गुणत्वनिर्व्वाचनं कृत्वा वेदस्य नित्यत्वस्थापनञ्च । अस्य च चतुर्थपादस्य

"विष्णोः सर्व्ववेदवेद्यत्वनिर्णय इति" नाम । पञ्चमपादे तु, जीवात्मनोऽप्यात्मादेव प्रपञ्चस्य च प्रपञ्चस्य चाद्वैतज्ञाननिवर्त्तनीयत्वमित्यादीनां विचारः । एवं द्वैतमतस्य प्रतिषेधादिविचार-पूर्व्वकाद्वैतज्ञानोपायनिर्णयश्च । अस्य च पादस्य "केवलाद्वैतनिरास" इति नाम । षष्ठपादे च, जीवात्मा हि समुचलदृष्टायामेव समस्तानि कर्म्मफलानि भुनक्ति । मोक्षे तु जाते जीवात्मनि गुणसंसर्गाभावात् परमानन्दब्रह्मभावप्राप्तिर्भवति । इत्यादीनां विचारमुखेन वेदादिप्रमाण-प्रदर्शनम् । एवं निराकारपदवीयश्रुत्यादीनामन्यविषयत्वाच्छया स्वपक्षोपयोगित्वस्थापनं प्रकारान्तरेण केवलाद्वैतनिरूपणञ्च । अस्य च पादस्य विधान्तरेण केवलाद्वैतनिरास इति नाम ॥ सप्तमा-ष्टमयोस्तु पादयोः, पुरुषार्थनिर्णय एव विषयः ॥ बलदेवविद्याविभूषणनामा कश्चिद्विपश्चिद्ब्रह्म-सूत्रेषु गोविन्दभाष्याभिधानं विवरणं निर्माय बहुलविषयत्वात् तस्य दीर्घाकारत्वं विचिन्त्य तदुपवेशाय सर्व्वपीठं निर्म्मातुमिच्छुः स एव सिद्धान्तरत्नाख्यं पीठकं निर्म्ममे इत्यस्य विशेष-विवरणमिति ।

---

**No. 407.** सिद्धान्तरत्नाङ्कुरः. By शिवरामः. Substance, palm-leaf, 17×1 inches. Folia, 161. Lines, 3 on a page. Extent, 3,500 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Rāṇinagara, grāma Kuṇḍā, Paṇḍita Rāmacaraṇa Nyāyālaṅkāra. Appearance, tolerable. Prose. Correct.

**Beginning.** नमो गुरवे ।

प्रणम्य सर्व्वज्ञपदारविन्दं
गुरोश्च यत्नाच्छिवरामधीरः ।
कातन्त्रशेषाब्धिषु सन्निगूढं
सिद्धान्तरत्नाङ्कुरमातनोति ॥
क्व ममाणीयसी बुद्धिः श्रीपतेर्वचनं क्व वा ।
तथाप्यत्र प्रवृत्तस्य कारणं शङ्करस्तुतिः ॥
गोपीनाथादिविदुषां निबन्धाः सन्ति यद्यपि ।
तथापि मन्दबुद्धीनां बोधनाय ममोद्यमः ॥

ग्रन्थारम्भे विघ्नविघाताय कृतं परिसमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति संसारेति । अस्यार्थः । हरिं नत्वा कातन्त्रपरिशिष्टं ब्रूम इत्यन्वयः । कातन्त्रशब्दः कौमारव्याकरणे रूढः । परिशिष्यते यत् तत्परिशिष्टम् । इष्टा-नमादिकार्य्यम् । कातन्त्रस्य परिशिष्टमिति अवयवावयविसम्बन्धे षष्ठ्याः

समासः। कातन्त्रावयवभूतं परिशिष्टमित्यर्थः। यद्यपि तत्तत्प्रयोगेषु इत्या-गमादयः सिद्धा एव तथापि प्रकृतिप्रत्ययादिभिः प्रतिपदं गोत्रमिति सूत्रादिना निरुप्यन्ते इति न दोषः। इत्यादि।

**End.** अथ परे'भनविरिते द्वितीयादयः इदाख्यातसमासादिभिरविरिते प्रथमे-त्युक्तम्। भवन्तते तदभावात् प्रथमा न प्राप्नोतीति परिशिष्टमतामित्याह। नाप्नोति। अशिवेषु वृत्त्यतिषूक्तेषु साधनानि उपाया युज्यन्ते न कदाचि-त्रिष्यन्तेषु इति भावः॥ यथा दृष्टं तथा लिखितमिति।

**Colophon.** (आदर्शेऽस्मिन् परिसमाप्तिसूचकं वाक्यं नोपलभ्यते)

**विषयः।** श्रीपतिदत्तकृतकातन्त्रपरिशिष्टस्य व्याख्यानम्।

---

**No. 408. सुपद्ममकरन्दः.** Substance, country-made paper, 16 × 3 inches. Folia, 23. Lines, 7 on a page. Extent, 600 çlokas, Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, tolerable. Prose. Generally correct.

**Beginning.** अधातुविभक्त्यर्थवदित्यादि। सुबादयो धातवो विभक्तयः सुप्तिङश्च। प्रत्ययानान्तु सुपस्तिदेशः सर्व्वनामकार्य्यं प्रत्येव। इह धातुश्च विभक्तिश्च इति समाहारद्वन्द्वगर्भो नञ्तत्पुरुषो बहुव्रीहिर्वा न पुनर्धातोर्विभक्ति-रिति षष्ठीतत्पुरुषः। इत्यादि।

**End.** नक्षत्राधिकरणे तृतीयासप्तम्यौ भवतः। पुष्येणेति। पुष्येण युक्तः कालः। युक्तः कालो नक्षत्रादित्यण्। लुबविशेषे तस्यैवाणो लुप्। एवं मघासु कृत-निर्व्वापः पितृभ्यो 'मां वयसर्ब्बयदिति भट्टिः लुबिति किं मघासु यवः। नक्षत्रेति किं पञ्चालेषु वसति॥ *॥

**Colophon.** इति सुपद्ममकरन्दे षष्ठो बिन्दुः॥

**विषयः।** सुपद्मव्याकरणस्य विभक्तिप्रकरणस्य टीका।

---

**No. 409. सुबन्तदुर्घटः.** Substance, country-made paper, 13 × 2½ inches. Folia, 17. Lines, 9 on a page. Extent, 450 çlokas. Character, Bengali. Date, ? Place of deposit, District Vāँkuḍā Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

